प्रतिबिम्बमस्ति, तथा प्रतिज्ञा कृतास्ति यो मत्प्रश्नचतुष्टयस्य निर्णयो विधास्यति तमहं वरिष्ये इति । तदाकर्ण्य नृपेण वाणी देवी आराध्य प्रसन्नीकृता । साऽवदत्—वत्स ! त्वत्कन्याशोभाजितरतिका त्वत्पुत्रप्रश्ननिश्चयं करिष्यति. ततः कृतकृत्यो नृपस्तत्पुरे स्वयंवरमण्डपमाविरचत् . सापि सखीभिर्वृता श्रीदेवीव तत्र प्राप्ता तदाज्ञया प्रतिहारी सर्वान् नृपान् प्राह—कथयत यूयं प्रश्नचतुष्टयस्य निर्णयं—

"को देवः को गुरुः किं च, तत्त्वं सत्त्वं च कीदृशम्। स्फुटीकर्त्ताऽर्हति स्पष्टं, कलावत्या वरस्तु सः॥१॥"

सर्वे स्वबुद्ध्योत्तरं ददुः, परं सा नैव मेने, तदा शङ्खः स्वहस्तपुत्तलीमुखेनोत्तराण्यवक्त—

"वीतरागः परो देवो, महाव्रतधरो गुरुः । तत्त्वं जीवादयो ज्ञेयाः, सत्त्वं चेन्द्रियनिग्रहः ॥ १ ॥"

तदाकर्ण्य तूर्यध्वनिपूर्वं सत्यं सत्यमित्युक्त्वा तया तत्कण्ठे वरमाला निक्षिप्ता. ततः कलावत्या सह स्वपुरमाययौ. क्रमेण सा गर्भवती जाता । तद्वार्त्तां तद्भ्राता विजय नामाऽऽज्ञातुं स्वकुलकल्पोऽङ्गदद्वयं प्रेषितं, सापि तेनैतत्केयूरद्वयं धृत्वा मुमुदे । तान् विसृज्य स्वयं ते अङ्गदे भुजयोर्बबन्ध, ततोऽन्याः स्वसखीः प्राह—येनेदं प्रेषितं तस्योपरि मम महान् स्नेहोऽस्ति, स चिरायुर्भवतु, तदाकर्ण्य गवाक्षस्थेन नृपेण श्रुतं. दीप्तक्रोध इत्थमचिन्तयत्—

"अन्तर्विषमया ह्येता बहिरेव मनोहराः । गुञ्जाफलसमाकारा योषितः केन निर्मिताः ॥ १ ॥"

उक्तमपि गुरुणा, यतः शास्त्रे उक्तं तत्सत्यं—

"जलमज्झे मच्छियाणं आगासे पंखियाण पयपंति । तह महिलाचरियाणं देवा वि पारं न पावन्ति ॥१॥"

अथ कस्याहमास्यं दर्शयिष्यामि । तस्माच्चितायां देहं दहामि, इतश्चैको मुमुक्षुरुपवने देशनां तनोति । तच्छ्रवणाय नृप आययौ—

जीवाः संसारकान्तारे पूर्वकर्मवशेरिताः । वातप्रम्य[1] इव व्यर्थं भ्राम्यन्ति भ्रान्तिसंभृताः ॥ १ ॥

इति । देशनान्ते नृपेण स्वपत्नीमीलनोपायः पृष्टः, मुनिरवोचत्—त्वया दृष्टस्वप्नतो नूनं सा सूतपुत्रा पुनरुपेष्यति । ततः प्रीतः पुरं प्राप्य दत्तश्रेष्ठिनं तामन्वेष्टुमादिशत् , सोऽपि पर्यटन् तापसाश्रमे तां दृष्ट्वा प्राह—हे सुशीले ! त्वमग्नौ प्रविशन्तं पतिं रक्ष, सा स्वपुरमागता । तदा भूपो न्यंचदाननस्तत्पुरः स्वदुश्चेष्टितं निनिन्द, मिथ्यादुष्कृतं ददौ, सापि स्वकर्मफलं मत्वा सुखेन तस्थौ । एकदा ज्ञानिनं स्वप्राग्भवं दम्पती पप्रच्छतुः, मुनिर्ज्ञानदृष्ट्याख्यातुमारेभे—

पूर्वं श्रीमहाविदेहे नरविक्रमभूपस्य सुता सुलोचना, तया क्रीडार्थं एकः कीरः पञ्जरे क्षिप्तः, तमजस्रं मधुरफलैरपोषयत् , एकदा सा सकीरा सीमन्धरबिम्बं नन्तुं गता, कीरो वीतरागं दृष्ट्वा जातिस्मृत्या विराधितव्रतं पूर्वभवं ददर्श—यतो मया प्राग्भवे विहरमानसीमन्धरादिजिनानामजस्रं ध्यानं वर्णनं च कृतमस्ति, तच्चेदम्—

"पुक्खलवईए विजए पुव्वविदेहम्मि पुंडरीगिणिए । कुन्थु अरजिनान्तरम्मि जाओ सीमन्धरो भयवं ॥ १ ॥
सुव्वय जिण नमिणो अन्तरम्मि रज्जं चइत्त निक्खन्तो । सिरिउदयदेव पेढाल अन्तरं पाविही मुक्खं ॥२॥"

---

[1] हरिणविशेषाः.

सिद्धनिर्मिस्यमानानां प्रत्येकं प्रत्येकं शतकोटीमान्यः शतकोटीमानः दशलक्षः [illegible]। यतःस्मृता—
है कोडि [illegible], निम्माण जिन तीन। सहस कोडी गुणकं नमुं (नीमे), साधु नमुं निसदिन ॥ १
[illegible] नु मह्या न भुक्तेत्यादि निजगुणवर्णनतत्परः, परं क्रियाशिथिलः, प्रान्ते [illegible] कीरोऽहं जातः, मया हारितं जन्म, अतः परं सदा एनं प्रभुं नत्वाऽनुमोदये इत्य-निग्रहं जग्राह। मुखेनैना नम्रतरं तमादाय गृहमागमद्। अन्यदा शोकं समये राजसुताकरात्कुतीर दृष्टं तीर्थेशं नन्तुं जगाम, तदा तद्वियोगात्सा पुनः पुनर्विलखाप, ततो नृपाज्ञया पक्षिभिः [illegible] प्राप्तिनिजदं तं बद्ध्वा राजसुतायै दत्तः, सा तज्जनितकृते तत्पक्षौ चिच्छेद, ततोऽसौ समाधियुक्तः मृत्वा सौधर्मे सुरोऽभूत्। सापि तस्यैव प्रिया स्नेहतोऽभूत्, ततश्च्युत्वा कीरो देवः शङ्खनृपो जातः। राजकन्यादेवी तु कलावती जाता।

तदाकर्ण्य जातजातिस्मरणौ निश्चयीकृतकर्मफलौ तौ दम्पती गृहे गत्वा राज्ये स्वं सुतं निवेश्य दीक्षां जगृहतुः सुशीलमनसौ।

संपाद्य चारित्रमनल्पकालं, तौ दम्पती स्वर्गमवापतुर्द्रौ।
ततश्च्युतौ क्षीणकुकर्मलेशौ, क्रमाच्छिवं प्राप्स्यतो धर्मशीलौ ॥ १ ॥

॥ इत्युपदेशप्रासादे सप्तमस्तम्भेऽष्टनवतितमं व्याख्यानम् ॥ ९८ ॥

## ॥ अथ नवनवतितमं व्याख्यानम् ९९ ॥

अथ ज्ञाततत्त्वौ द्वावपि दम्पती सङ्कटेऽपि स्वब्रह्मव्रतं न मुञ्चत इत्याह—

कुत्रचिद्दम्पतियोगः स्याच्छीलव्रततत्परः । तेन सर्वसुखावाप्तिः प्राप्ते दौस्थ्येऽपि जातुचित् ॥ १ ॥

स्पष्टः । भावार्थस्तु दृष्टान्तेन वक्ष्यमाणेन ज्ञेयः, स चायम्—

कुसुमपुरे चन्दननृपो राज्यं पालयति, तस्य पत्नी सुशीला मलयागरीनामा, तयोः सुतौ सायरनीराख्यौ स्तः, अन्यदा वासवेश्मस्थं नृपं कुलदेव्येत्य प्राह—"अहो राजँस्तवावस्था विषमा भाविनी, अतो झटिति राज्यं त्यक्त्वाऽन्यत्र गच्छ, यतः—प्राप्तव्यमर्थं लभते मनुष्यो देवोऽपि तं लङ्घयितुं न शक्तः । तस्मान्न शोचामि न विस्मयो मे यदस्मदीयं न हि तत्परेषाम् ॥ १ ॥ श्रुत्वेति नृपोऽचिन्तयत्—

आपत्तिमित्रशत्रूणामवश्यं भाविनां भटैः । सन्मुखैरेव गन्तव्यं नश्यतां हीनसत्त्वता ॥ १ ॥

द्विपुत्रः स्त्रीयुतो नृपो रात्रावेव निःसृत्य पर्यटन् क्रमात् कुशस्थलपुरमाययौ, चन्दनस्तु देवार्चको मलयागरी तु वनादिन्धनानि लात्वा नगरे विक्रीणाति । अन्येद्युः कस्यचित्सार्थेशस्य दृक्पथि सागता, तद्रूपस्वरेण मोहितो नित्यमिन्धनानां मूल्याधिकदानेन तां विश्वास्य प्रयाणसमये मूल्यदानमिषेणाग्रे कृत्वा प्रपञ्चात्प्रलोभ्य प्रसह्य रथमारोप्य गृहीत्वा निर्ययौ, सा पतिवियोगाकुला निःश्वासानमुञ्चत् । तदा सार्थप आह—हे सुभ्रूर्मया सह सुखं भुङ्क्ष्व, मत्कामतापं निर्वापय, ततः साऽवोचत्, यतः—

अगनि मझी झखो भलो, भलउ ज विषको पान । शील खंडवो नहि भलो, नहि कुछ शील समान ॥ १ ॥

दत्त्वाऽन्यत्र गच्छन् श्रीपुरासन्नतरोरधः स्थितो निद्रां प्राप, तदा तत्रापुत्रे राज्ञि विपन्ने सचिवैः पञ्च दिव्यानि कृतानि, तेभ्यो राज्यं जातं, तन्न्यायेन शास्ति, प्रधानादिभिश्चरणयोर्निपत्य भणितोऽप्यन्यस्त्रीपाणिग्रहणं नाकरोत्।

अथ कश्चित्सार्थवाहस्तरङ्गिणीपूर्वापरतटस्थवृक्षमूलबद्धौ सायरनीरौ वीक्ष्यासौ स्वपुत्रवत्तयोः परिचर्यां चकार, तौ गृहीत्वा स्वपुरे गतः, क्रमेण तौ पूर्णयौवनौ जातौ, सार्थपमापृच्छ्य श्रीपुरे गत्वा भूपालसेवां चक्रतुः, तत्र स्वपितू राज्यमस्ति । एकदा मलयागरीयुतस्तत्सार्थपतिस्तत्पुरमेत्यानेकोपायनानि नृपस्य पुरो मुमोच, हृष्टो नृप आचष्ट यत्तव रोचते तन्मार्गय, तदा स निजसार्थस्य रक्षार्थं निशि यामिकान् ययाचे, ततो राज्ञादिष्टस्तलारक्षो तौ भ्रातरौ प्रैषीत् , तत्र रात्रौ विनोदाय यामिकाः स्वस्वचरितं प्रोचुः । तदा तावपि यथाजातवृत्तं प्रोचतुः, तद्वृत्तं मध्यस्था पटकुट्यन्तरतो मलयागरी श्रुत्वा स्वसुतौ मत्वा झटिति आलिलिङ्ग, पुत्रावपि निजमातरं नत्वा स्वरूपं शुश्रुवतुः । हे मातः! प्रभाते सर्वं सुस्थं भावि, मा चिन्तां विधेहि (इत्युक्त्वा तामसान्त्वयेताम्) प्रभाते मातृसुतै राज्ञे स्वावदातः प्रोक्तः, भूपः स्वपरिच्छदं दृष्ट्वाऽन्यायकारिणं सार्थपं निर्भर्त्स्य नगरान्निष्कासितवान्, तेषां द्वादशवर्षात्मको विरहो विगतः, राज्यद्वयमनुभवन् सुखेन तस्थौ, दम्पती शीलं प्रपाल्य स्वर्गं गतौ ।

साद्दश्यधर्मा वनिता विलासं, प्राप्नोति मर्त्यः शुभपुण्ययोगात् ।
दुःखेऽपि तौ पश्य निजात्तशीलं, नामुञ्चतां तेन यशोऽस्ति विश्वे ॥ १ ॥

इत्युपदेशप्रासादे सप्तमस्तम्भे नवनवतितमं व्याख्यानम् ॥ ९९ ॥

ततो व्यग्रमनसा गृहे प्राप्तः, उत्सुकं वीक्ष्य पितृभ्यामतिनिर्बन्धेन पृष्टः स्वहृदयं प्राह, तच्छ्रुत्वा पितरौ वज्राहताविव जातौ । हे पुत्र ! त्वं हंसाङ्गः काकोचितं कर्म कुर्वन् किं न लज्जसे ? इत्थं बोधितोऽपि स प्राह—मम मानसमेनां विना न मोदते, अतः सृतं बहुभाषितैः, तं पुत्रमचिकित्स्यं ज्ञात्वा इभ्यो मौनेन तस्थौ, स तु लज्जां प्रमुच्य नटेभ्यः तत्तुल्यं द्रव्यं दत्त्वा याममार्गयत्, ते प्रोचुः—अक्षयो निधिरियं कन्या कथं देया ? अमुष्याश्चेत्तवेच्छा तर्हि नटीभूय यत्र यत्र वयं यामस्तत्र तत्र त्वं समेहि, सोऽपि लज्जां मुक्त्वा नटैः सार्द्धं ययौ, अल्पदिनैस्तेषां नृत्यमशिक्षत, अथ ते प्रोचुः—भो नर ! नृत्यं कृत्वा धनमर्जय येन तव विवाहः क्रियते, ततोऽयं नटैः सहाटन् वेणातटनगरे गतः, तन्नगरेशस्याग्रे गत्वा नटैर्नभो लिहानो वंशस्तत्र निखातः, तस्योपरि महत्काष्ठं स्थापितं, तदन्तरे दृढौ द्वौ कीलौ निहितौ, तत्रेलासूनुः पादुके परिधायारोहत्, एककरे तीक्ष्णं खड्गं धुन्वन् द्वितीये खेटकभृत्तत्र क्रीडति स्म । अद्भुतं नृत्यं प्रेक्ष्य तुष्टोऽपि सर्वजनो नृपात्पूर्वं कोऽपि दानं न ददौ, राजा तु वंशाधःस्थितायां तत्प्रियायां रागपरो दध्यौ—यद्येष वंशाग्रात्पतति तदैनां नटीं गृह्णामीति धियाऽऽह—भो नर्त्तक ! पुनस्त्वं नृत्यं कुरु, सम्यगहमवेक्षे । सोऽपि वित्तस्त्रीलुब्धः पूर्ववद्दर्शितवान् ! तथापि शाठ्यान्न दानं दत्तं, नृपस्तत्पातमिच्छन् तृतीयवारं नृत्यमकारयत्, पुनः प्राह नृपः—चतुर्थवारं नृत्यं, कुरु, यथा त्वामदरिद्रं कुर्वे । तेन लोभात्तथा कृतं, सर्वे जना नृपाकूतं मनसा ज्ञात्वा निनिन्दुः, तदेलापुत्रश्चिन्तयति—नूनं राज्ञो मनो नट्यां कामार्त्तं जज्ञे, ततः स दध्यौ—धिगहो ! कामावस्थां,

धिग्मां रूपं च, अहो ! मया कुलं मलिनीकृतं, इत्यादि वैराग्येण ध्यायन्नेष वंशाग्रस्थितः कस्यचिद्धनिनो गृहे जितेन्द्रियानेषणादिगुणयुतान्मुनीन्मृगाक्षीभिः प्रतिलाभ्य वन्द्यमानानैक्षत, तदैवं दध्यौ— अहो ! विज्ञातचतुर्दशजीवाजीवस्वरूपाः स्त्रीभोगपराङ्मुखाः स्वदेहेऽपि निरीहाः केवलं मोक्षाभिलाषुका एते मुनयः "पीणनिरंतरथणभर" इत्यादिलक्षणलक्षितदेहाभिर्मन्नर्त्तकीभ्योऽप्यसङ्ख्याधिकरूपाभिः स्त्रीभिर्मोदकैर्निमंत्रिता अपि काकमैथुनवत् दृग्भ्यां नेक्षन्ते, अहं तु नीचकन्यायामपि रागपरोऽहो धिग्मम कर्मविलसितं, धिक् संसारस्वरूपं, एवं विषयेषु विरक्तस्य शुक्लध्यानं ध्यायतः सामायिकादियथाख्यातचारित्रप्रभावेण घनघातिकर्मक्षयात्तदा सहसा संकेतितमिव लोकालोकप्रकाशकमविनश्वरमिलासूनोः केवलज्ञानमुत्पेदे, वंशादुत्तीर्य देवतादत्तलिङ्गभृत् धर्मदेशनां चकार, तदुक्तं धर्मं श्रुत्वा नृपादयः सभ्या नर्त्तक्युपरि रागकारणं पप्रच्छुः, केवलिना पूर्ववृत्तान्तोऽभिहितो यथा "पूर्वं विप्रभवे भार्यया सह दीक्षा गृहीता, द्वाभ्यामपि जातिमदः कृतः, तमनालोच्य मृत्वा देवौ जातौ, ततश्च्युत्वाऽहमिभ्यपुत्रो जातः, मम प्रिया जातिमदादेषा नटी जाता ।

कामरागो ममैतस्यां तेन गाढतरोऽजनि । भवान्तरानुगामि स्याद्वैरं स्नेहश्च देहिनाम् ॥ १ ॥"

एवं श्रुत्वा जातिस्मृतिं गता सा नटी दध्यौ—धिग्मे रूपं, येनेभ्यपुत्रपार्थिवादयो बहुजना व्यसने पातिताः सृतं मे विषयसौख्येन, एवं भावयन्ती केवलज्ञानं प्रपेदे, इतश्चासन्नस्था राज्ञः पट्टराज्ञी

दध्यौ—"यतो राजाऽधमकुलजातायां नर्त्तक्यां मोहितः, धिग्विलासेन" इत्यादिभावेन तस्या महाज्ञानमुदपद्यत । अथ नृपतिर्दध्यौ—

"अयं च कुलमुज्झित्वा रक्तोऽस्यां धनकाम्यया । ममोपकंठमायातो मम चेद्दग्विचेष्टितम् ॥ १ ॥"

एकत्वभावनया केवली जातः । इत्थमिलापुत्रमहाज्ञानिना बहुजीवा निस्तारिताः ।

सुवंशजत्वाच्चुभवंशमाश्रितः, कुवंशचर्यं भवभावनर्त्तनम् ।
विहाय रूपं व्रतिनः समीक्ष्य, बभूव तद्रूपपतिश्चिदात्मना ॥ १ ॥

॥ इत्युपदेशप्रासादे सप्तमस्तंभे शततमं व्याख्यानम् ॥ १०० ॥

## ॥ अथैकोत्तरशततमं व्याख्यानम् ॥ १०१ ॥

अथैतद्व्रतं जिनेन्द्रैरपि स्वीकृतमत आश्चर्यमित्याह—

येषां मोक्षो ध्रुवं भावी शीलं चरन्ति तेऽपि हि । तदा संसारिजीवानां कार्योऽजस्रं तदादरः ॥ १ ॥

येषां जिनेन्द्राणां ध्रुवमवश्यं तद्भव एव मोक्षः शिवं भविष्यति, तेऽपि जिना हि यदि ब्रह्मचर्यं निषेवन्ते, तदा संसारमग्नसामान्यजीवानामजस्रं सदा तदादरः शीलपालनादरः कार्य इत्यर्थः । भावार्थस्तु मल्लिजिनसंबन्धेन वाच्यः । तथाहि—अपरविदेहे सलीलावतीविजये वीतशोकायां पुर्यां महाबलो नृपः वैश्रमण–चन्द्र–धरण–पूरणवसु–चलाख्यैः स्वमित्रैः षड्भिः सह बालवयस्यैः प्रव्रज्यां प्रतिपेदे । तैः सह

मासक्षपणादि तपः कुर्वन् रोगदंभतस्तपःप्रान्तेऽपि पारणं नाकार्षीत्। तेभ्योऽन्यूनं तपस्तपन्मायया स्त्रीवेदं बबन्ध स्थानकतपोभिर्जिननाम चेति। ततस्ते जयन्तस्वर्गे जाताः। ततश्च्युत्वा महाबलो विदेहदेशे मिथिलायां कुंभराजपत्नीप्रभावतीकुक्षौ उत्पन्नः। पितरौ मल्लिरिति नाम चक्रतुः। तदन्ये तु वक्ष्यमाणदेशेषु जज्ञिरे। ततो मल्लिर्देशोनवर्षशतं जाताऽवधिज्ञानेन पूर्वमित्रप्रतिबोधार्थं षड्गर्भगृहोपेतं भवनं तन्मध्ये स्वर्णमयीं शुषिरां शिरश्छिद्रां पद्मपिधानां स्वप्रतिमामकारयत्। तन्मध्ये च नित्यमेकं कवलं प्रक्षेपयामास।

इतश्च साकेतेऽचलजीवः प्रतिबुद्धिनामा नृपो जातः। अन्यदा स प्रियायुतो नागयात्रायै गतः। तत्र पुष्पमंडिकां पुष्पमुद्गरं च स्वप्रियां वीक्ष्य विस्मयादमात्यमाह—"दृष्टं क्वापीदृशं रूपं ?" इति। सोऽवोचत्—"देव कोऽत्राग्रहः ? जगत्त्रये कुंभराजसुतास्वरूपं नास्ति, तस्याश्च श्रीदामगंडशोभा क्वापि न दृश्यते"। मंत्र्युक्तं श्रुत्वा संजातस्नेहोऽसौ मल्लिवरणार्थं दूतं विससर्ज १। तथा चंपायां धरणजीवश्चन्द्रछायाभिधो बभूव। कदाचित्तदन्तिकेऽर्हन्नकश्राद्धेन पोतवणिजा दिव्यकुंडले ढौकिते स पप्रच्छ—"पृथ्व्यां किञ्चिदाश्चर्यं दृष्टं ?"। सोऽवदत्—स्वामिन् समुद्रे सुरेण मत्पोतमान्दोलितं कृत्वा प्रोक्तं त्वं श्रीजैनधर्मं त्यक्त्वा मामाश्रयेस्तदा पोतं तारयामि। बहूपसर्गेऽपि निश्चलं मां ज्ञात्वा तेन कुंडलचतुष्टयं दत्तं। एकं युग्मं कुंभस्य मयोपढौकितं, तेन मल्लिसुताकरे दत्तं सा कन्या विश्वाश्चर्या दृष्टा। इति श्रुत्वा तथैव दूतं प्रैषयत् २। तथा पूरणजीवः श्रावस्त्यां रुक्मिराजो जातः। तेनैकदा स्वदुहितुः स्वर्णमंडपे मज्जनकमहामहः कृतः। तदैकं बहुदेशान् विलोक्यागतं कंचिन्नरं पप्रच्छ—ईदृशं क्वापि दृष्टं ?। सोऽवोचत—देव

विदेहवरराजपुत्रीजन्मोत्सवापेक्षयाऽयं लक्षांशेऽपि रम्यतया न वर्त्तते। इति श्रुत्वा तथैव दूतं प्रेषयति ३।
तथा वसुजीवो वाराणस्यां शंखनामा नृपोऽभवत्। इतश्च तन्मल्लिकुंडले एकदा भग्ने समारयितुं सुवर्ण-
काराय ददौ। तथैव कर्तुमशक्नुवन्तस्ते पुराद्बहिष्कृताः शंखराजसंसदि श्रितास्ते नृपेण पृष्टाः प्राहुः पुरमो-
चनवृत्तं। ततः कीदृशी सा इति पृष्टेभ्यस्तेभ्यो मल्लिरूपं श्रुत्वा तथैव दूतं प्राहिणोत् ४। तथा कदाचि-
न्मल्लेर्मल्लदिनाभिधानोऽनुजो भ्राता सभां चित्रकरैश्चित्रयामास। तत्रैकेन चित्रकृता देववरबिभ्रता श्रीमल्ले-
श्चरणाङ्गुष्ठं यवनिकान्तरात् दृष्ट्वा यथास्थितं रूपं तस्यास्तेन निर्मितं। ततश्च मल्लदिनः प्रियायुतश्चित्रशालिकां
प्रविष्टः साक्षान्मल्लिं ज्ञात्वा ह्रिया सहसा व्यावृत्तः। तत्र तद्धात्री चित्रमिदमिति न्यवेदयत्। ततः स
कुपितस्तं चित्रकरं वधायादिष्टवान्। चित्रकरैः स मोचितः। तथापि कुमारस्तदङ्गुलीश्छेदयित्वा देशतो
निरवासयत्। स च हस्तिनापुरेशवैश्रवणजीवादीनशत्रुराजमाश्रितः। ततो राजा तं निर्गमनकारणं पप्रच्छ।
तेनैवं मल्लिवर्णने कृते दूतं प्रहिणोति स्मेति ५। तथा कदाचित्परिव्राजिकावादे मल्लिराजपुत्र्या निर्जिता
सती सा कुपिता कांपिल्यपुरेऽभिचन्द्रजीवाजितशत्रुनृपमुपगता श्रीमल्ले रूपमाचख्यौ। तच्छ्रुत्वा तथैव
दूतं प्राहिणोत् ६।

एवमेते षडपि दूताः कुंभपुत्रीं याचितवन्तः। स च तानपद्वारेण निष्कासितवान्। दूतवचनाकर्णना
ज्जातकोपाः षडपि मिथिलां प्रति प्रतस्थिरे। ततस्तज्जयोपायं कुंभोऽलभमानो व्यग्रो जातः। इति व्याकु-
लचित्तं जनकमवलोक्य मल्लिराश्वासयत्—हे पितस्त्वं दूतमुखेन तेषां षण्णां ज्ञापय युष्मभ्यं कन्यां दास्ये

इति, ततो विश्वस्तास्ते पृथक् पृथगत्रागमिष्यन्ति । राज्ञा तथैव कृतं । प्रवेशितास्ते । पूर्वरचितगर्भगृहेषु मल्लिप्रतिमामवलोक्य ते सेयं मल्लिरिति मन्यमानास्तद्रूपादिषु मूर्छिता निर्निमेषदृष्ट्या तामवलोकयन्तस्तिष्ठन्ति स्म । ततो मल्लिना तालुदेशस्थं तत् पिधानं व्यपोहितं । ततस्तस्या गन्धः सर्पादिमृतकगन्धातिरिक्त उदधावत् । ततस्ते नासिकां पिदधुः । मल्लिस्तानेवमवादीत्—किं भूपा यूयमेवं पराङ्मुखीभूताः ? । त ऊचुः—गन्धेनाभिभूतत्वात् । पुनः साऽवोचत्—यदि भो देवानांप्रियाः प्रत्यहं मनोज्ञाहारकवलक्षेपेणैवंरूपः पुद्गलपरिणामः तदा स्त्रीदेहे कं सारं पश्यथ ? । युष्माभिर्देवभवेषु महदायुर्भुक्तं सुखं च । इत्थं प्राग्भवकथनेन तेषां जातिस्मरणं जातं। अथ मल्लिः प्राह—अहं भोः प्रव्रजिष्यामि, यूयं किं करिष्यथ ? । त ऊचुः—वयमपि व्रतं ग्रहीष्यामः । ततस्ते मल्ल्याज्ञया गृहे गत्वा पुत्रान् स्वस्वराज्येषु निचिक्षिपुः । मल्लिजिनः सांवत्सरिकमहादानानन्तरं पौषशुक्लैकादश्यामष्टमभक्तेनाश्विनीनक्षत्रे त्रिशतनृपैः त्रिशतस्त्रीभिश्च सह वर्षशतेऽतीते जन्मनः सिद्धसाक्षिकं प्राव्राजीत् । तस्मिन्नेव दिने केवलं समुत्पन्नं । ते षडप्येत्य प्रवव्रजुः । भिषगादयोऽष्टाविंशतिर्गणधरा जाताः । चत्वारि सहस्राणि साधवः । पञ्चपञ्चाशत्सहस्राणि साध्व्यः । लक्षत्रयं सप्ततिसहस्रा उपासिकाः । लक्षमेकं त्र्यशीतिसहस्राणि श्राद्धाश्चेति संघयुग्मल्लितीर्थेशो विहरन् प्रान्ते संमेते पञ्चपञ्चाशत्सहस्रं शरदां संपूर्णायुः प्रत्येकं पञ्चशत्या साधुसाध्वीभिर्युतः फाल्गुनश्वेतद्वादश्यां भरण्यां श्रीमल्लिर्मोक्षमासदत् ।

इत्थं यथा शीलमवश्यमोक्षाग्निगामुकोऽपि प्रद्युम्नमल्लिनाथः ।
प्रपालयामास तथाऽविरामं, भव्येन निर्व्याजतया निषेव्यम् ॥ १ ॥

॥ इत्युपदेशप्रासादे सप्तमस्तंभे एकोत्तरशततमं व्याख्यानम् ॥ १०१ ॥

॥ अथ द्व्युत्तरशततमं व्याख्यानम् ॥ १०२ ॥

अथ मैथुनसेवया बहुगुणहानिः स्यादित्याह—

वाक्यमंत्ररसादीनां सिद्धिः कीर्त्यादयो गुणाः । नश्यन्ति तत्क्षणादेव अब्रह्मसेवनान्नृणाम् ॥ १ ॥

स्पष्टार्थः। भावार्थस्तु सत्यकिविद्याधरसम्बन्धेन ज्ञेयः। तथाहि—चेटकमहाराजपुत्रीं सुज्येष्ठां निर्ग्रन्थीं आतापनापरां सुरूपां वीक्ष्य धूमिकया दिग्मूढां कृत्वा भ्रमररूपेण पेढालविद्याधरस्तां भेजे । तस्याः सत्यकिर्नाम तनयोऽभवत् । स विद्याग्रहणार्हो व्याघ्रीदुग्धस्वर्णपात्रवदिति विचिन्त्य पेढालेन साध्वीसकाशादपहृत्य विद्यामंत्रो दत्तः । तथा—

ततो मातृवचनाज्जिनवचनाच्च कृतदृढसम्यक्त्वस्त्रिकालजिनार्चां कृत्वा तीर्थकृत्त्वमुपार्जितवान् । यतो लोकप्रकाशे—

महादेव इति ख्यातो रुद्र एकादशः स च । एकादशो जिनो जावी सत्यकिः सुव्रताजिधः ॥ १ ॥

अविरतित्वेन स्त्रीषु रक्तः सन् नृपादिस्त्रियः प्रसह्य सेवते । अन्यदोज्जयिन्यां चण्डप्रद्योतेन पुरि पटहो दापितः । उमावेश्यया कथितं—अहं तं निशाचरं वशीकरिष्यामि । तदनु त्वया यथेष्टं विधेयं । एकदोमया चन्द्रशालोपरिस्थया स्वाङ्गसौन्दर्यं दर्शितं । स सत्यकिस्तद्रूपलुब्धस्तामेव जेजे । अन्यदा स्त्रिया रहसि पृष्टं—तव का विद्याः सन्ति । तेनोक्तं—मम रोहिण्यादयः सर्वदाप्यङ्गे तिष्ठन्ति, मैथुनावसरे खड्गं विद्यां च दूरं स्थापयामि, तदा मम किञ्चिद्बलं न जवति । तया राज्ञोऽग्रे उक्तं—शब्दवेधी पुरुषश्चेन्मदासक्तं मारयति तदा म्रियते नान्यथाऽतो दक्षः कोऽपि मां मुक्त्वा तमेव हन्ति ईदृशोऽत्रार्हः । तदा नृपान्यर्णे कैश्चिच्छस्त्रकुशलैस्तत्परीक्षार्थं पद्मपत्राण्युपर्युपरि संस्थाप्योपरितनानि पणीकृतानि तान्येव छेदितानि नाधस्तनानि । अनया युक्त्या त्वामपि रक्षिष्यामः इति श्रुत्वा सा स्वीकृत्य गृहे गता । पश्चात्तैः सुजटैः प्रछन्नं तां विषकन्दलीं विज्ञाय तया सह मैथुनासक्तः सत्यकिर्मारितो मृत्वा नरकं गतः । पश्चात्तन्मित्रेण कालसंदीपकविद्याधरेण चूर्णीकरणाय नगरोपरि शिला विकृता । राज्ञा जोगादिके कृते स विद्याधरः कथयति—चेन्मैथुनासक्तावस्थारूपेण पूजां कुरुत शङ्करपार्वतीनाम्ना गुणान् गायत तदा मुञ्चामि नान्यथा । प्रतिपन्नं राज्ञा लोकैश्च । क्रमेणेश्वरलिङ्गं जलाधार्यां कृत्वा पूजयामासुः ।

धिग्धिग्विषयलाम्पट्यं येनासक्तोऽप्ययं वली । कुण्ठीकृत्य निजां शक्तिं सत्यकिः प्राप नारकम् ॥ १ ॥

सुज्येष्ठादीक्षाग्रहणवृत्तं त्विदम्—

विशालापुर्यां चेटकमहाराजपुत्री सुज्येष्ठास्ति । तयान्यदा मिथ्यात्वं स्थापयन्ती काचित्परिव्राजिका निर्जिता । तया तद्रूपं पट्टे आलिख्य श्रेणिकराज्ञो दर्शितं । राजा व्यामोहितः । राजाज्ञयाऽभयेन वैशाह्यामापणो मंडितः । तत्र स पट्टलिखितं श्रेणिकमर्चति । तत्सुज्येष्ठादास्या दृष्टं । तया सुज्येष्ठायै दर्शितं । सुज्येष्ठया रूपव्यामोहितया स्वाकूतमभयाय प्रोक्तं। तेन सुरङ्गा स्वसीमां यावत्कारिता । तत्र श्रेणिक एत्य सुज्येष्ठां चेलणां च गृहीत्वा तन्मार्गे गच्छति तावत्सुज्येष्ठा विस्मृतस्वाभरणा तद्ग्रहणाय गृहे गता । नृपस्तु महाराजभयात् झटिति चेलणामेव गृहीत्वा काकनाशं नष्टः । सुज्येष्ठा सङ्केतस्थले तां तं चावीक्ष्य पूच्चकार । पश्चाद्धावितेन चेटकराजेनैकेन बाणेन श्रेणिकाङ्गरक्षका द्वात्रिंशत्सुलसासुता मारिताः, सहजातत्वात्सामुदायिककर्मत्वात्तेषां । ततो महाराजः स्वपुर एत्य सुज्येष्ठार्थं विवाहसामग्रीमकरोत् । तदा पितरं निवार्य तया दीक्षा गृहीता । सतीत्वादन्यं नेच्छति । तदनु पेढालतो गर्भे जाते सतीस्वरूपं गणधरेण पृष्टं, वीरेणोक्तं—नास्या दोषः, इयं तु निश्चलशीला, मनसा वृतश्रेणिकसद्भावात्, यावज्जीवं त्रिधा शुद्धं व्रतमपालयत् ।

चेटकस्य महाराज्ञः पुत्र्यः सप्तापि या बभुः । ताः सर्वाः शीलसंयुक्ताः श्लाघितास्तीर्थभर्तृभिः ॥ १ ॥

॥ इत्युपदेशप्रासादे सप्तमस्तंभे द्व्युत्तरशततमं व्याख्यानं ॥ १०२ ॥

॥ अथ त्र्युत्तरशततमं व्याख्यानम् ॥ १०३ ॥

अथ स्त्रीचरित्रं ज्ञातुं कोऽपि न कुशल इत्याह—

सुश्लिष्टमपि स्त्री(नारी)णामहो कपटनाटकम् । न स्याद्वेधा अपि मेधावी यस्य तत्त्वावबोधने ॥ १ ॥

स्पष्टः । भावार्थस्तु नूपुरपंडिताहष्टान्तेन ज्ञेयः तद्यथा—

राजगृहे देवदत्तः स्वर्णकारः । तत्सुतो देवदिन्नः । तस्य जाया दुर्गिला । एकदा नदीतीरे सूक्ष्मार्द्रवस्त्रावृता स्नानं कुर्वन्ती केनचिन्नागरेण दृष्टा । स मोहितोऽपठत् ।

सुस्नातं ते नदी पृच्छत्यमी पृच्छन्ति चांह्रिपाः । पृच्छाम्यहं च त्वत्पादपद्मयोर्निपतन्नपि ॥ १ ॥

पपाठ सापि स्वस्त्यस्तु नद्यै नन्दन्तु च द्रुमाः । मनीषितं करिष्यामि सुस्नातप्रश्नकारिणः ॥ २ ॥

श्रुत्वा तन्मिलनोत्सुकः स्वाकूतं प्राह तापसीं । तया दुर्गिलां प्रति प्रोक्तं । मायाविनी साह—हे पाखंडिनि किमश्राव्यं भाषसे ? याहि मद्गृहात् । क्रुधा निर्गच्छन्त्यास्तस्याः पृष्ठे सा कज्जलहस्तं ददौ । तं नरं स्वापमानमुक्त्वा तया पृष्ठिर्दर्शिता । स दध्यौ—नूनमनया कृष्णपञ्चम्यां सङ्केतः प्रोक्तोऽस्ति परं कुत्र स्थले तन्नोक्तं । पुनस्तेन भिक्षाग्रहणमिषेण तत्र प्रेषिता । तया प्रोक्ता दुर्गिला—हे सुभ्रूस्तन्मिलनस्थलं कथय । सा रोषं कृत्वाह—रे दुर्मुखि निर्गच्छ इत्युक्त्वाऽशोकारामापद्वारेण निष्कासिता । तदग्रे तत्प्रोक्तं । तेन ज्ञातं कृष्णपञ्चम्यामशोकारामे मिलनं दर्शितं । ततस्तद्दिने तत्र गतः । द्वौ विनोदं कृत्वा तत्रैव मुद्रितनेत्रा अभूतां । तदा कायचिन्तार्थमागतेन श्वशुरेणान्यं नरं मत्वा वामावामचरणत एकं नूपुरं कर्षितं ।

तत्पुंश्चल्या विज्ञाय तज्जारः शिक्षां दत्वा गृहे प्रेषितः । ततः स्वपतिं मञ्जुलवाण्या विनिद्रं कृत्वाऽशोकारामे स शायितः । किंचिन्निद्रां विधाय पतिं प्राह—भवत्कुलेऽयं कः क्रमो यत्सुप्ताया वध्वाः श्वशुरो नूपुरं हरति । ततः सक्रोधः स प्रभाते पितरं प्राह—रात्रावुपवनेऽहं सुप्तोऽभूवं नापरः, परं हे तात पुत्रस्त्रीगुह्यप्रेक्षणं नार्हं । वृद्धः प्राह—उपपतौ गते तदनु त्वं तया शायितः । तदाकर्ण्य वधूरूचे—अहं स्वात्मानं देवतापुरः शोधयिष्यामि । इत्युक्त्वा पवित्रीभूय यक्षमर्चितुं ययौ । मार्गे पूर्वसङ्केतितः स जारो ग्रथिलीभूय तद्गले वृद्धे वानर इवालगत् । तं दूरीकृत्य यक्षाग्रे प्राह—एनं ग्रथिलं स्वपतिं च मुक्त्वा कोऽप्यन्यो मयि लग्नश्चेत्तदा यथेच्छं कुरु । यावता किं करोमि इति यक्षो दध्यौ तावत्साशु यक्षजंघयोरन्तर्निरगात् । लोकैः प्रशस्य नूपुरपंक्तितेति नाम दत्तं । तच्चरित्रेण विस्मितः श्वशुरो निद्रां तद्दिनतो नाप । तद्गुणेन भूपतिर्निजान्तःपुररक्षकं चक्रे । राज्ञी तद्रात्रौ मेरुलुब्धा पुनः पुनरुत्थाय तं जागरूकं वीक्ष्य व्यावर्त्तत । तद्वृत्तबुभुत्सया कपटेन सुप्तः । तदा राज्ञी गवाक्षमागता । तां करिशुंडेनाधोभागे हस्तिपकः समुदतारयत् । ततो हस्तिश्रृंखलया पृष्ठे तां ताडयित्वाऽवोचत्—कथं चिरेणागता ? । तया नवयामिकवृत्तमुक्तं । ततश्चरमयामे तथैव वातायने मुक्ता । तद्वीक्ष्य स्वर्णकृद्दध्यौ—यदि राजस्त्रीणामिदं चरित्रं अन्यासां कुशीलत्वे को विस्मयः ? । इति गतचिन्तः षण्मास्यन्ते निद्रां प्राप । नृपेण निद्रागतस्वरूपं पृष्टः स्पष्टमब्रवीत् ततो नृपः सर्वस्त्रीणां प्राह—यूयं निर्वस्त्रपृष्ठौ नीलोत्पलघातं मत्कृतं सहध्वं । सर्वाभिः स्वीकृतं । क्रमेण साऽऽगता । किंचिद्घातेन छद्ममूर्छया भूमौ पपात । ततो नृपस्तां प्राह—

रमसे मत्तनागेन कृत्रिमेणाद्विजेषि च । शृङ्खलाघाततो मोदं मूर्छां यासि तथोत्पलात् ॥ १ ॥

नृपः क्रोधारुण आदिदेश—गजे मेरुं राज्ञीं चारोप्य गिरिशृंगतो यूयं त्रयोऽपि झम्पापातं वितनुत । आधोरणस्तं करिणं गिरिमूर्ध्नि नीत्वा ऊर्ध्वीकृतैकचरणं त्रिपाद्या क्षितौ अस्थापयत् । अग्रे द्वाभ्यां पद्भ्यामधारयत् । तत्कालारञ्जितैर्लोकैर्नृपो विज्ञप्तः—स्वामिन् हस्तिरत्नस्य मारणं नार्हं । राज्ञा मानितं । नृपादिभिर्हस्तिपकाय प्रोक्तं—एनं करिवरं समुत्तारय । सोऽवदत्—'यद्यभयमावयोर्नृपो ददाति तदा क्षेमेणोत्तारयामि । ततो राज्ञाऽभये दत्ते शनैस्तमुदतारयत् । ततो राज्ञीमहावतौ देशान्निर्वासितौ । सन्ध्यायां क्वचन ग्रामदेवकुले सुप्तौ । इतश्चैकश्चौरो ग्रामाच्चौर्यं कृत्वा तत्रैवागतस्तं ज्ञात्वा तलारक्षेण रुद्धं देवकुलं रात्रौ निषादिनि सुप्ते चौरकरस्पर्शेन जागृता सा तं प्राह—त्वं मां स्त्रीत्वेन रक्ष । सोऽप्याह—प्रत्यूषे युक्त्या मज्जीवितं रक्षसि, तदाहं त्वत्स्वामी । तया स्वीकृतं । प्रातर्भटा एत्य पप्रच्छुः—युष्मासु कश्चौरः ? । दृष्टिसंज्ञया सा निषादिनं दर्शयामास । तेऽपि तत्क्षणं तं मेरुं दोषमारोप्य शूलारोपणं चक्रुः । इतश्च पथि गच्छन्तं कञ्चिच्छ्राद्धं वीक्ष्य तेन जलं मार्गितं । श्राद्धोऽपि तस्मै मेरुाय नमस्कारपदं दत्त्वा जला-नयनाय जगाम । स नमस्कारं स्मरन्मृत्वा व्यन्तरसुरोऽभवत् । अथ सा पुंश्चली चौरेण सह व्रजन्ती नदीतटं प्राप । तदा चौर आह—त्वद्वस्त्रादिकं ममार्पय, येनेदं परतो धृत्वा ततस्त्वां सुखेन नयामि । अहं यावदायामि तावदत्र तिष्ठ । तया तथा कृतं । दस्युः पारं गत्वाऽतर्कयत्—इयं स्वपतिमिव मामपि दुःखे पातयिष्यति, अतोऽस्याः सङ्गो नार्हः । ध्यात्वेति साधितस्वार्थस्तां मुक्त्वैव गतः । सा नग्ना हताशा

वने भ्रमन्ती पूच्चकार । इतः स सुरस्तां प्राबोधयत्, मुखात्तमांसस्य गोमायो रूपमादधे । तद्दृशोः पुरः शृगालो मांसपेशीं मुखाद्विहाय सरित्तीरगतं मीनं भोक्तुमधावत । तदा मीनो नदीजले द्रुतं प्रविवेश । तन्मांसं तु शकुन्या गृहीतं । तदा फेरुस्तु इतस्ततोऽवलोकयत् । सोचे—हे दुर्बुद्धे द्वाभ्यां भ्रष्टः किं विलोकसे ? । गोमायुराह—त्वं तु त्रिभ्यो भ्रष्टा किमन्यदोषं वीक्षसे ? । इत्युक्त्वा दिव्यं रूपं कृत्वा जगदे—हे पापे यस्त्वया मारितः सोऽहं । जैनधर्मादिदं प्राप्तं । त्वमप्यङ्गीकुरु । तथेति प्रतिपन्नां तां साध्वीपदेषु नीत्वा दीक्षां ग्राहयामासेति ।

संप्राप्नुवन्त्याः शुचिशीलरत्नभ्रंशं तदा नूपुरपंक्तितायाः ।
अद्यापि तस्या असतीमतत्वदुःकीर्तिनादो विरराम नैवम् ॥ १ ॥

॥ इत्युपदेशप्रासादे सप्तमस्तंभे त्र्युत्तरशततमं व्याख्यानम् ॥ १०३ ॥

---

## ॥ अथ चतुरुत्तरशततमं व्याख्यानम् ॥ १०४ ॥

अथ चतुर्थव्रतधारकश्राद्धआषाढचतुर्मासीसत्कृत्यान्यवश्यं करोत्यतः चतुर्मासीकृत्यवर्णनमाह—

आषाढाख्यचतुर्मास्यां विशेषाद्विधिपूर्वकम् । अभिग्रहाः सदा ग्राह्याः सम्यगर्हो विवेकिभिः ॥ १ ॥

कंठ्यः । अत्र श्लोकभावार्थसमर्थनार्थं भावना चेयं—प्राग्द्वादशव्रतोच्चारणसमये पञ्चमव्रतमङ्गीकृतं येन स्यात्तेनावश्यं तन्नियमाः प्रतिचतुर्मासकं संक्षेप्याः । येन तु तन्नाङ्गीकृतं तेनापि प्रतिचतुर्मासकं समु-

चिताः ( योग्याः ) अभिग्रहाः स्वीकार्याः । तत्र वर्षाचतुर्मास्यां पुनर्विशेषाद्विधिपूर्वकं ते ग्राह्याः । वर्षासु
शकटखेटनरथवाहिनीहलखेटनादिनिषेधः कार्यः । भूमौ जलदजलस्पर्शतो हरिततृणसूक्ष्मसंमूर्छिममंडूकी-
पञ्चविधनीलफुल्ल्यलसीयकशंखजीवममोलाकात्राचूर्मेलगुल्मभूमिछत्राद्यनेकजीवोत्पत्तिसंभवः स्यात् । तज्ज-
न्तुरक्षार्थमभिग्रहो विधेयः । कदाचित्तेनैवाजीविका भवेत्तदा एकादि क्षेत्रखेटनादधिकं नियम्यं । यथा
मुख्यवृत्त्या वर्षाकाले सर्वदिग्गमननिषेध उचितः कृष्णकुमारपालादिवत् । यतः—दयार्थं सर्वजीवानां
वर्षास्वेकत्र संवसेत् । पुरा श्रीनेमिजिनोपदेशाच्छ्रीकृष्णनृपो द्वारकाया बहिर्निर्गमनियमं जग्राहेति । कुमा-
रपालनृपस्तु श्रीहेमचन्द्रवचनात्—

दर्शनं सर्वचैत्यानां गुरोरपि च वन्दनम् । मुक्त्वा पुरेऽपि न प्रायो भ्रमिष्यामि घनागमे ॥ १ ॥
वाचा युधिष्ठिरः श्रीमान्निजमङ्गीकृतं व्रतम् । न तत्याज चौलुक्यसिंहः कार्ये महत्यपि ॥ २ ॥
आगच्छन्तं शकाधीशं देशभङ्गविधित्सया । ज्ञात्वा साभिग्रहो राजा नैति वर्षासु संमुखः ॥ ३ ॥
राज्ञो धर्मे स्थिरीकर्तुं वध्ध्वा निन्येऽत्र सूरिणा । षण्मासीं जीवरक्षायाः पणे मुक्तः कृपालुना ॥ ४ ॥

इति । एवं वर्षासु सर्वदिग्गमनं निषिद्धं । तदशक्तौ यदा यासु दिक्षु गमनं विनापि निर्वहते तदा
तद्दिग्गमनं त्यजेत् । एवं सर्वसचित्तादीनि परिहर्तुमशक्तो यानि विना यदा निर्वहते तानि तदा परिह-
रति । यथा यस्य यत्र यदा यन्न भवति । यथा निःस्वस्य हस्त्यश्वादि, मरुदेशे नागवल्लीदलानि, स्वस्वकाल
विनाऽऽम्रफलादि च । स तत्र तदा वा तन्नियमयति । एवमसद्वस्तु त्यागेऽपि विरत्यादिमहाफलं । अन्यथा

तु तत्तद्वस्तु ग्रहणेऽपि पशूनामिवाविरतत्वं तत्तन्नियमफलेन वञ्च्यते । न हि सकृज्जोज्यऽपि प्रत्याख्यानोच्चारं विनैकाशनादिफलं लभते । असंभववस्तुनोऽपि नियमग्रहणेन कदाचित्कथञ्चित्तद्योगेऽपि नियमबद्धस्तन्न गृह्णात्यपीति व्यक्तं नियमफलं । यथा गुरुदत्तनियमबद्धेन वङ्कचूलपल्लीपतिना क्षुधार्त्तेनाप्यरण्ये किंपाकफलान्यज्ञातनामानि सार्थिकैर्बहुबहुप्रेरितेनापि न जग्धानि । सार्थिकैस्तु जग्धानि, मृताश्च ते इति । तेन पक्षमेकद्वित्रिमासानेकवर्षादिवर्षाणि वा यावद्यथाशक्ति नियमाः स्वीकार्याः । यो यावदवधि यथा पालयितुं शक्नोति स तावदवधि तथा समुचितनियमानङ्गीकुर्यात्, न त्वनियमित एव क्षणमपि तिष्ठेत्, विरतेर्महाफलत्वादविरतेश्च बहुकर्मबन्धादिमहादोषाच्च । अत्र च वर्षासु विशिष्य ते ग्राह्याः, तत्र त्रिर्द्विर्वा पूजाऽष्टभेदपूजा संपूर्णदेववन्दनं सर्वबिम्बानामर्चनं वन्दनं वा स्नात्रमहादि, गुरोर्द्वादशावर्त्तवन्दनं, अपूर्वज्ञानपाठादि, विश्रामणा, ब्रह्मचर्यपालनं, प्रासुकनीरं, सचित्तत्यागः, वार्दलाब्दवृष्ट्यादिना इलिकादिपाते राजादनाम्रत्यागादि च, आर्द्रानक्षत्रेऽवश्यं पक्वाम्रफलेषु तद्रसेषु च कीटसदृशास्तद्वर्णा जीवाः समुत्पद्यन्ते । तथा पर्युषितकठोलनिष्पन्नपूपिकावटकादीनि त्याज्यानि । पर्पटवटिकादिशुष्कशाकभाजिकासर्वजाति [कादि]तंदुलीयकादिपत्रशाकटुम्परकखारिकशुष्कराजादनीफलखर्जूरद्राक्षाऽधौतखंडशुंठ्यादीनि(च) फुल्लिकुन्थ्विलिकादिसंसक्तिसंभवात्त्याज्यानि, औषधादिविशेषकार्ये तु सम्यक् शोधनादियतनयैव तेषां ग्रहणं । यथाशक्ति खट्वास्वापदन्तकाष्ठोपानहादित्यागः, चतुर्मास्यां भूखननवस्त्रादिरञ्जनग्रामान्तरगमनादिनिषेधः । वस्त्रधोणीपरिमाणं कार्यं । वर्षासु भूलिम्पनं भगणस्थापनं सर्वथा निषेध्यं । द्विघटिकानन्तरं

गोमयेऽनेके जीवा उत्पद्यन्ते, तथापि वर्षासु विशेषेण प्रजायन्ते । गृहाट्टभित्तिस्तंभपल्यङ्ककपाटपट्टपट्टकप-ट्टिसिक्ककघृततैलजलादिभांडभाजनेन्धनधान्यादिसर्ववस्तूनां पनकादिसंसक्तिरक्षार्थं चूर्णकरक्षादिखरण्टन-मलापनयनातपमोचनशीतलस्थानस्थापनादिना जलस्य द्विस्त्रिर्गलनादिना तैलगुडतक्रजलादिपात्राणां सम्यक्स्थगनादिनाऽवश्रावणस्नानजलादीनां नीलफुल्लीरहिताशुषिररजोबहुलभूमौ पृथक् पृथक् स्तोकस्तो-कत्यागेन चुल्लीदीपकादेरनुद्घाटमोचनेन खंडनपेषणरन्धनवस्त्रभाजनादिक्षालनादौ सम्यक् प्रत्युपेक्षणेन जिनप्रासादोपाश्रयादेरपि विलोक्यमानसमारचनेन यथार्हं यतना कार्या । लोकशास्त्रेऽपि कतिचिन्नियमाः प्रोक्ताश्च । यथा वशिष्ठ उवाच—

कथं स्वपिति देवेशः पद्मोद्भव महार्णवे । सुप्ते च कानि वर्ज्यानि वर्जितेषु च किं फलम् ॥ १ ॥
नायं स्वपिति देवेशो न देवः प्रतिबुध्यते । उपचारो हरेरेव क्रियते जलदागमे ॥ २ ॥
योगस्थे च हृषीकेशे यद्वर्ज्यं तन्निशामय । प्रवासं नैव कुर्वीत मृत्तिकां नैव खानयेत् ॥ ३ ॥
वृन्ताकान् राजमाषांश्च वल्लकुलत्थांश्च तूमरी । कालिंगानि च यद्वस्तु मूलकं तंदुलीयकम् ॥ ४ ॥
एकान्नेन महीपाल चतुर्मास्यां(र्सीं) निषेवते । चतुर्भुजो नरो भूत्वा प्रयाति परमां गतिम् ॥ ५ ॥
नक्तं न भोजयेद्यस्तु चतुर्मास्यां विशेषतः । सर्वकामानवाप्नोति इह लोके परत्र च ॥ ६ ॥
यस्तु सुप्ते हृषीकेशे मद्यमांसानि वर्जयेत् । मासे मासेऽश्वमेधेन स यजेच्च शतं समाः ॥ ७ ॥

१ हे ब्रह्मन्.

॥ २५ ॥

इत्यादि । तथा मार्कण्डेय उवाच—

तैलाभ्यङ्गं नरो यस्तु न करोति नराधिप । बहुपुत्रधनैर्युक्तो रोगहीनस्तु जायते ॥ १ ॥
पुष्पादिभोगसंत्यागात्स्वर्गलोके महीयते । कट्वम्लतिक्तमाधुर्यकषायक्षारषड्रसान् ॥ २ ॥
यो वर्जयेत्स वैरूप्यं दौर्भाग्यं नाप्नुयात्क्वचित् । ताम्बूलवर्जनाद्राजन् भोगलावण्यमाप्नुयात् ॥ ३ ॥
लभते संततिं दीर्घां तापपक्वस्य वर्जनात् । भूमौ स्रस्तरशायी च विष्णोरनुचरो भवेत् ॥ ४ ॥
एकान्तरोपवासी च ब्रह्मलोके महीयते । धारणान्नखलोमानां गङ्गास्नानं दिने दिने ॥ ५ ॥
उपवासस्य नियमं सर्वदा मौनभोजनम् । तस्मात्सर्वप्रयत्नेन चतुर्मास्यां व्रती भवेत् ॥ ६ ॥

इत्यादि भविष्योत्तरपुराणे । अनेकलोकलोकोत्तरशास्त्रवर्णितं चतुर्मासीव्रताङ्गीकरणं विज्ञाय स्वीकार्यं । अत्र ज्ञातं यथा—

विजयपुरे विजयसेनो नृपो बहुपुत्रो विजयश्रीपुत्रं राज्ययोग्यं मत्वा मैषोऽन्यैर्मार्यतामिति विचिन्त्य न सन्मानयति । ततः स दूनो दध्यौ—किं ममात्र स्थित्या ? यामि देशान्तरं । यतः—

"निग्गंतूण गिहाउ जो न निअइ पुहइमंडलमसेसं । अच्छेरसयरम्मं सो पुरीसो कूवमंडुको ॥ १ ॥
जज्जंति चित्तभासा तह य विचित्ता उ देसनीइउ । अच्चब्भुआइ बहुसो दीसंति महि भमंतेहि ॥ २ ॥"

ततो रहः खड्गहस्तो निशि निर्गतोऽसौ पृथिव्यां स्वैरं भ्रमन् कदाचिदरण्ये मध्याह्ने क्षुत्तृषाक्रान्तो यावज्जज्ञे, तावदेकेन सर्वाङ्गाकृतिदिव्यनरेण सस्नेहमालाप्य तस्मै रत्नमेकं सर्वोपद्रववारकं द्वितीयं च सर्वे-

ष्टसाधकं दत्तं । कोऽसीति कुमारेण पृष्टे तेनोक्तं—स्वपुरे प्राप्तो मुनिगिरा मच्चरित्रं ज्ञास्यसि । ततः स तद्रत्नमहिम्ना सर्वत्र स्वैरं विलसन् कुसुमपुरेशदेववर्मनरेशस्याकर्ण्योर्व्यथां तीव्रां पटहोद्घोषणाज्ज्ञात्वा रत्नमहिम्नाऽपजह्रे । तुष्टो राजा राज्यं पुण्यश्रियं पुत्रीं च दत्त्वा निष्क्रान्तः । पिताऽप्यथ स्वपट्टे तं न्यस्य निष्क्रान्तः । एवं राज्यद्वयं स भुंक्ते ।

अन्यदा त्रिज्ञानी देववर्मराजर्षिस्तस्य प्राग्भवं प्राह—क्षेमपुर्यां श्रेष्ठी सुव्रतो गुरुपार्श्वे यथाशक्ति चतुर्मासीनियमान् स्वीचक्रे । तद्भृत्यस्तु रात्र्यशनं मधुमद्यमांसाशनं च प्रतिवर्षं वर्षाचतुर्मास्यां नियमितवान् । स मृत्वा त्वं जातः । सुव्रतस्तु महर्द्धिसुरः । तेन प्राच्यस्नेहाद्रत्नद्वयं दत्तं । ततो जातिं स्मृत्वा नानानियमान् प्रपाल्य नृपः स्वः प्राप्तो विदेहेषु च्युत्वा सेत्स्यति ।

उपलक्षणार्थमन्यच्च चतुर्मासिककृत्यमपि धारणीयं । यथा फाल्गुनपूर्णिमात आरभ्य कार्त्तिकपूर्णिमान्तं यावत् पत्रशाकं प्रायेण न भक्ष्यं, तिलादिद्रव्यं न रक्ष्यं, बहुत्रसविनाशहेतुत्वात् । सामान्यत उक्तं च काव्यम्—

> अज्ञातकं फलमशोधितशाकपत्रं, पूगीफलानि सकलानि हि हट्टचूर्णम् ।
> मालिन्यसर्पिरपरीक्षितमानुषाणामेते भवन्ति नितरां किल मांसदोषाः ॥ १ ॥

यद्यपि चतुर्मासकत्रयमपि यथार्हविधिनालमयोग्यानि, तथापि तत्राद्यतिथयो विलोक्याः । ताश्च त्रिधा—द्वे चतुर्दश्यौ द्वे अष्टम्यौ अमावास्या पूर्णिमा च । एताः षट् चारित्रतिथयः । द्वितीया पञ्चम्ये-

कादशी चेति ज्ञानतिथयः । आसु ज्ञानमाराध्यं । अन्या दर्शनतिथयस्तासु दर्शनमहिमा कार्यः । एतासु सामान्यतः सर्वासु तिथिषु देवार्चनागमश्रवणादिक्रिया कार्या विशेषेण चातुर्मासिकपर्वणि च । यतः—

सामायिका १ वश्यक २ पौषधानि ३, देवार्चन ४ स्नात्र ५ विलेपनानि ६ ।
ब्रह्मक्रिया ७ दान ८ तपोमुखानि ९, भव्याश्चतुर्मासिकमंडनानि ॥ १ ॥

लेशतश्चार्थोऽयम्—हे भव्या ! एतानि पदानि चतुर्मासिकस्यालङ्कारभूतानि सन्ति युष्माकं सेवनीयानीति । तत्र प्रथमं मुहूर्त्तकालं यावद्रागद्वेषहेतुषु यत् माध्यस्थ्यं तत्सामायिकं । इह श्रावको द्विधा ऋद्धिमान् अनृद्धिमांश्च । तत्र योऽसौ ऋद्धिमुक्तः स चतुर्षु स्थानकेषु चैत्ये साधुसमीपे पौषधशालायां स्वगृहे वा निर्विघ्ने स्थले सामायिकं करोति।महर्द्धिकस्तु साडम्बरेणोपाश्रयमेत्य तनोति शासनोन्नत्यर्थं च १८०० इभ्यैः सह कुमारपालवत् चन्द्रावतंसकवच्चेति १ । आवश्यकमुभयकालमवश्यं करणीयं । यतः—

का चीवराण पवरा किं दुल्लहं मरुदेसमज्झम्मि । किं पवणाउ चवलं दिवसकयं किं हरइ पावं ॥ १ ॥

पडि वस्त्रं, कं जलं, मणं मनः, इति व्यस्तं । समस्ते तु दिवसकृतं पापं हरतीति प्राकृतभाषायां पडिकमणं इति महणसिंहादिवत्कार्यं २ । पौषधश्च चतुःपर्व्यां चतुर्विधः कार्यः ३ । अर्चनं वासादिना ४ । स्नात्रं जलादिना ५ । विलेपनं कुङ्कुमादिना । एतत्पदत्रयेण समस्तपूजासंग्रहो ज्ञेयः ६ । ब्रह्मचर्यं पाल्यं सुदर्शनश्रेष्ठ्यादिवत् । तथा रावणाहृतसीतामार्गगवेषणे कुंडलादीनि लब्ध्वा रामं प्रति लक्ष्मण उवाच—

"कुंडलैर्नाभिजानामि नाभिजानामि कंकणैः । नूपुरैस्त्वभिजानामि नित्यं पादाब्जवन्दनात् ॥ १ ॥"

इति परदारावयवगतभूषणदर्शनमपि निषिद्धमिति शीलपदं ७। दानं पञ्चविधं प्रसिद्धं ८। दुष्टाष्टकर्मघ्नं तपः ९। इत्याद्यनेकचतुर्मासिककृत्यतत्परसूर्ययशआदयो दृष्टान्ताः स्वयमभ्यूह्याश्चेति।

इत्युपदेशप्रासादवृत्तौ प्रावृट्क्रियास्पदम्। श्रीप्रेमविजयाद्यर्थं वर्णनं लिखितं मया ॥ १ ॥

आषाढशुक्लादिचतुर्दशीतिथेः, कृत्यानि संश्रुत्य सुचेतनान्वितैः।
लक्ष्म्यादिसूरिप्रणितान्युपासकैः, सेव्यानि निर्वाणसुसाध्यशालिभिः ॥ १ ॥

॥ इत्युपदेशप्रासादे सप्तमस्तंभे चतुरुत्तरशततमं व्याख्यानम् ॥ १०४ ॥

## ॥ अथ पञ्चोत्तरशततमं व्याख्यानम् ॥ १०५

अथ विषये बहुलपापं दुःखप्रचुरं वर्ण्यते—

विषयार्त्तमनुष्याणां दुःखावस्था दश स्मृताः। पापान्यपि बहून्यत्र सारं किं मूढ पश्यसि ॥ १ ॥

कामिनां नराणां दश दुःखकरावस्थाः प्रोक्ताः। ताश्चेमाः—

प्रथमे त्वभिलाषः स्याद्द्वितीये ह्यर्थचिन्तनम्। अनुस्मृतिस्तृतीये च चतुर्थे गुणकीर्त्तनम् ॥ १ ॥
उद्वेगः पञ्चमे ज्ञेयो विलापः षष्ठ उच्यते। उन्मादः सप्तमे ज्ञेयो भवेद्व्याधिरथाष्टमे ॥ २ ॥
नवमे जडता प्रोक्ता दशमे मरणं भवेत्।

इति दश भेदा ज्ञेयाः । तथा सिद्धान्तेऽपि कामिनां सुखविपर्ययमेवाह—

जइ तं काहिसि भावं जा जा दिच्छसि नारीओ । वायाविद्धुव्व हढो, अट्ठिअप्पा भविस्ससि ॥ १ ॥

यदि त्वं या नारीर्द्रक्ष्यसि तासु तासु भावं-चित्तविकारं करिष्यसि, यत्तदोर्नित्यसम्बन्ध इति तदा वातोद्धूतो वायुनोन्मूलितो हढो वृक्ष इवास्थितात्मा क्वाप्यप्राप्तस्थैर्यो भविष्यसीति भावः । तथा च—

तीरात्तीरमुपैति रौति करुणं चिन्तां समालम्बते,
किञ्चिद्ध्यायति निश्चलेन मनसा योगीव मुक्तेक्षणः ।
स्वां छायामवलोक्य कूजति पुनः कान्तातिमुग्धः खगो,
धन्यास्ते भुवि ये निवृत्तमदना धिग्दुःखिताः कामिनः ॥ १ ॥

इति । तथाऽत्र भोगे पापान्यपि बहूनि संपद्यन्ते । यतः श्रीमद्वाक्यम्—

सयसहस्साणनारीणं पोट्टं फोडेइ निग्घिणो । सत्तट्ठमासिए गब्भे तप्फडंते निकंतई ॥ १ ॥
जा तस्स जत्तिय पावं ते ततीयं नवगुणं भवे । एक्कसित्थीपसंगेण साहु बंधिज्ज मेहुणो ॥ २ ॥
साहुणीए सहस्सगुणं मेहुणेक्कसि सेविए । कोडिगुणे वि एजोव तइए बोहि पणस्सइ ॥ ३ ॥

इत्यादीनि पापानि । तथा योगशास्त्रेऽपि—

योनियन्त्रसमुत्पन्ना ये सूक्ष्मा जन्तुराशयः । पीड्यमाना विपद्यन्ते यत्र तन्मैथुनं त्यजेत् ॥ १ ॥

जन्तुसद्भावं वात्स्यायनोऽप्याह—

रक्तजाः कृमयः सूक्ष्मा मृदुमध्याधिसक्तयः ।

इत्यादिना स्त्रीसङ्गेऽसङ्ख्यजीवानां घात एव। अतो हे मूढ! त्वं अस्मिन् विषये किं सारं तत्त्वं पश्यसि?। लौकिकशास्त्रेऽप्युक्तम्—

भिक्षाशनं तदपि नीरसमेकवारं, शय्या च भूः परिजनो निजदेहमात्रम् ।
वस्त्रं विशीर्णपटखण्डमयी च कन्था, हा हा तथापि जन्तु (हि जनो) र्विषयाभिलाषी ॥ १ ॥

कामभोगे सङ्कल्पितमात्रं सारं, न पारमार्थिकमिति श्लोकार्थः। अथ स्त्रीसङ्गं भावतो जहाति स एव ब्रह्मचारीत्याह—

रामासङ्गं परित्यज्य व्रतं ब्रह्म समाचरेत् । ब्रह्मचारी स विज्ञेयो न पुनर्वन्ध्यघोटकः ॥ १ ॥

स्त्रीणां सङ्गः—आसक्तिस्तं त्यक्त्वा यो भावतः शीलं समालम्बते स ब्रह्मव्रतधारी ज्ञातव्यः। यतः स्त्रियस्तु लोकलोकोत्तरे दोषकरा एवैताः प्रत्यक्षा राक्षस्यः स्वजनस्नेहविघातकारिण्यो मायादिबहुलाः। यदुक्तम्—

न सा कला न तज्ज्ञानं न सा बुद्धिर्न तद्बलम् । ज्ञायते यद्वशाल्लोके चरित्रं चलचक्षुषाम् ॥ १ ॥

वामासङ्गान्मुञ्जनृपो महद्दुःखं प्राप । तथाहि—

मालवमण्डले परमारवंशी श्रीसिंहभटभूपो वनशोभां विलोकयन् शरवणमध्ये जातमात्रं बालकं समीक्ष्य मुञ्जनामा पुत्रः कृतः। तदनु सिंधुलनामा सुतोऽजनि। क्रमान्मुञ्जो राज्यं प्राप्तः। मुञ्जेन दुर्दान्तं भ्रातरं

ज्ञात्वा निगडे निहितः। तस्य श्रीभोजसुतो जातः। कदाचिज्जातविदा केनापि नैमित्तिकेन जातकभाग्य-बलमित्थं प्रोक्तं—

"पञ्चाशत्पञ्च वर्षाणि मासान् सप्त दिनत्रयम्। भोजदेवेन भोक्तव्यं सगौडं दक्षिणापथम्॥ १॥"

इत्यवधार्य 'भोजे सति मम सूनो राज्यं न भविष्यति' इति तं भोजमन्त्यजेभ्यो वधाय समर्पयामास। वधस्थले तैर्बाल! इष्टं स्मरेत्यभिहिते स बालो बुध्या पपाठ। यतः—

मान्धाता स महीपतिः कृतयुगालङ्कारभूतो गतः, सेतुर्येन महोदधौ विरचितः क्वासौ दशास्यान्तकृत्।
अन्ये चापि युधिष्ठिरप्रभृतयो याता दिवं भूपते नैकेनापि समं गता वसुमती मन्ये त्वया यास्यति॥ १॥

इदं काव्यं पत्रके आलिख्य प्रेषितं। तद्दर्शनाज्जातक्रोधो मुञ्जस्तूर्णं तमानाय्य युवराजपदेऽस्थापयत्। अन्यदा मुञ्जो भोजस्य राज्यं दत्त्वा स्वयं तिलङ्गदेशीयनृपेण सार्द्धं युद्धाय गतः। अथ तैलङ्गभूपेन तं जित्वा कारागारे क्षिप्तः। तत्र मृणालवत्या तद्भगिन्या सह जातसम्बन्धस्तस्थौ। पश्चाद्भोजादिभिः सुरङ्गा-दानपूर्वं ज्ञापितः संकेतः। कदाचिद्दर्पणे मुञ्जः स्वं प्रतिबिम्बमपश्यत्, पृष्ठतः प्रछन्नं समागता मृणालवती स्वास्यप्रतिबिम्बं जरात्मकं मुकुरे वीक्ष्य विषण्णा। तामेवं नृपः प्राह—

"भणइ मुंज मिणालवइ जुव्वण गयो म झुर। जइ सक्करसयखंडकिअ तोइं तिसि मिठि चूर॥ १॥"

इति तां संभाष्य स्वस्थानं प्रतियियासुः स्नेहलुब्धः प्रोवाच—अनया सुरङ्गया स्वस्थानं गन्तास्मीति चेद्भवती तत्र समुपैति तदा त्वां पट्टदेवीं करोमि। साह—स्वामिन् क्षणं प्रतीक्षस्व इत्यभिधाय दध्यौ—स

तत्र गतो मां परिहरिष्यति इति विमृश्य स्वभ्रातुस्तं वृत्तान्तं निवेद्य विशेषतो बन्धनं कारयित्वा प्रतिदिनं भिक्षाटनं कारयामास । स प्रतिगृहं भ्रमन्निर्वेदेनेमानि वाक्यानि पपाठ—

"इत्थि पसंग मत को करउ तिय विसास दुखपुंज । घर घर तिम नचावियउ जिम मक्कड तिम मुंज ॥१॥
झंखवि वेस वहा यती जे दासिहि रचंति । ते नर मुंज नरिंद जिम परिभव घणो सहंति ॥ २ ॥
जा मति पिछे उपजे सा जइ पहिली होय । पभणइ मुंज मिलाणवई न वि विगुप्पइ कोई ॥ ३ ॥"

एकदा कस्याश्चिद्गृहे भिक्षा मार्गिता । तया गर्वेण मुञ्जस्तिरस्कृतः । तदोवाच सः—

"धणवंती म म गव कर पिक्खिवि पडुयाइं । चउदहसइं छहत्तरइ मुंजह गयह गयाइं ॥ १ ॥"

अक्षयतृतीयादिने गलद्घृतबिन्दुके मंडके तुंडेन रंडया कयाचित् खंडिते भिक्षां भ्रमन्मुञ्ज आह—

"रे रे मंडक मा रोदीर्यदहं खंडितोऽनया । रामरावणमुञ्जाद्याः स्त्रीभिः के के न खंडिताः ॥ १ ॥
रे रे यंत्रक मा रोदीः कं कं न भ्रमयन्त्यमूः । कटाक्षाक्षेपमात्रेण कराकृष्टस्य का कथा ॥ २ ॥
इन्दुलेखेव कुटिला सन्ध्येव क्षणरागिणी । निम्नगेव निम्नगतिर्वर्जनीया नितम्बिनी ॥ ३ ॥"

इत्थं सुचिरं भ्रामयित्वा भिक्षां यमातिथिः कारितः । इत्यादिना लोकशास्त्रेऽपि तासां सङ्गस्त्याज्यः प्रोक्तस्तदा जैनागमे तु विशेषेण ज्ञेयः । तत्सङ्गान्नावतो यो व्रती स ब्रह्मचर्यधरो निर्णेयः । न पुनर्बद्धघोटकाः । यतस्तेऽश्वा नियंत्रिताः परिचारणं द्रव्यतो न कुर्वन्ति, परं मनसाऽजस्रं स्मरन्तोऽनेककर्माणि 

१ विषयम्.

बध्नन्ति । यथा कस्यचिन्नृपस्याग्रे केनचिदेकोऽश्वो रम्यवर्ण उपायनीकृतः । नृपेणाश्वशालायां बन्धितः । एकदा तत्र शालायामेकान्तप्रदेशे मुनयश्चातुर्मासके स्थिताः सदा धर्मवर्णनमकुर्वन् । तद्यथा—शीलव्रते द्रव्यभावाभ्यां चत्वारो भेदा भवन्ति । तत्र शीलं द्रव्यतः पालयति परं न भावतो भवदेववत् तद्रत्न-प्राप्त्यादिनेति । अथवा नैषधे दीक्षागृहीते पूर्वं लक्षवर्षाणि यावत् सौख्ये भुक्तेऽपि दमयन्तीं साध्वीं दृष्ट्वा रागो जातः । तदा स्वव्रतखण्डनभिया दमयन्त्याऽनशनं कृतं । सुरत्वं प्राप्ता । तत्रैत्य स प्रतिबोधितः । मृत्वा वैश्रवणो जातः । यतः—

विहिणा विसयं विहिउं सरागधम्मो न साहए मुक्खं । नलराजा थेरो विहु जं संपत्तो कुबेरत्तं ॥ १ ॥

इति प्रथमः । तथा कश्चिज्जीवो द्रव्यतः स्त्रीसङ्गं स्पर्शं करोति परं भावतो व्रतं पालयति एकपल्यङ्कशायिदम्पतिवत् स्त्रीपाणिग्रहणसमये जम्बूस्वामिवद्वेति २ । तथा कश्चिज्जीवो द्रव्यतो भावतश्च राजीमत्यादिवत् इति ३ । तथा न द्रव्यतो न भावतः, अस्मिन् भङ्गे बहवो जीवा अस्मादृशा ज्ञेयाः ४ । इत्यादिधर्मदेशनां शृण्वन् सोऽश्वो मनसा ब्रह्मचर्यं जग्राह । एकदा नृपेण बीजवृद्ध्यर्थं स वाजी अश्व्याः सङ्गं कारितः, परं पूर्ववन्नोत्सहते । ततो नृपो विस्मयमापन्नो गुर्वन्तिके एत्य पप्रच्छ—भगवन् कथमयं तुरङ्गमोऽश्वीं न सेवते ? । मुनिराह—अनेन व्रतं मनसा गृहीतमस्ति । राजाऽवोचत्—अनेन पूर्वं परिचारणं कृतं, परमन्ये मदश्वाः सन्ति, तैरा जन्मतः शीलं धृतमस्ति, अत एतस्मात्त एव वर्याः प्रशंसनीयाश्च । गुरुराह—नैतदेवं, यतस्ते बन्धघोटकाश्चित्ते प्रत्यहं विषयं स्मरन्ति, अतः शीलस्यैकांशोऽपि तेषां

नायाति । अयमश्वस्तु ब्रह्मचर्येण स्वर्गं प्राप्स्यति । इति श्रुत्वा नृपः प्रतिबुद्धः श्रावकधर्ममङ्गीचकार । एतद्वृत्तान्तस्योपनयमवधार्य ब्रह्मव्रतं यो गृह्णाति स एव गुणीति भावार्थः । अथैतद्व्रतमुपसंहरन्नाह—

ब्रह्मचारिसमो विश्वे गुणी नास्ति जगत्त्रये । तस्माद्भो भाविनो जीवा आचरध्वमिदं व्रतम् ॥ १ ॥

स्पष्टः ।

व्रतं चतुर्थं बहुभिः प्रबन्धैर्लिपीकृतं सूत्रवचोऽनुसारम् ।
उपार्जितं यल्लिखनेन पुण्यं, सदाऽस्तु सर्वं मम तेन सौख्यम् ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशप्रासादस्य संग्रहाख्यायां वृत्तौ पञ्चोत्तरशततमः प्रबन्धः ॥ १०५ ॥

॥ समाप्तः सप्तमः स्तंभः ॥ ७ ॥

# श्रीउपदेशप्रासादे ।

## ॥ अष्टमः स्तम्भः ॥ ८ ॥

### ॥ अथ षडुत्तरशततमं व्याख्यानम् १०६ ॥

अथ परिग्रहाख्यं पञ्चममहाव्रतमाह—

परिग्रहाधिकः प्राणी प्रायेणारंभकारकः । स च दुःखखनिर्नूनं ततः कल्प्या तदल्पता ॥ १ ॥

परिगृह्यते इति परिग्रहः धनादिस्तेनाधिकः स प्राणी प्रायेणारम्भकर्त्ता, कश्चित्परिग्रहवान् सम्प्रतिवत् शुभक्षेत्रेष्वपि व्ययति अतः प्रायेणेति पदं, स च परिग्रहो नूनं निश्चयेन दुःखानां खानिराकरः, तस्मात्कारणात् तस्याल्पता कल्प्या परिमाणमेतावदेवेति कार्यमित्यर्थः ।

अत्रेयं भावना—परिग्रहो द्विविधः, बाह्यो धनधान्यादिः, अभ्यन्तरो रागादिश्च, अथवा सचित्तो द्विपदादिः परिग्रहः, अचित्तो वस्त्रादिश्च । तत्र गृहस्थः सचित्तादेरपरिमाणात् परिग्रहाद्विरमति सचित्तादिगोचरेच्छापरिमाणं करोति तत्पञ्चममणुव्रतमिति ।

सम्प्रति फलोपदर्शनपूर्वं परिग्रहनियममाह—

परिग्रहमहत्त्वाद्धि, मज्जत्येव भवाम्बुधौ । महापोत इव प्राणी, त्यजेत्तस्मात्परिग्रहम् ॥ २ ॥

परिग्रहस्य महत्त्वं तस्माद्धेतोः, मज्जत्येव प्राणी, भवे-संसारे, क इव क? अम्बुधौ-समुद्रे महापोत इव-नौरिव यथा महाभारेणाक्रान्तः पोतो नीरधौ ब्रुडति तथैवापरिमितपरिग्रहः प्राणी नरकादौ निमज्जति, यस्मादेवं तस्मात्त्यजेत्-नियन्त्रयेत् परिग्रहं गृहस्थः धनादीनामिच्छापरिमाणं करोतीति तात्पर्यार्थः। अत्रार्थे विद्यापतिज्ञातमिदम्—

पोतनपुरे सूरो राजा, विद्यापतिर्धनी जैनः, तस्य पत्नी शृङ्गारमञ्जरी, एकदा विद्यापतेः स्वप्ने लक्ष्मी-देवी पुरो भूत्वेदमब्रवीत्-'अहं तव गृहाद्दशमे दिने यास्यामि' इति श्रुत्वा प्रबुद्धः, अहं निःस्वः स्यामिति सचिन्तो जातः। यतः—

न तथा बाधते लोके, प्रकृत्या निर्धनो जनः। यथा द्रव्यं समासाद्य, तद्विहीनः सुखोचितः॥ १॥

स शोककारणं स्त्रिया पृष्टः स्वप्नस्वरूपं जगौ। यतः—

"इह लोकोऽपि धनिनां, परोऽपि स्वजनायते। स्वजनास्ते दरिद्राणां, तत्क्षणाद्दुर्जनायते॥ १॥

पूज्यते यदपूज्योऽपि, यदमान्योऽपि मन्यते। वन्द्यते यदवन्द्योऽपि, स प्रभावो धनस्य हि॥ २॥"

स्त्री प्राह—"हे स्वामिन्! किं खेदं कुरुषे? धर्मेणैव श्रीः स्थिरा भवति, पञ्चमाणुव्रतेऽगृहीते त्रिभुवनवर्त्तिपरिग्रहेण यत् पापं भवति तदविरत्या समागच्छति", इति प्रियावाक्येन तेनेदं व्रतं स्वीकृतं। सप्तक्षेत्र्यां धनं वपन् "धनं विना याचकानां प्रातर्मुखं कथं दर्शयिष्यते? तस्माद्विदेशे एव गमनं रम्यं" इत्यालोच्य सुप्तः। तथैव लक्ष्म्या पूर्णं जातं गृहं दृष्टं। निद्रान्ते साक्षात् दृष्ट्वा पुनः संघस्य शत्रुञ्जयस्य

च धनव्ययेन कृता भक्तिः । नवमे दिने दध्यौ—'कल्ये दशमदिनत्वाच्छ्रीर्यास्यति, परं सुखेन यातु' एवं ध्यात्वा सुप्तः । तं स्वप्ने लक्ष्मीरुवाच—"तव पुण्यैरहं स्थिरा जातास्मि, यतः—

त्रिभिर्वर्षैस्त्रिभिर्मासैस्त्रिभिः पक्षैस्त्रिभिर्दिनैः । अत्युग्रपुण्यपापानामिहैव फलमाप्यते ॥ १ ॥

तथा चोक्तं श्रीहर्षेणापि—

पूर्वपुण्यविभवव्ययबद्धाः, संपदो विपद एव विसृष्टाः ।
पात्रपाणिकमलार्पणमासां, तासु शान्तिकविधिर्विधिदृष्टः ॥ १ ॥

अतोऽहं तव गृहाद्गन्तुं न शक्नोमि, यथेच्छं मां भुंक्ष्व" इति दृष्ट्वा ( श्रुत्वा ) प्रबुध्य स्वप्रियां जगौ—"लक्ष्मीः स्थिरा जाता, आवयोर्व्रतभङ्गो न स्यादत इयं मुक्त्वा गम्यते" प्रगे तां मुक्त्वा यावन्नगराद्बहिर्गतौ तावत्पञ्चदिव्यै राज्यं दत्तं, मन्त्र्यादिभिः प्रार्थ्य राजभवनं नीतः । राज्याभिषेककारकान् यावन्निषेधयति तावद्दिव्यवाणीयं संजाता—'भोः! तवाद्यापि भोग्यं कर्मास्ति, अतः श्रियः फलं गृहाण' इति श्रुत्वा सिंहासने श्रीवीतरागप्रतिमां निवेशयन् मन्त्रिणो राज्यकार्यं दत्त्वा न्यायद्रव्यं यत्समेति तज्जिननामाङ्कितं चकार । स्वयं तु नियमं न मुमोच । क्रमेण स्वसुतं राज्ये न्यस्य प्रव्रज्यां गृहीत्वा देवभूयं गतः । ततः पञ्चभिर्मर्त्यभवैः परमं पदं प्राप ।

श्रीविद्यापतिदृष्टान्तं श्रुत्वा नियमचेतनैः । भाव्यं भव्यजनैर्धर्मस्पृहैर्मितपरिग्रहैः ॥ १ ॥

॥ इत्युपदेशप्रासादेऽष्टमस्तम्भे षडुत्तरशततमं व्याख्यानम् ॥ १०६ ॥

## ॥ अथ सप्तोत्तरशततमं व्याख्यानम् १०७ ॥

अथैतद्व्रतस्य पञ्चातिचारा वर्ज्याः । तद्यथा—

धनधान्यस्य कुप्यस्य, गवादेः क्षेत्रवास्तुनः । हिरण्यहेम्नश्च सङ्ख्यातिक्रमोऽत्र परिग्रहे ॥ १ ॥

धनं चतुर्धा । यत उक्तम्—

गणिमं जाइं पुप्फफलाइं १ धरिमं तु कुंकुमगुडाई २ ।
मेज्जं चोप्पडलोणाइ ३ रयणवत्थाइं परिच्छेज्जं ४ ॥ १ ॥

धान्यं च व्रीह्यादि चतुर्विंशतिधा । धनं च धान्यं च तस्यातिक्रमोऽतिचारः गृहीतप्रमाणाधिक्येन स्थूलमूढकबन्धनेन वेति प्रथमः १ । कुप्यं रूप्यसुवर्णव्यतिरिक्तं कांस्यादिधातुमृण्मयवंशकाष्ठहलशस्त्रमञ्चकमसूरकादि गृहोपस्कररूपं तस्य सङ्ख्यादिप्रमाणाधिक्ये स्थालकच्चोलादीनां नियमितसङ्ख्याकरणार्थं स्थूलत्वादिविधापनेन कुप्यातिक्रमरूपो द्वितीयः २ । गवादेः गौरनड्वानड्वाही च, स आदिर्यस्य द्विपदचतुष्पदवर्गस्य स गवादिः, आदिशब्दान्महिषादीनां हंसशुकादिपक्षि(णां)द्विपदानां पदात्यादीनां सङ्ग्रहः, तस्यातिक्रमोऽतिचारः, गोमहिषीवडवादेर्गर्भस्य बहिरदृश्यत्वादगणने प्रमाणातिक्रमस्तृतीयः ३ । क्षेत्रं सस्योत्पत्तिभूमिस्तत्त्रिविधं सेतुकेतूभयभेदात् । तत्र सेतुक्षेत्रं यदरघट्टादिजलेन सिच्यते १, जलदजलनिष्पाद्यसस्यं केतुक्षेत्रं २, एतद्द्वाभ्यामुभयक्षेत्रं ३, वास्तु गृहादि ग्रामनगरादि, तत्र गृहादि त्रिविधं, खातं भूमिगृहादि १, उच्छ्रितं प्रासादादि २, खातोच्छ्रितं भूमिगृहस्योपरिगृहादिसन्निवेशः ३। क्षेत्रं च वास्तु चेति

समाहारस्तस्यैकादिप्रमाणे कृतेऽधिकाभिलाषादासन्नं क्षेत्रं गृहं वा गृहीत्वा व्रतभङ्गभयात् पूर्वेण सहैकत्वकरणार्थं वृतिभित्त्याद्यपनयनेन क्षेत्रवास्तुप्रमाणातिक्रमश्चतुर्थः ४। हिरण्यहेम्नो रजतसुवर्णस्य प्रमाणादाधिक्ये पत्नीपुत्रादिभ्यः प्रदानेन रूप्यसुवर्णप्रमाणातिक्रमः पञ्चमः ५। अत्र व्रते इमे पञ्च त्याज्याः, न युज्यते कर्तुमिति विशेषः, व्रतमालिन्यहेतुत्वात्। अत्रेयं भावना—विवेकवता मुख्यवृत्त्या धनधान्यादिपरिग्रहस्यापि प्राक् सतः कियत्संक्षेपणं कार्यं, तदशक्ताविच्छापरिमाणमवश्यं विधेयं, तस्याः स्वाभिप्रायेण मानं तु सर्वेषां सुकरत्वात्। ननु गृहे द्रव्यशतस्य संदेहः, इच्छापरिमाणे तु द्रव्यसहस्रलक्षादिपरिमाणं प्रतिपद्यते, एवं च को गुणस्तस्य? उच्यते—तदधिकेच्छाऽकरणान्महान् गुणः, यथा यथेच्छाया आधिक्यं तथा तथा दुःखस्यापि, दृश्यन्ते हि गृहे सुखेन निर्वाहेऽप्यधिकाधिकधनार्जनयाऽनेकक्लेशाभिरन्तरमनुभवन्तः। यतः सिन्दूरप्रकरणे उक्तम्—

यद्दुर्गामटवीमटन्ति विकटं क्रामन्ति देशान्तरं, गाहन्ते गहनं समुद्रमतुलक्लेशां कृषिं कुर्वते।
सेवन्ते कृपणं पतिं गजघटासंघट्टदुःसंचरं, सर्पन्ति प्रधनं धनान्धितधियस्तल्लोभविस्फूर्जितम् ॥ १ ॥

परिग्रहस्य स्वल्पत्वात्स्वल्पं दुःखं स्वल्पा चिन्ता च। यतः—

जह जह अप्पो लोहो जह जह अप्पो परिग्गहारंभो। तह तह सुहं पवड्ढइ धम्मस्स य होइ संसिद्धी ॥ १ ॥

तस्मादिच्छाप्रसरं निरुध्य स्वीकार्यमेतद्व्रतं। एतद्व्रतविषये पेथडश्राद्धप्रवन्धः—

कर्करासन्नग्रामे पेथडसाधुवणिक् उकेशज्ञातीयोऽवसत्, अभूत् तस्य पद्मिनी पत्नी, तयोः सुतो दंराणो

जातः, स वालः दुःस्थावस्थायां दुःखी जातः, इतस्तत्र श्रीधर्मघोषसूरयः समागताः, तत्पार्श्वे पञ्चमं व्रतं गृह्णन् 'सहस्रटंककानामुपरि मम निषेध' इत्युक्तवान्, तदा गुरुः प्राह—"ज्ञानेन चेष्टया च त्वद्भाग्यं महद्वर्त्ततेऽत एतावता किं भविष्यति ?' पेथडः प्राह—'अधुना तु मम किमपि विशेषद्रव्यं नास्ति, परं कदाचिदग्रे प्राप्नोमि तदा मया पञ्चलक्षटंककानामुपरि (न) परिग्रहे स्थाप्यं धर्मे व्ययितव्यं' गुरुणा प्रत्याख्यानं कारितं, ततः क्रमाद्दुःखाधिक्ये पुत्रं सुंरूलकारूढं कृत्वा मालवकं प्रति चलन् मालवकसन्धौ गतः। तत्र सर्पमग्रे उच्चरन्तं दृष्ट्वा यावत् स्थितस्तावदेकः शाकुनिकः समागात्, तेनोक्तं 'कथं स्थितोऽसि ?' स च सर्पं दर्शयामास। शाकुनिकः सर्पशिरःस्थां दुर्गां दृष्ट्वाऽवक्—'यदि वहन्नेवाग्रेऽयास्यस्तदा मालवकराज्यं तवाभविष्यत्, तथापि शकुनं मानयित्वा गच्छ, महाधनो भविष्यसि, यतः—

'खर झाबा विसहर जमणा झावलाली हुंति। कंत म लेज्यो संबल ह संबल तेह दियति ॥ १ ॥"

तच्छ्रुत्वा स मालवके गतः। गोगादेवनृपस्य मंत्रिणः सेवकोऽभूत्। एकदा राज्ञा बहुष्वश्वेषु गृहीतेषु मन्त्री धनं याचितोऽवक्—'मम पार्श्वे नास्ति', ततो राज्ञोक्तं—'लेखकं देहि' सदिग्मूढो जातः, ततो रक्षितो राज्ञा, मन्त्रिपत्न्या पेथडाग्रे मन्त्रिधरणसंबन्धः प्रोक्तः, पेथडो राज्ञः पार्श्वे गत्वाऽवक्—'स्वामिन् मन्त्री जेमनाय मोच्यताम्', राजाऽवक्—'लेखकं विना न मोच्ये, स उवाच—'मन्त्री मुच्यतां, लेखकं वर्षसंबन्धिनं पेथडोऽहं दास्ये, अहं त्वस्य सेवकोऽस्मि', ततो मुक्तो मन्त्री भुक्त्वा भूयो नृपपार्श्वे समागात्। सर्वलेखकं वर्षसंबन्धिनं पेथडो ददौ, राजा तं विज्ञं मत्वा मन्त्रिणं चक्रे, ततः स्तोकैर्दिनैः पञ्चलक्षसंप-

त्तिर्मिलिता, ततोऽधिकलाभे चतुर्विंशतिर्तीर्थंकराणां चतुरशीतिं प्रासादान् कारयामास । गुरोः पुरः प्रवेशे द्वासप्ततिः टंकसहस्रा व्ययिताः । द्वात्रिंशद्वर्षवयसि शीलव्रतं गृहीतं । शत्रुञ्जयगिरिनारयोरेका ध्वजा हिरण्यरूप्यपट्टकूलमया दत्ता । द्विपञ्चाशद्घटीस्वर्णेनेन्द्रमाला परिदधे । तथा तेनैव शत्रुञ्जये श्रीऋषभचैत्यमेकविंशतिघटीस्वर्णेन सर्वतो मठयित्वा स्वर्णाद्रिशृङ्गमिव स्वर्णमयं चक्रे । इत्यादि बहुधनं धर्मे व्ययितं ।

परिग्रहाख्यं व्रतं पञ्चमं मतं, तदेकधर्मेण विभूतिमत्पदम् ।
पदे पदे प्राप सुपेथडो यथा, चिनोतु तद्व्रतदार्ढ्ययोग्यताम् ॥ १ ॥

॥ इत्युपदेशप्रासादेऽष्टमस्तंभे सप्तोत्तरशततमं व्याख्यानम् ॥ १०७ ॥

---

## ॥ अथाष्टोत्तरशततमं व्याख्यानम् १०८ ॥

अथ परिग्रहपरिमाणाकरणे दोषमाह—

श्रुत्वा परिग्रहक्लेशं, मम्मणस्य गतिं तथा । धर्मान्वेषी सुखार्थी वा, कुर्यात्स्वल्पपरिग्रहम् ॥ १ ॥

श्लोकोक्तप्रबन्धोऽयम्—राजगृहे श्रेणिको राजा । तस्य पत्नी चिल्लणा । अन्यदा गवाक्षस्था निशीथे नदीपूरागतकाष्ठानि बहिः कर्षन्तं कमपि नरं विद्युदुद्योतेन ददर्श, ततः सा श्रेणिकं प्रत्यूचे—"स्वामिंस्त्वमपि मेघवन्नृतमेव भरसि, एवंविधो दुःस्थस्त्वन्नगरेऽस्ति, तच्चिन्ता न क्रियते, महत्तव चातुर्यं", ततः श्रेणिकेनाकार्य स पृष्टः—"कस्त्वं ? किमेवं काष्ठानि कर्षसि ?" तेनोक्तं—"मम्मणनामा वणिगहं ।

द्वितीयवृषभस्य श्रृङ्गमेकं विलोक्यते, तदर्थमयमायासः", ततः सकौतुको देव्या सह नृपस्तद्गृहे गतः, तृतीयभूमौ सुवर्णमयं वृषभद्वयं प्रौढं दर्शितं, श्रृङ्गाणि रत्नमयानि, तद्वीक्ष्य विस्मितो नृपो देवीं प्राह—'मद्गृहे एकमपि रत्नमीदृग् नास्ति–किमस्य दीयते ?' सोऽभ्यधात्—"एतदर्थं मत्पुत्रैः पोतवाणिज्यं क्रियते, मद्गेहे न केनापि चणकतैलं विना भुज्यते, अन्यव्यापारे आपणादिषु द्रव्यव्ययः स्यादतः पयोदसमये रात्रौ काष्ठान्याकृष्य विक्रीय द्रव्यमर्जयामि", तत्कार्पण्यं श्रुत्वा राजा शिरो धुन्वन् गृहे आययौ, मम्मणोऽपूर्णमनोरथो मृत्वा नरकं प्राप ।

इति केचिन्महापापाः, प्राप्यामानं परिग्रहम् । गच्छन्ति नरकेऽन्नोगास्तन्मिनीत परिग्रहम् ॥ १ ॥

एतदेवाह—

तृप्तो न पुत्रैः सगरः, कुचिकर्णो न गोधनैः । न धान्यैस्तिलकः श्रेष्ठी, न नन्दः कनकोत्करैः ॥ १ ॥

सगरसम्बन्धस्त्वग्रे वक्ष्यते । मगधदेशे कुचिकर्णश्रेष्ठिनः लक्षशो गावः सन्ति । गोपास्ता दिने दिने वर्धयन्ति । एकदाऽतृप्त्या दुग्धादि यथेष्टं भुक्त्वा गोकुलध्यानेन मृत्वा तिर्यग्योनौ गतः ।

तथाऽचलपुरे तिलकश्रेष्ठी । तेनैकदा दुर्भिक्षे गृहीतधान्यानां लाभोऽर्जितः । एवं पुनर्नैमित्तिकवचसा दुर्भिक्षं ज्ञात्वा ग्रामे ग्रामेऽनेककोष्ठागारा भृताः । बहुधान्यसंग्रहं चक्रे । तत्रानेककीटकोटिविनाशं न गणयति । ततो मेघो वृष्टः, दुष्कालो न पपात । जलैः कोष्ठागाराः स्फुटिताः । धान्यं प्लावितं । तद्वीक्ष्य स हृदयस्फोटेन मृत्वा नरके गतः ।

तथा पाटलीपुरे उदायी राजा राज्यं करोति । स केनचित्साधुवेषभृता वैरिणा मारितः । तस्यानपत्यत्वाच्छून्यं राज्यं जातं । एतस्मिन्नवसरे तत्पुरे नापितगणिकयोः पुत्रो नन्दनामा स्वान्त्रैः पाटलीपुरं मया वेष्टितमिति स्वप्नं लेभे, प्रातस्तेनोपाध्यायस्याग्रे स्वप्नफलं पृष्टं, तेनोक्तं—'तवैतत्पुरराज्यं भविष्यति' इति वदन् स्वपुत्रीं तस्य परिणायितवान्, स नन्दः कन्यापाणिग्रहणं कृत्वा महामहेन स्वगृहं प्रति श्रीपथे गच्छन्नस्ति, इतो मन्त्र्यधिवासितहस्तिना तन्मूर्ध्नि कुम्भो ढालितः, नन्दो राज्ये उपविष्टः, सामन्ताः केऽपि तस्याज्ञां न मन्यन्ते, ततो नन्देन भित्तिचित्रितसुभटानां सन्मुखं विलोकितं, ततस्तैर्भूमावुत्तीर्य केऽपि निपातिताः, तदनु सर्वैस्तदाज्ञाऽङ्गीकृता, ततोऽयोग्यकरादिना बहु द्रव्यं समायातं । तस्याब्धितीरे सौवर्णकुंगरिका नव कारिताः, तेन नवनन्द इति नाम प्राप्तं । पृथिव्यामपकीर्तिपापभाजनं भूत्वा नरकं गतः, यतः—

विश्वोपकारि धनमल्पमपि प्रशस्यं, किं नन्दवत्फलममानपरिग्रहेण ।
प्रीत्यै यथा हिमरुचिर्न तथा हिमौघः, स्याद्वा यथात्र जलदो जलधिस्तथा न ॥ १ ॥

॥ इत्युपदेशप्रासादेऽष्टमस्तंभेऽष्टोत्तरशततमं व्याख्यानम् ॥ १०८ ॥

## ॥ अथ नवोत्तरशततमं व्याख्यानम् १०९ ॥

अथ परिग्रहासक्तोऽनेकपापं करोतीत्याह—

परिग्रहार्थमारंभमसन्तोषाद्वितन्वते । संसारवृद्धिस्तेनैव गृह्णीयात्तदिदं व्रतम् ॥ १ ॥

धनार्थमसन्तोषात्तृष्णात आरम्भः कृष्यादि भ्रात्रादिहननं च विदधाति, तेनैव—आरम्भेणैव भववृद्धिर-
तस्तन्नियमं गृह्णीयात् । अत्रार्थे प्रबन्धोऽयम्—
अवन्त्यां सोमशिवदत्तौ द्वौ भ्रातरौ, तौ अर्थाकांक्षिणौ सौराष्ट्रे गतौ, तत्रानेकाधर्मकर्मादानवाणिज्यं
कृत्वा द्रव्यवांसलिकां कट्यामग्रजो बबन्ध, ततः प्रस्थितौ स्वनगराभिमुखं, तयोर्मध्येऽग्रजो दध्यौ—
'यदि अनुजं हन्मि तदा कोऽपि भागं न मार्गयति', ततोऽनुजेन सह गन्धवतीं नदीमागतः, तत्र तेन
चिन्तितं—'इदं द्रव्यमनर्थकरमतो ह्रदे निक्षिपामि', इति विचार्य नकुलिनी क्षिप्ता नदीह्रदे, लघुब-
न्धुना पृष्टं—'किमिदं कृतं ?', तेन स्वाभिप्राय उक्तः, अनुजेनोक्तं—'वरं कृतं त्वया, ममापि दुष्टबु-
द्धिर्गता', ततस्तौ गृह आगतौ, इतश्च सा नकुली मत्स्येन गिलिता, मत्स्यस्तु धीवरेण गृहीतः, मात्सि-
कहस्तात्तयोर्मात्रा मूल्येन गृहीत्वा गृहे स्वपुत्र्यै ददौ, मत्स्यं विदारयन्त्या तया नकुली वीक्ष्य प्रछन्न-
मुत्सङ्गे न्यस्ता, मात्रा पृष्टं—'किमिदं ?', तयोक्तं—'न किमपि', ततः सा विलोकनाय यावदायाति
तावत्पुत्र्या कृपाणिना हता मृता च । ततो भगिन्या उत्सङ्गात्पतन्ती नकुली ताभ्यां दृष्टा 'अहोऽयं
सोऽर्थोऽनर्थद' इत्यादि विचार्य सहोदरौ वैराग्यं प्राप्तौ, गुरुपार्श्वे एत्येमां वाणीं शुश्रुवतुः—
तृष्णाखानिरगाधेयं दुष्पूरा केन पूर्यते ? । या महद्भिरपि क्षिप्तैः पूरणै(कै) रेव खन्यते ॥ १ ॥
तृष्णान्वितो जीवो धनप्रकटीकरणाय बहु पापं करोति, तेन किं सुखं पापद्रव्येण ? न किमपि, यतः—
धम्मिट्ठी भोगिट्ठी पाविट्ठी इअ तिहा भवे इट्ठी । सा भणइ धम्मिट्ठी जा दिज्जइ धम्मकज्जेसु ॥ १ ॥

सा भोगिड्ढी भिणिजइ फलेन पावस्स पुव्वविहियस्स । पावेण भाविणा वा इत्थत्थे सुणेह दिट्ठंतं ॥ २ ॥

वसन्तपुरे चत्वारि मित्राणि क्षत्रियद्विजवणिक्स्वर्णकाराः, देशान्तरमर्थार्थं गत्वा रात्रावुद्याने वटतरोरधः स्थिताः, तत्र शाखायामालम्बमानं स्वर्णपुरुषं ददृशुः, तेनोक्तं—'अहमर्थोऽपि परमनर्थप्रदोऽस्मि', तच्छ्रुत्वा सर्वैर्भीत्या त्यक्तः, स्वर्णकारेणोक्तं—'भोः सुवर्णपुरुष पत पत', ततः स पपात । स्वर्णकारेण स गर्त्तामध्ये प्रच्छन्नं क्षिप्तः, परं सर्वैर्दृष्टः, ततस्तेभ्यो द्वयं भोजनानयनाय पुरान्तर्गतं, द्वयं तु वहिः स्थितं, ग्राममध्यगतद्वयेन वहिःस्थितमारणाय विषान्नमानीतं । वहिः स्थितेन द्वयेन मध्यादागच्छद्द्वयं खड्गेन हत्वा विषान्नं भुक्तं, सर्वे मृताः, एषा पापर्द्धिः । अतो निजर्द्धिर्नित्यं पुण्यकार्ये व्ययितव्या । न च धनस्तोकत्वादिना धर्मकार्ये विलम्बः कार्यः, यत उक्तम्—

देयं स्तोकादपि स्तोकं न व्यपेक्षो महोदयः । इच्छानुसारिणी शक्तिः कदा कस्य भविष्यति ॥ १ ॥

श्वःकार्यमद्य कुर्वीत पूर्वाह्णे चापराह्णिकम् । न हि प्रतीक्षते मृत्युः कृतमस्य न वा कृतम् ॥ २ ॥

तथा केचिज्जीवाः कार्पण्यं स्वीकृत्य धनहानिभीत्या धर्मे व्ययं न कुर्वन्ति परिग्रहमानमपि च । तेन चक्रित्वाद्युच्चैःपदं नाप्नुवन्ति । अतिलोभाभिभूतोऽशोकचन्द्रो नरकं जगाम । इत्यादिबहुजीवा धनेच्छया दुःखं प्राप्नुवन्ति । इत्यादिगुरुवाक्यात्प्रबुद्धौ तौ भ्रातरौ पञ्चमं व्रतं स्वीकृत्य निरतिचारं प्रपाल्य स्वर्गं जग्मतुः ।

परिग्रहासक्तनराः प्रकुर्वते, पापानि चौर्यानृतनिर्दयादिभिः ।
ततः प्रवृत्तिर्भवनीरधौ भवेदिदं व्रतं कार्यमतः शिवप्रदम् ॥ १ ॥

॥ इत्युपदेशप्रासादेऽष्टमस्तम्भे नवोत्तरशततमं व्याख्यानम् ॥ १०९ ॥

## ॥ अथ दशोत्तरशततमं व्याख्यानम् ११० ॥

इत्युक्तं सातिचारं पञ्चमाणुव्रतं । अथ षष्ठं दिग्विरतिरूपं प्रथमं गुणव्रतमाह—

दशदिग्गमने यत्र, मर्यादा कापि तन्यते । दिग्विरताख्यया ख्यातं, तद्गुणव्रतमादिमम् ॥ १ ॥

यत्र व्रते दश दिशः ऐन्द्री आग्नेयी याम्या नैर्ऋती वारुणी वायवी कौबेरी ऐशानी अध ऊर्ध्वं चेति, तासु गमनं तस्मिन् कापि मर्यादा क्रियते, तत्प्रथमं गुणव्रतं उत्तरगुणरूपं गुणायोपकारायाणुव्रतानां व्रतं गुणव्रतं दिग्विरतिनाम्ना ख्यातमुच्यते । अत्रापि पापस्थानानां विरतिः । एतदेवाह—

चराचराणां जीवानां विमर्दननिवर्त्तनात् । तप्तायोगोलकल्पस्य सद्व्रतं गृहिणोऽप्यदः ॥ २ ॥

त्रसस्थावराणां यातायातादिना हिंसा तस्या निवर्त्तनाद्धेतोरिदमपि हिंसाप्रतिषेधपरमेव गृहस्थस्यापि सद्व्रतं हिंसाप्रतिषेधेऽसत्यादिप्रतिषेधः प्रत्येयः । यद्येवं साधूनामपि तद्व्रतप्रसङ्गः, नैवं, तप्तायोगोलकस्येति, गृहस्थो हि आरम्भपरिग्रहपरत्वाद्यत्र याति भुंक्ते शेते व्यापारं वा कुरुते, तत्र तप्तायोगोलक इव जीव-

दाहं करोति, साधूनां तु समितिगुप्तिवतां नायं दोष इति। एतद्व्रतस्वीकर्तुस्त्रसस्थावरजीवाभयदानलोभाम्भोधिनियंत्रणादिर्महालाभः। यतः—

फारप्फुलिंगभासुर अयगोलयसन्निहो इमो निच्चं। अविरयपावो दहइ समंता समत्थजणं ॥ १ ॥
जइ वि य ण जाइ सबत्थ कोइ देहेण माणवो इत्थ। अविरइ अवयबंधो तहा वि निच्चो भवे तस्स ॥२॥

तथा पूर्वभवेषु च मुक्ते देहे केषाञ्चिज्जीवानां वधो भवति। तत्पापमविरत्या यत्र देहो धृतस्तत्र जीवस्य समेति। पूर्वगृहीतविग्रहविध्वंसने अथवा व्रतित्वे जाते तत्प्रत्ययी पापबन्धो न लगति, तस्मादविरतित्याग एव श्रेयानिति वृद्धवाक्यं श्रूयते। अथाद्यगुणव्रतफलमाह—

गतौ संकोचयत्येव यः स्वं दिग्विरतिव्रती। संसारलङ्घनोत्तालफालारम्भः स सिंहवत् ॥ १ ॥

कंठ्यः। श्लोकोक्तसम्बन्धोऽयम्—

वसन्तपुर्यां कीर्त्तिपालो राजा, भीमाख्यः पुत्रः, तस्य राज्ञः स्वपुत्रादप्यत्यन्तप्रियमित्रं जिनधर्मवासितचित्तः सिंह इत्यभूत्। अन्यदैकः पुरुषो राजसभायामेत्यैवमवक्—"देव नागपुरे नागचन्द्रनृपस्य रूपपात्रं रत्नमञ्जरी कन्यास्ति, सा कीदृशी? यत उक्तम्—

रोमाग्र निरखे तेहने ब्रह्मद्रय अनुभव होय। सरद्रय पूर्ण न दर्शने तेहने तुल्य न हि कोय ॥ १ ॥

त्वत्सुतयोग्यां तां पुत्रीं विचिन्त्य राजा मां विश्वासभूतं त्वामभ्यर्थयितुं नियोजयति स्म, अतस्त्वत्पुत्रं कन्यावरणार्थं प्रेषय" इति दूतमुखाद्राजा श्रुत्वा मित्रं सिंहं जगौ—"हे मित्रावयोः किमप्यन्तरं

नास्ति, त्वं मत्पुत्रं गृहीत्वा नागपुरे गत्वा विवाहय" श्रेष्ठी अनर्थदण्डभयान्नृपतेरुत्तरं न ददौ, राजा किञ्चित्सकोपस्तमुवाच—'किमयं सम्बन्धस्तव न रोचते ?, श्रेष्ठी जगाद—"राजन्मम शतयोजनादूर्ध्वं दिगतिक्रमे नियमोऽस्ति, नागपुरं च सपादं योजनानां शतं भवति, अतस्तद्भङ्गभयात्तत्र न व्रजामि"। राजा क्षिप्तघृतज्वलन इव कोपाज्ज्वलन् तमेवमुवाच—'भो मदादिष्टं त्वमकुर्वन्नसि, तत्त्वां सहस्रयोजनात्परत औष्ट्रिकैर्मोदयामि'। सिंहः प्राह—'स्वामिन्नहं त्वदाज्ञां विधास्ये'। नृपस्तद्वचसा हृष्टः स्वसुतं मंत्रिसेनावृतं सिंहं सर्वक्रियायां गुरूकृत्वा प्रैषयत्, सिंहः कुमारस्य संसारवासनामत्रोटयत्, श्रेष्ठी शतं योजनानि गत्वाऽग्रे नाचलत्, तदा रहसि सैनिकाः कुमारमूचुः—"यदि सिंहोऽग्रे न चलति तदा बध्ध्वा नागपुरे नेय इति राज्ञाऽस्माकमादिष्टमस्ति"। नृपपुत्रस्तदाकूतं धर्मगुरोः सिंहस्य न्यवेदयत्, सिंहश्रेष्ठी नृपसुतं जगौ—

"न किञ्चिदत्र संसारे निःसारेऽस्य शरीरिणः। शरीरमपि न स्वीयं स्वीयमस्तीह कस्यचित् ॥ १ ॥

अहं पादपोपगमनानशनं ग्रहीष्यामि, मां बध्ध्वा ते किं करिष्यन्ति", इत्युक्त्वा सिंहवत्सिंहोऽनशनाय जगाम, तदा कुमारोऽपि सार्धं गतः, रात्रौ सैनिकास्तावपश्यन्तः परितो वीक्षितुं गताः। क्वचित्पर्वते प्रव्रज्यानशनासितौ तौ वीक्ष्य प्रणम्योचुः—'अस्माकमपराधः क्षम्यतां, राजाऽस्मान् यन्त्रे पीलयिष्यति' इत्यादिवाक्यैर्मनागपि न क्षुब्धौ, यतः—

सन्तोषामृततृप्तात्मा न योगी भोगमीहते। कुंखरूकनककंता कुणपे काक एकधीः ॥ १ ॥

इति। तयोः स्वरूपं राजा श्रुत्वा—"कुमारो बध्ध्वा विवाहयितव्यः, सिंहश्च वैरिवद्वध्यः' इति विचिन्त्य सकोपस्तत्रागतः। राजा तौ व्याघ्रादिभिः सेवितक्रमौ 'भक्त्यैव ग्राह्यौ' इति ध्यायन् चाटुवाक्यैः शब्दितवान्, परं दृढप्रतिज्ञौ नोचतुः, केवलज्ञानं मासोपवासान्ते प्राप्य सुरासुरनमस्कृतौ मुक्तिं गतौ। अथ राजाऽवक्—"हे मित्र—

न योजनशतादूर्ध्वं यास्यामि तव निश्चयः। असङ्ख्यैर्योजनैर्मित्र मां मुक्त्वा किमगाः शिवम् ॥ १ ॥"

इति राजा विलपन् स्वपुरं गतः।

वरं तत्याज यः प्राणान्न पुनः स्वीकृतं व्रतम्। स सिंह इव सेवध्वं जना दिग्विरतौ रतिम् ॥ १ ॥

॥ इत्युपदेशप्रासादेऽष्टमस्तम्भे दशोत्तरशततमं व्याख्यानम् ॥ ११० ॥

## ॥ अथैकादशोत्तरशततमं व्याख्यानम् १११ ॥

अथैतस्य पञ्चातिचारानाह—

स्मृत्यन्तर्धानमूर्ध्वाधस्तिर्यग्भागव्यतिक्रमाः। क्षेत्रवृद्धिश्च पञ्चेति स्मृता दिग्विरतिव्रते ॥ १ ॥

स्मृतेरन्तर्धानं—विध्वंसः, कस्यचित् पूर्वस्यां दिशि कृतयोजनशतप्रमाणस्य गमनावसरे व्याकुलत्वादिना 'किं शतं पञ्चाशद्वा प्रमाणं ?' इति संदेहे पञ्चाशदुपरि गमने भङ्ग एव। अयं चातिचारः सर्वव्रतसाधारणोऽपि पञ्चसङ्ख्यापूरणार्थमात्रमुपात्तस्तस्मात् पुनः पुनर्व्रतं स्मर्त्तव्यं, स्मृतिमूलं हि सर्वमनुष्ठानं, निय-

मितक्षेत्रात्परं लाभोऽपि त्याज्य इति १ । तथोर्ध्वं पर्वततरुशिखरादेः, अधो ग्रामभूमिगृहकूपादेः, तिर्यक् पूर्वादिदिक्षु योऽसौ योजनद्वित्र्यादिना नियमितप्रदेशस्तस्य व्यतिक्रमः, एते त्रयोऽतिचाराः ४ । आवश्यकनिर्युक्तिवृत्त्युक्तो विधिरयं—"ऊर्ध्वस्वीकृतप्रमाणादुपरि वृक्षे गिरिशिखरे वा प्लवंगपक्षिप्रभृतिर्वस्त्रं भूषणं वा गृहीत्वा याति, तत्र गन्तुं न कल्पते, यदि तस्मात्पतितं केनाप्यानीतं तदा ग्रहणं । एतच्च संमेतादौ संभवति । एवं सर्वदिक्षु वाच्यं" । योगशास्त्रे तु यथा व्रतं स्वीकृतं तथा विधेयं इति । तथा क्षेत्रस्य पूर्वादिदेशस्य वृद्धिर्वर्द्धनं, अयमर्थः—भिन्नभिन्नदिक्षु योजनशतादिनियमितं तत्कार्योत्पत्तौ लोभाद्यन्यदिक्शतकयोजनानि जिगमिषितायां दिशि वर्ध्यते। एवं भङ्गाभङ्गरूपः पञ्चमोऽतिचारः ५ । प्रतिपन्नव्रतस्यैते वर्ज्याः पञ्चेति । अत्र व्रते कुमारपालनृपोदाहरणमिदम्—

पत्तने श्रीहेमसूरिभिः कुमारपालपुरः षष्ठं व्रतमित्थं वर्णितं—"विवेकिना सर्वदापि जीवदयार्थं षष्ठं व्रतं ग्राह्यं । विशेषतश्च वर्षासु, यतः—

दयार्थं सर्वजीवानां वर्षास्वेकत्र संवसेत् ।

पुरा श्रीनेमिजिनोपदेशाच्छ्रीकृष्णः पुराद्बहिर्गमननियमं जग्राह" । तदाकर्ण्य चौलुक्यसिंहोऽपि नियमं बभार । तद्यथा—

दर्शनं सर्वचैत्यानां गुरोरपि च वन्दनम् । मुक्त्वा पुरेऽपि न प्रायो भ्रमिष्यामि घनागमे ॥ १ ॥

इति तस्य नियमः सर्वत्र पप्रथे, अथ तमभिग्रहं गुर्जरसमृद्धिं च चरेभ्यो ज्ञात्वा गुर्जरदेशभञ्जनाय

गर्जनेशः शकानिकदुर्धरः प्रयाणमकरोत् । तत्स्वरूपं चरविज्ञप्तितो विज्ञाय चिन्ताक्रान्तोऽमात्यसहितो नृपो वसतिमेत्य गुरुमब्रवीत्—"यद्यहं सन्मुखमागच्छन्तं गर्जनेशं न यामि तदा देशभंगे लोकपीडा, गमने च नियमभङ्गः" गुरुराह—'राजन् त्वदाराधितधर्म एव सहायस्तव, चिन्तां मा कृथाः' इत्याश्वास्य नृपं सूरिः पद्मासनासीनः परमदैवतं किञ्चिदन्तर्ध्यातुं प्रचक्रमे । गते मुहूर्त्ते गगनाध्वनाऽऽयान्तं पल्यङ्कमद्राक्षीत् । अम्बरादुत्तीर्य स पल्यङ्कः सुप्तैकनरो गुरोः पुरः स्थिरस्तस्थौ, पल्यङ्कः कस्यायं इति प्रश्नपरं भूपं यथास्थं गुरुर्बभाषे, सोऽपि शकाधीशः सुप्तोत्थितः सहसा विमृष्टवान्—"क्व तत्स्थानं क्व सैन्यं कोऽयं ध्यानीन्द्रः कोऽयं नृपः ?" इत्यादि चिन्तयति तावद्गुरुराह—"हे शकेश किं ध्यायसि ?

एकातपत्रमैश्वर्यं स्वस्य धर्मस्य च क्षितौ । कुर्वतो यस्य साहाय्यं कुर्वते त्रिदशा अपि ॥ १ ॥

सांप्रतं स्वहितेच्छया देवैरप्यनुल्लंघनीयशक्तिं शरणागतवज्रपञ्जरं धर्मात्मानं शरणीकुरु" ततो भयोद्वेगचिन्तालज्जादिना गर्जनेशः सूरीन्द्रं प्रणम्य श्रीकुमारभूपं नमश्चक्रे, ऊचे च—"राजन् ! ममापराधं तितिक्षस्व, अतः परं मया यावज्जीवं त्वया सह सन्धिरेव चक्रे । त्वं मम जीवरक्षणेन जगज्जीवपालकमिति बिरुदं सत्यं कुरु, पूर्वं तव विक्रमं श्रुतमपि विस्मृत्यात्रागतः, संप्रति जातुचिदपि त्वदाज्ञा नोल्लङ्घयिष्ये । तुभ्यं स्वस्त्यस्तु, मां स्वाश्रमं प्रति प्रेषय", राजर्षिः प्राह—"यदि स्वपुरे षण्मासीममारीं कारयेस्तर्हि मुक्तस्त्वं ममैतदाज्ञाकारणं वाञ्छितं च यद्बलेन छलेनापि प्राणित्राणकरणं, तवापि च पुण्यं भावि" शकप्रभुर्बलिष्ठवाक्योल्लङ्घने न क्षमो जातः, ततः स्वसौधे तं नीत्वा त्रिदिनीं यावत्सत्कृत्य जीव-

रक्षार्थं शिक्षां दत्त्वा निर्जरास्तैः समं नृपस्तं स्वस्थानं प्रापयत्। जने षण्मासान् जीवरक्षां कारयित्वा नृपपुरुषाः शकेन्द्रविसृष्टा भूरिहयाद्यं प्राभृतं लात्वा स्वस्थानमागताः श्रीचौलुक्यमानन्दयामासुः।

एवं नरेन्द्रैः सकलैर्मुनीन्द्रैरपि स्तुतेरध्वनि नीयमानः।
षष्ठं व्रतं कष्टशतेऽपि शुद्धमपालयत्क्ष्माधिपतिः कुमारः ॥ १ ॥

॥ इत्युपदेशप्रासादेऽष्टमस्तंभे एकादशोत्तरशततमं व्याख्यानम् ॥ १११ ॥

---

## ॥ अथ द्वादशोत्तरशततमं व्याख्यानम् ११२ ॥

अथ लोभप्रसरोऽप्येतद्व्रतेनैव निवर्त्तत इत्याह—

जगदाक्रममाणस्य प्रसरल्लोभवारिधेः। स्खलनं विदधे तेन येन दिग्विरतिः कृता ॥ १ ॥

लोभ एव वारिधिः, प्रसरंश्चासौ नानाविकल्पान् कारयन् लोभोदधिश्च तस्य विशेषणं जगदाक्रममाणस्य लोभवशगो हि त्रिलोकसंपदं इन्द्रचक्रिपातालप्रभुत्वादिकां मनोरथैः क्रामतीति लोभस्य जगदाक्रमणं, तेन लोभोदधिप्रसरनिरोधो विदधे येन नरेण दिग्विरतिर्विहिता। दिग्विरतो हि प्रतिज्ञातसीमातोऽपरतोऽगच्छंस्तत्सुवर्णरूप्यधनधान्यादिषु प्रायेण लोभं न कुरुते इत्यर्थः। अकृतनियमस्तु सर्वत्र भ्रमणं करोति। अत्रार्थे चारुदत्तसम्बन्धोऽयम्—

चम्पायां भानुश्रेष्ठी वसति, तस्य पुत्रश्चारुदत्तः, स यौवनेऽनुरूपकन्यां परिणायितः, क्रमाद्विषयविरक्तः स्त्रियं नेच्छति, पश्चाच्चारुदत्तश्चातुर्यं शिक्षितुं गणिकागृहे मुक्तः, शनैः शनैस्तदासक्तो जातो गृहमपि तत्याज, द्वादशवर्षान्ते पित्रा स्वायुःप्रान्ते आकार्य पुत्रस्योक्तं—"आजन्म त्वया मत्कथितं न कृतं, अतः परमेतत्कुरु, सङ्कटेऽयं नमस्कारः स्मर्त्तव्यः, ततो मातापित्रोः स्वर्गमनानन्तरं तेन सर्वस्वं निर्गमितं, पत्नी तु स्वपितुर्गृहे गता, ततः श्वशुरधनं लात्वा वार्द्धौ यानारूढः श्रिये चचाल। यानं भग्नं। पुण्यात्फलकं प्राप्य निःसृत्य मातुलगृहे ययौ। तस्माद्धनं लात्वा मार्गे गच्छतो धाव्या धनं हृतं। ततः पृथिवीं भ्रमतस्तस्य कश्चिद्योगी मिलितः। तेनार्द्धार्द्धभागं कृत्वा मञ्चिकारूढो रसकूपिकायां मुक्तः। तेन रसेन कुम्भो भृतः, स कुम्भो मञ्चिकामाकृष्य योगिना गृहीतः। ततो मञ्चिका मध्ये क्षिप्ता, तद्रसकुम्भं लात्वा स योगी नष्टः, तत्रैकस्य म्रियमाणस्य नरस्य नमस्कारो दत्तः। तत्र दिनत्रयं क्षुधितो गोधापुच्छयोगेन कष्टात्ततो निर्ययौ। अग्रे गच्छतस्तस्य मातुलपुत्रो रुद्रदत्तो मिलितः, तेन प्रोक्तं—'मेषद्वयं गृह्यते, स्वर्णद्वीपे च गम्यते'। ततो मेषद्वयं गृहीतं। ततः समुद्रतटे गतौ। रुद्रदत्तः प्राह—"एतद्द्वयं हत्वा भस्त्रिकामध्ये गृहीतक्षुरिकाभ्यामावाभ्यां प्रविश्यते। ततो भारण्डा मांसबुद्ध्योत्पाट्य स्वर्णद्वीपे नयन्ति। तत्रस्थं हेमानेष्यते"। चारुदत्त आह—'जीववधः कथं क्रियते?' रुद्रदत्तेन शीघ्रं स्वच्छरत्रो हतः, यावच्च द्वितीयं हन्ति तावच्चारुदत्तेन नमस्कारं श्रावितो मेषोऽनशनं ग्राहितः। ततो द्वावपि तयोर्भस्त्रिके प्रविष्टौ। भारण्डाभ्यामुत्पाटिते भस्त्रिके। मार्गे चारुदत्तभस्त्रिका पक्षिमुखात्सरसि पपात।

ततो निर्गतः स स्थाने स्थाने भ्रमन्नेकं विद्याचारणर्षिं दृष्ट्वा प्रणम्य स्थितः । मुनिः प्राह—'अत्र मानुष्याद्यप्राप्ये स्थले त्वं कुतः समागाः ?' तेन स्वदुःखे प्रोक्ते मुनिना षष्ठं व्रतं वर्णितं । तेन स्वीकृतं । इतश्चैको देवोऽभ्येत्य चारुदत्तं नत्वा साधुं ववन्दे । तदा वन्दनागताभ्यां विद्याभृद्भ्यां पृष्टं—'भो देव साधुं मुक्त्वा पूर्वं गृहस्थः कथं वन्दितस्त्वया ?' ततो देवोऽवक्—"पूर्वं पिप्पलादर्षिर्बहुजनान् यज्ञं कारयित्वा पापशास्त्रं प्ररूप्य श्वभ्रं गतः । तदुत्पत्तिस्तु द्वितीयव्रतकथनावसरे प्रोक्तास्ति । श्वभ्रान्निर्गत्य पञ्चसु भवेषु छागो जातः । यज्ञेषु हुतः । षष्ठे भवे चारुदत्तेनानेनानशनं ग्राहितः नमस्कारं श्रावितश्छागः । तन्महिम्ना मृत्वा स्वर्गं गतः । स चाहं देवः । ज्ञानेन स्वगुरुदत्तधर्मवाक्यकथनाय चात्रागां । तेनायं पूर्वं वन्दितः पश्चाच्च साधुः" एवं श्रुत्वा चारुदत्तोऽपि वैराग्याद्दीक्षां जग्राह । तपस्तप्त्वा स्वर्गं गतः ।

चारुदत्तो यथाऽरुद्धदिग्गतिर्दुःखमासदत् । तथैवाप्स्यन्ति अन्येऽपि तत्कुर्याद्दिग्व्रते मितिम् ॥ १ ॥

॥ इत्युपदेशप्रासादेऽष्टमस्तम्भे द्वादशोत्तरशततमं व्याख्यानम् ॥ ११२ ॥

॥ अथ त्रयोदशोत्तरशततमं व्याख्यानम् ११३ ॥

अथैतद्व्रतं केचिद्विकटे संकटेऽपि न जहतीत्याह—

स्वल्पकार्यकृतेऽप्येके त्यजन्ति तृणवद्व्रतम् । दृढव्रतपराः केचिद्भवन्ति सङ्कटेऽप्यहो ॥ १ ॥

स्पष्टः । भावार्थस्तु ज्ञातेनानेन ज्ञेयः—

अवन्त्यां कोटिवित्तो धनदत्तनामा जैनः श्रेष्ठी । तस्य पद्मा प्रिया । तयोः पुत्रो जयकुमाराख्यो मनोरथशतैर्जातः । तस्य जन्मनामकरणभाषणचङ्क्रमणादिषु पित्रा महामहः कृतः । यतः—

रागपदे प्रेमपदे लोभपदेऽहंकृतेः पदे स्वपदे। प्रीतिपदे कीर्त्तिपदे न हि कैर्द्रव्यव्ययः क्रियते ॥ १ ॥

स प्राप्तयौवनो व्यसनासक्तः पितृवित्तव्ययमकरोत् । यतः—

वित्तघृताहुतिपूर्त्त्या व्यसनकृशानुः प्रवर्द्धते ह्यधिकम् । दारिद्र्यवारियोगादुपशाम्यति तत्क्षणेन पुनः ॥ १ ॥

स एकदा चौरीकरणाय कस्यचिन्महेभ्यस्य गृहे गतः । तत्राहिना दष्टो मृतः । प्रातस्तत्पिता नृपेण निगडे क्षिप्तः । महाजनेन पुत्रस्वरूपं विज्ञप्य मोचितः । अथ पुनस्तत्पत्न्याः पुत्रोऽन्यो न जातस्तदा स्त्रियाऽऽग्रहः स्वस्वामिन इत्थं कृतः—'सन्तत्यर्थमन्यस्त्रीपाणिग्रहणं कुरु' स दुष्टपुत्रोत्पत्तिभीत्या न शृणोति स्म । यतः—

दुर्जनदूषितमनसां पुंसां सुजनेऽपि नास्ति विश्वासः । बालः पयसा दग्धो दध्यपि फूत्कृत्य खलु पिबति ॥ १ ॥

"हे स्वामिन् सर्वे पुत्रा ईदृशा न भवन्ति, केचित्सुधियोऽपि भवन्ति । यत आगमे उक्तम्—"चउविहा पुत्ता पन्नत्ता, तं जहा–अईएजाए १, अणुजाए २, अवजाए ३, कुलंगारे ४ । तत्राभिजातो नाभेयजिनवत् १, अनुजातः पितृसम आदित्ययशआदिवत् २, अपजातो जनकहीनश्चक्रवर्त्तिसुतवत् ३, कुलाङ्गारः कोणिकादिवत्, एवं शिष्योऽपीत्यादि" तथा न हि सर्वे विटपिनः कंटकिन एव" इत्थं

युक्त्या त्यक्तकदाग्रहेण तेनेभ्यकनी कुमुद्वती ऊढा। क्रमेण जाताधाना रात्रौ रक्तकांस्यकच्चोलकं केनाप्यात्तमिति स्वप्नं दृष्ट्वा स्वामिनं प्राह, पतिरुवाच—'अस्मदीयपुत्रोऽन्यगृहे यास्यतीति', क्रमात्सुतो जातमात्र एव श्रेष्ठिना गृहीत्वा जीर्णोद्याने त्यक्तः। पूर्वपुत्रदत्तदुःखतः पश्चाद्यावद्वलते तावद्वनदेवतावाग्बभूव—'हे श्रेष्ठिन् अस्य शिशोर्ऋणं सहस्रमेकं दत्त्वा व्रज इति गिरा न्ययोत्क्रान्तेन तेन तद्द्रव्यं स्वजनादानीय मुक्तं। ततः स बालो मालाकारेण सुततया कृतः। यत उक्तम्—

यन्नेष्यते मनुष्यैस्तत्प्रायः प्राप्यते अचिरात्। यत्त्विष्यते तदीषन्न चिरादपि वैपरीत्यमहो ॥ १ ॥

क्रमात्तस्या द्वितीयोऽपि प्राक्स्वप्नसूचितस्तनयोऽजनि। सोऽपि तथैव मुक्तः। तदा वियति दिव्यवाग् जाता—'हे श्रेष्ठिन् अस्य देयद्रव्यं द्रम्मदशसहस्रं मुक्त्वा व्रज' तेन तथैव कृतं। सोऽपि केनचिन्महेभ्येनात्तः। पुनः सुस्वप्नेन गर्भेण सुतो जातः। स्त्रिया भृशं वार्यमाणोऽपि तृतीयोद्याने यावन्मुञ्चति तावद्दिव्या वाग् जाता—'भो लभ्यं दीनारकोटाकोटीद्रव्यमलात्वा कथं त्यजसि ?' इति श्रुत्वा हृष्टः पश्चादानीय स्त्रियं समर्प्य महानन्द इति नाम चक्रे। वर्द्धमानयौवनः स कलापात्रं बभूव। शैशवे सम्यक्त्वमूलद्वादशव्रतग्रहणावसरे षष्ठं व्रतं सर्वतस्तिर्यग्योजनशतं स्वीकरोति स्म। यौवने जनकेनेभ्यकनीं परिणायितः। व्यवसायेनाल्पदिनैरेव कोटाकोटिद्रव्यं श्रेष्ठिगृहेऽजनिष्ट। यतः—

दातव्यलभ्यसम्बन्धो वज्रबन्धोपमो ध्रुवम्। धनश्रेष्ठीह दृष्टान्तस्त्रिकुपुत्रसुपुत्रयुक् ॥ १ ॥

महानन्देन सप्तस्वर्णकोटी सप्तक्षेत्रे व्ययिता। एकदैको योगी नभोविद्यासाधक उत्तरसाधकं गवेष-

यन्महानन्दं वीक्ष्य प्राह—'हे पुण्यवन् मत्साहाय्यं कुरु, येन मे विद्यासिद्धिर्भवति'। तेन स्वीकृतं। रात्रौ पर्वतैकदेशे योगिनो मन्त्रजपबलेन देवी प्रादुर्भूय प्राह—"भो योगिन् अहं उत्तरसाधकाय विद्यां ददामि, न हि कर्मणोऽधिकं विधातापि कर्तुं शक्नोति। यतः—

ब्रह्मा येन कुलालवन्नियमितो ब्रह्माण्डभाण्डोदरे, विष्णुर्येन दशावतारग्रहणे (गहने) क्षिप्तो महासङ्कटे।
रुद्रो येन कपालपाणिपुटके भिक्षाटनं कारितः, सूर्यो भ्राम्यति नित्यमेव गगने तस्मै नमः कर्मणे ॥ १ ॥"

इत्युक्त्वा सा विद्युद्वत्तिरोऽभवत्।

तस्य तु तादृग्विद्यालाभेऽपि सुसंवृतस्य संयमवत्। अब्धेरिव नैवासीन्मर्यादातिक्रमः क्वापि ॥ १ ॥

क्रमात्तस्य पुत्रोऽजनि। अन्यदा स बालो दुष्टाहिना दष्टः। धनदत्तश्रेष्ठिना पुरे पटहो दापितः। एको वैदेशिकविप्रस्तदाह—"श्रेष्ठिन्नितो मत्पुरं दशोत्तरयोजनशतमस्ति। तत्र मद्गृहिणी अनेकविद्यान्विताऽस्ति। कोऽपि कथमपि तामानयति तदायं सद्यो जीवत्येव" तदाकर्ण्य श्रेष्ठी तं महानन्दं प्राह—'त्वं तन्नगरे गच्छ'। स स्वनियमं प्राह। पित्रा व्रतविषये षडाकारस्वरूपे प्रोक्तेऽपि स नामन्यत। तदा तत्पुरेशो नृप एत्योवाच—"हे महानन्द बालजीवनात्परो न कोऽप्युत्कृष्टो धर्मः, धर्मकार्ये तीर्थयात्रादौ योजनसहस्र-गमनेऽपि गृहिणो न कश्चिद्दोषः" तदाऽन्ये जना ऊचुः—'अहो कठोरहृदयता! बालहत्यातोऽपि न बिभेति' स महानन्दो नृपं प्राह—"स्वामिन्! प्राणेभ्योऽपि तनयः प्रेयान्, ततोऽपि धर्मोऽधिकः, अतः स्वीकृतं व्रतं कल्पान्तेऽपि नातिचरामि"। नृपोऽवोचत्—'यदि त्वं धर्मिष्ठस्तर्हि दर्शय सर्वेषां धर्मा-

हात्म्यं' । तदा विद्यादेवीवाग् जाता—'भोः कुमार ! जलाञ्जलिना बालं सिञ्च' । तेन देव्युक्ते कृते बालो निर्विषो जातः । लोके जैनधर्ममहिमा बभूव ।

अन्यदा तातप्रेरितः कुटुम्बप्राग्भवपृच्छनाय खगत्या सीमन्धरजिनं प्रणम्य पप्रच्छ । स्वाम्यप्यूचे—

धन्यपुरे सुधनः श्रेष्ठी, धनश्रीर्गेहिनी, धनावहस्तस्य बालमित्रं । द्वौ सहैव व्यवहरतः । सुधनः सुहृद्वस्तु स्वगृहे व्ययति । तस्य द्रम्मशतं विनाशितं । तथैकस्य वणिजो देया विंशतिर्द्रम्मा व्यवसायमध्यगाः सद्योऽनर्पणात्सुधनपार्श्वे स्थिताः । तथैकेन वणिजा लभ्यधनप्रदाने द्रम्मदशकमधिकं भ्रान्त्या दत्तं । सुधनेन ज्ञातं, परं लोभान्न पश्चाद्दत्तं । एतच्च शल्यत्रयं गुरोः पुरो नालोचितं । परमेकसाधर्मिकस्य द्रम्मशतं दत्तं । स यावज्जीवं सुखी कृतः । उक्तं च—

करचलुअप्पाणिए वि अवसरदिन्नेण मुच्छियां जिअइं । पच्छामुआण सुंदरी घडसयदिन्नेण किं तेणं ॥ १ ॥

क्रमात्सुधनो धनश्रीः स्वमित्रं तौ वणिजौ स साधर्मिकश्च षडपि श्राद्धाः सौधर्मे गताश्च्युताश्च । धनदत्तकुमुद्वत्यौ तयोः पुत्राश्चत्वारो जज्ञिरे । धनदत्तजीवस्तु त्वत्पिता, साधर्मिकजीवस्तु त्वं, आद्यपुत्रश्च धनावहजीवः, पूर्वं द्रम्मशतविनाशनात्सर्वस्वं विनाशितं, परं धर्मनिन्दा कृता मनसि तेनाल्पायुरत्र जातः । द्वौ मध्यपुत्रौ तयोर्देयं प्राग्दत्तं तेनेयद्गुणं जातं । कुमुद्वत्या स्वगृहमहिषीप्रसूतपड्डकद्वयं कोऽप्यपहृत्य याति तदा साध्विति प्राग्दुर्ध्यानं कृतं, तेन जातमात्रपुत्रद्वयवियोगोऽजनि । इत्यर्हद्वाक्यं श्रुत्वा

गतसंशयो महानन्दः स्वगृहमेत्य मातापित्रोः स्वरूपं प्रोक्तं । ततस्तौ प्रव्रज्य स्वर्गं गतौ । महानन्दस्तौ सोदरौ धर्मयुक्तौ विधाय समये दीक्षामादाय माहेन्द्रसुरः समभूत् । ततश्च्युतश्च सेत्स्यति ।

इति दिग्विरतिव्रतं दिशां, बहुसंक्षेपविधेः प्रपद्य भोः ! ।
विधुरेऽपि विधाय विरत्यं, प्रतिपाल्यं धनदत्तपुत्रवत् ॥ १ ॥

॥ इत्युपदेशप्रासादेऽष्टमस्तम्भे त्रयोदशोत्तरशततमं व्याख्यानम् ॥ ११३ ॥

## ॥ अथ चतुर्दशोत्तरशततमं व्याख्यानम् ११४ ॥

अथ भोगोपभोगाख्यं द्वितीयं गुणव्रतं प्रस्तूयते—

सकृत्सेवोचितो भोगो ज्ञेयोऽन्नकुसुमादिकः । मुहुः सेवोचितस्तूपभोगः स्वर्णाङ्गनादिकः ॥ १ ॥

इदं व्रतं द्विविधं भोगतः कर्मतश्च । तत्र भोगो द्विविधः यदेकवारमेवान्तर्वा भुज्यतेऽसौ भोग आहारपुष्पादिकः । यच्च पौनःपुन्येन बहिर्वा भुज्यते कनककामिन्यादिकः स उपभोग इत्यर्थः । अथेदं व्रतं भोक्तुं योग्येषु परिमाणकरणेन भवति इत्याह—

सङ्ख्या विधीयते यत्र शक्त्या भोगोपभोगयोः । भोगोपभोगमानं तत्स्याद्द्वितीयं गुणव्रतम् ॥ २ ॥

जगत्सु भोगोपभोगा अपरिमितास्तेषु परिमाणं इयत्तामात्रं इति श्रावकेण कार्यं । मुख्यत उत्सर्गतश्चित्तभोजिना भाव्यं । तदशक्तौ सचित्तादिपरिमाणं । यतः—

सच्चित्त १ दव्व २ विगइ ३ वाहन ४ तंबोल ५ वत्थ ६ कुसुमेसु ७ ।

वाहन ८ सयण ९ विलेवण १० बंभ ११ दिसि १२ एहाण १३ भत्तेसु १४ ॥ १ ॥

यत्सजीवं तत्सचित्तं । पूर्वाचार्यकृतगाथाभिः पिष्टस्य सचित्तत्वमित्थं ज्ञेयं । यतः—

पणदिण मिस्सो लुट्टो अचालिओ सावणे अ भद्दवए । चउ आसोए कत्तिय मिगसिर पोसे अ तिन्नि दिणा ॥१॥

पण पहर माह फग्गुण पहरा चत्तारि चित्त वेसाहे । जिट्ठासाढे तिपहर तेण परं होइ अचित्तो ॥ २ ॥

चालितस्तु मुहूर्त्तादूर्ध्वमचित्तः, अचित्ती भवनानन्तरं विनशनकालस्तु ग्रन्थे न दृश्यते, परं वर्णादिना विपरीत ईलिकादिपतनं यावत् कल्पते । अथ नीरस्य सचित्ताचित्तत्वमित्थं—अपक्कं जलं तु सर्वदा जीवात्मकं, सर्वथा तत्त्यक्तुमशक्तौ घटैकादिना मानं कार्यं । पक्कजलं तु इयत्कालमचित्तं स्यात् । यत उक्तम्—

उसीणोदगं तिदंडुक्कालियं फासुअजलं जइक्कप्प । नवरि गिलाणाइकए पहर तिगोवरि धरियव्वं ॥ १ ॥

गाणाइ परिसुद्धं होइ सचित्तं मुहुत्त मज्झंति । पच्छा तिमुहुत्त जलं फासुअं भणियं जिणंदेहिं ॥ २ ॥

प्रासुककरणे कृते षड्घटिकानन्तरं सचित्तं स्यादिति रत्नसंचयग्रन्थे ।

जायइ सचित्तफासे गिम्हासु पंच पहर पंचसुवरिं । चउ पहरुवरिं सिसिरे वासासु जलं तिपहरुवरिं ॥१॥

जायते तस्य जलस्य सचित्तता प्रासुकोदकस्य वा ग्लानाद्यर्थं धृतस्य ग्रीष्मे प्रहरपञ्चकस्योपरि कालस्यातिरूक्षत्वाच्चिरेणैव जीवोत्पत्तिः स्यात् । तथा शिशिरे शीतकालस्य स्निग्धत्वात्प्रहरचतुष्टयादूर्ध्वं

सचित्तं स्यात् । वर्षासु पुनः कालस्यातिस्निग्धत्वात्प्रासुकमपि जलं प्रहरत्रितयादूर्ध्वं सचित्तं । तदूर्ध्वमपि यदि ध्रियते तदा क्षारः प्रक्षेप्यः, चूर्णमेषलिंडिकावा तेन भूयः सचित्तं न स्यात् इति प्रवचनसारोद्धारे १३६ द्वारतो ज्ञेयमिति । अथ जलं बाह्यशस्त्रसंपर्काद्वर्णादिभिर्विपरीतीभूतं अचित्तं व्यापार्यं, न पुनः स्वभावादचित्तीभूतं । यतो ज्ञानिनोऽपि बाह्यशस्त्रसंपर्कं विनाऽचित्तीभूतं व्यवहारभङ्गभीरुतया न गृह्णन्ति । तथाहि—एकदा श्रीवीरेणाचित्तं सरोवरं दृष्ट्वा त्रसादिसेवालरहितमपि तृषातुराणां शिष्याणां पानाय नानुज्ञा कृता । एवं क्षुधादेहचिन्तार्त्तानामचित्ततिलशकटाचित्तस्थण्डिलपरिभोगानुज्ञा न दत्ता, श्रुतज्ञानप्रामाण्यज्ञापनार्थं । सामान्यश्रुतज्ञानिनोऽपि बाह्यशस्त्रसंपर्कं विना जलाद्यचित्तमिति न व्यवहरंति । तथा कानिचिदचित्तवस्तून्यपि निःशूकतया न व्यापार्याणि । यतः गडुचिः शुष्कापि जलसेकात्तादात्म्यं भजतीति । उदराद्भिर्गतचिर्भटीबीजान्यपि कानिचिदपक्वान्युद्भवन्तीति श्रुतमस्ति । अतोऽचित्तयतनापि न्यायपथमेति । सचित्ताचित्तव्यक्तिं बहुश्रुतमुखान्निश्चित्य सप्तमं व्रतं नामग्राहं सचित्तादि सर्वभोग्यवस्तुनैयत्यकरणेन स्वीकार्यं । यथा आनन्दादिभिस्तथा । सर्वथा सचित्तत्यागाशक्तौ तु सामान्यतो दिनं प्रत्येकद्व्यादिसङ्ख्यां कुर्यात्, परमेवं पृथक् पृथक् दिनेषु परावर्त्तनेन सर्वसचित्तग्रहणमपि स्यात् । तथा च न विशेषविरतिः, नामग्राहं सचित्तनैयत्याभिग्रहे तु तदन्यसर्वसचित्तनिषेधरूपं यावज्जीवं स्पष्टमेवाधिकं फलं च । उक्तं च—

पुप्फफलाणं च रसं सुराए मंसाए महिलियाणं च । जाणं ता जे विरया ते दुक्करकारए वंदे ॥ १ ॥

सर्वसचित्तत्यागे चाम्बडपरिव्राजकशिष्यसप्तशतीज्ञातमिदमौपपातिकसूत्रे भगवत्यङ्गे चोक्तं । तथाहि— अम्बडशिष्याः सप्तशतानि श्रीवीरपार्श्वे स्वीकृतश्राद्धधर्माः प्रासुकपरदत्तान्नभोजिनो ग्रीष्मे गङ्गोपकण्ठेऽटवीमटन्तोऽतितृषार्त्ताः "सचित्तमदत्तं च जलं सर्वथा न गृह्णीम" इति दृढनियमाः समीपस्थमपि गङ्गाजलं सचित्तत्वान्नात्तवन्तः "अहो इमेऽप्कायजीवा अस्मदीयकुटुम्बिनः न हननीया" इत्यादिध्यानपरास्तत्रैव वालुकायामनशनेन ब्रह्मलोके इन्द्रसमाः सुरा जज्ञिरे । एवं सचित्तत्यागे यतनीयं श्रावकेण । अथवा प्रत्येकमिश्रादीनां प्रमाणं कार्यं । भणितं च—

निरवज्जाहारेणं १ निज्जीवेणं २ परित्तमीसेणं ३ । अप्पाणुसंधनपरा सुसावगा एरिसा हुंती ॥ १ ॥

इत्यादिनियमं विना दिवस एकोऽपि निरर्थको न कार्यः १ । सचित्तविकृतिवर्जं यन्मुखे क्षिप्यते तत्सर्वं द्रव्यं, क्षिप्रचटीरोटिकानिर्विकृतकमोदकलपनश्रीपर्पटिकाचूरिमुकरंबकक्षीरादिकं बहुधान्यादिनिष्पन्नमपि परिणामान्तराद्यापत्तेरेकैकमेव द्रव्यं, एकधान्यनिष्पन्नान्यपि पुलिकास्थूलीघुघुरीरोटकीसप्तपुटीमंडूकढोकलखाखरकवयादीनि पृथक् पृथक् नानास्वादवत्त्वेन पृथक् पृथग्द्रव्याणि, फलपुष्पफलीकादौ तु नामैक्येऽपि भिन्नास्वादव्यक्तेः परिणामान्तराभावाच्च बहुद्रव्यत्वं । यद्वा बहुश्रुतादेशेनान्यान्यप्यर्हाणि द्रव्याणि । राजतादिशलाकाकराङ्गुल्यादिकं द्रव्यमध्ये न गण्यते इति २ । विकृतयो भक्ष्याः षट् दुग्ध १ दधि २ घृत ३ तैल ४ गुड ५ सर्वपक्वान्न ६ भेदात् ३ । 'वाहनं ति' उपानद्युग्मं काष्ठपादुका च बहुजीवघातकत्वात्त्याज्या ४ । ताम्बूलम्—पत्रपूगिफलकथकादिस्वादिमरूपं । पत्राणि नागवल्लीदलानि तेषु निरन्तर-

जलक्लेदादिना नीलीकुन्थ्वादिविराधना भूयसी। तत एव तानि पापभीरवो रात्रौ न व्यापारयन्ति। येऽपि व्यापारयन्ति, तेऽपि सम्यग्दिवा संशोध्यैव । प्रत्येकसचित्तेऽप्येकस्मिन् पत्रफलादावसङ्ख्यजीवविराधनासंभवः। यतः श्रीआचाराङ्गेऽध्ययन १ उद्देश २ वृत्तौ बादरेष्वेकेन्द्रियेषु यत्रैकः पर्याप्तस्तत्राऽसङ्ख्येया अपर्याप्ता उत्पद्यन्ते। सूक्ष्मेषु यत्रैकोऽपर्याप्तस्तत्र नियमादसङ्ख्येयाः पर्याप्ताः स्युः। तथा प्रज्ञापनायामप्युक्तं वनस्पतौ तु यत्रैको बादरपर्याप्तस्तन्निश्रया नियमात्प्रत्येकतरवः सङ्ख्येया असङ्ख्येया वा स्युः। साधारणास्तु नियमादनन्ता उत्पद्यन्ते। एवमेकस्मिन्नपि पत्रादावसङ्ख्यजीवाः सन्ति, तदाश्रितजलनील्यादिसंभवे त्वनन्ता अपि हन्यन्ते। अतस्तन्नियमः कार्यः ५। वस्त्रं—पञ्चाङ्गादिवेषः, धौतिकपौतिकरात्रिवस्त्रादिर्वेषे न गण्यते ६। कुसुमानि शिरःकंठक्षेपाद्यर्हाणि, तन्नियमेऽपि देवपूजायां कल्पन्ते ७। वाहनं—रथपोष्टिकसुखासनादिः ८। शयनं—खट्वादि ९। विलेपनं भोगार्थं चन्दनजवाधिचूआअर्कजादि; तन्नियमेऽपि देवपूजादौ तिलकहस्तकंकणधूपनादि कल्पते १०। ब्रह्म दिवा रात्रौ वा पल्याद्याश्रित्य ११। दिक्परिमाणं, अस्यार्थो दिग्व्रते लेखिष्ये १२। स्नानं तैलाभ्यङ्गादिपूर्वकं १३। भक्तं—रन्धितधान्यं सुखड्यादिकं सर्वं त्रिचतुःसेरादिकमिति, खरबुजादिग्रहणे बहवोऽपि सेराः स्युः १४। इति चतुर्दश नियमा येन प्राक् स्वीकृताः स्युस्तेन प्रत्यहं संक्षेप्या, यथाशक्त्यन्ये च ग्राह्याः, प्रत्यूषे व्यक्तनामग्राहेण प्रतिदिनं नियम्याः, रात्रौ ते संक्षेप्या यथार्हं। एतन्नियमविषये कुमारनृपस्य ज्ञातं—सप्तमव्रते स नृपः सचित्तमेकनागवल्लीपत्ररूपं दिवाष्टबिटकानि रात्रौ चतुर्विधाहारनिषेधः। वर्षासु घृतैकविकृतिः। शाक्व-

सर्वशाकनियमः । एकाशनं सर्वदा तपःपारणोत्तरपारणे विना । दिवा ब्रह्मचारी । सर्वपर्वस्वब्रह्मसचित्तविकृतिवर्जकः । इत्यादिसर्वनियमपरः स भोगोपभोगेषु निःस्पृहोऽपि राजधर्मादिपारवश्यादेव परिमितमेव निष्पापभोगोपभोगादिकमनुबभूव । पञ्चदशकर्मादानेभ्यः समागच्छदायपदनिषेधकस्तस्य पट्टकान् पाटयामासेति ।

एवं भोगोपभोगेषु विरक्तः परमार्हतः । निःस्पृहः परद्रव्येषु सप्तमं व्रतमग्रहीत् ॥ १ ॥

॥ इत्युपदेशप्रासादेऽष्टमस्तम्भे चतुर्दशोत्तरशततमं व्याख्यानम् ॥ ११४ ॥

## ॥ अथ पञ्चदशोत्तरशततमं व्याख्यानम् ११५ ॥

अथैतद्व्रतं द्वाविंशत्यभक्ष्यप्रत्याख्यानेन ग्राह्यमित्यादौ चतुर्महाविकृतिस्वरूपमाह—

मद्यं द्विधा समादिष्टं मांसं त्रिविधमुच्यते । क्षौद्रं त्रिधापि त्याज्यं च म्रक्षणं स्याच्चतुर्विधम् ॥ १ ॥
इमा विकृतयोऽभक्ष्या ज्ञात्वा त्याज्या विवेकिभिः । उत्पद्यन्ते ध्रुवं जीवा तद्वर्णा दृष्टगोचराः ॥ २ ॥

मद्यं मदिरा, तच्च द्वेधा—काष्ठोद्भवं पिष्टोद्भवं च । मद्यस्य प्रथमं ग्रहणं महानर्थहेतुत्वात् । यदाहुः—

मज्जं दुग्गइमूलं हिरिसिरिमइधम्मनासकरं ।

तथा—

बालिकां युवतिं वृद्धां ब्राह्मणीं श्वपचीमपि । भुङ्क्ते परस्त्रियं सद्यो मद्योन्मादकदर्थितः ॥ १ ॥

तथा चैकदा कृष्णेन प्रभूणां पृष्टं—'स्वामिन्! मन्नगर्या विनाशः कदा(कुतो)भावी ?'। प्रभुरुवाच—'मदिरातः'। तच्छ्रुत्वा कृष्णः पुरीमध्याद्वारुणीं निरकासयत्। अन्यदा साम्बप्रद्युम्नौ वने दूरं गतौ। तत्र मदिरामपश्यतां, पपतुश्च। ततो मदविकलौ द्वैपायनं तापसं बबन्धतुः, स च 'त्वत्पुरस्य यदूनां च दाहको भवेयमिति' निदानमकरोत्। तदाकर्ण्य रामकृष्णावेत्य प्रणेमतुः। तदा स मुनिः प्राह—'युवाभ्यां विना सर्वान् हनिष्यामि'। ततः स मृत्वाऽग्निकुमारोऽभूत्। रोषात्तत्पुरदाहायागात्। तदा द्वादश वर्षाणि लोका आचाम्लानि कुर्वन्ति। तेन पराभवितुमक्षमः। एकदा पर्वदिने छलं प्राप्य तत्पुरमज्वालयत्। कृष्णरामौ निर्गतौ। रोहिणीदेवकीवसुदेवाश्च नगरमध्ये मृत्वा स्वर्गताः।

श्रूयते किल साम्बेन मद्यादन्धं भविष्णुना। हतं वृष्णीकुलं सर्वं प्लोषिता च पुरी पितुः ॥ १ ॥

मद्यत्यागं श्रेणिकश्रावकवत्कार्यमिति १। मांसं त्रेधा उच्यते जलचरस्थलचरखेचरजन्तूद्भवभेदात् चर्मरुधिरमांसभेदाद्वा। एतदप्यतिकुष्टं। यदाहुः—

आमासु अ पक्कासु अ विपच्चमाणासु मंसपेसिसु। सययं चिय उववाओ भणिओ अ णिगोअजीवाणं ॥ १ ॥

योगशास्त्रेऽपि—

सद्यः संमूर्छितानन्तजन्तुसन्तानदूषितम्। नरकाध्वनि पाथेयं कोऽश्नीयात् पिशितं सुधीः ॥ १ ॥

सद्यो जन्तुविशसनकाल एव संमूर्छिता उत्पन्ना अनन्ता निगोदरूपा ये जन्तवस्तेषां संतानं—पुनः पुनर्भवनं तेन दूषितमिति तद्वृत्तौ। तथा लौकिकशास्त्रेऽपि—

शुक्रशोणितसंजूतममेध्यं मांसमुच्यते । यस्मात्पुरीपसंजूतं तस्माच्छिष्टो विवर्जयेत् ॥ १ ॥
न ग्राह्याणि न देयानि षड् वस्तूनि च पण्डितैः । अग्निर्मधु विषं शस्त्रं मद्यं मांसं तथैव च ॥ २ ॥

तथा स्मार्त्ता अप्यूचुः—

न मांसजक्षणे दोषो न मद्ये न च मैथुने । प्रवृत्तिरेषा जूतानां निवृत्तिस्तु महाफला ॥ १ ॥

अस्य च यथा श्रुतं व्याख्यानमनर्हमेव । यस्मिन्ननुष्ठीयमाने दोषो नास्त्येव, तस्मान्निवृत्तिः महाफला स्यात्, ( तर्हि ) शुजधर्मादेरपि निवृत्तिप्रसङ्गात् । तस्मादन्यथैवास्य श्लोकस्यार्थः । तथाहि—न मांसजक्षणे कृतेऽदोषोऽपि तु दोष एव । एवं मद्यमैथुनयोरपि । कथं नादोष इत्याह—यतः प्रवृत्तिरेषा जूतानां प्रवर्त्तन्ते उत्पद्यन्तेऽस्यामिति प्रवृत्तिरुत्पत्तिस्थानं जूतानां तज्जीवसंसक्तिहेतुरित्यर्थः । तथा मांसं नाप्युपायेनाचित्तं स्यात् । सर्वमन्यत उपायेन प्रासुकीजवत्येवं मांसं च न । अत एव, 'आमासु' इति गाथायामुक्तं विपच्च० अग्निना संस्क्रियमाणेषु पलेषु निरन्तरं निगोदरूपा जीवास्तेषामुपपातः इति । तथा—

अत्ति यः कृमिकुलाकुलं, पूतिशोणितवसादिमिश्रितम् ।
तस्य किंचन सारमेयतः, शुद्धबुद्धिर्निर्विद्यते परम् ॥ १ ॥

अथ मधु त्रिधा—माक्षिकं कौतिकं ज्रामरं चेति, एतत्रिधापि त्याज्यं । यतः—

मक्षिकामुखनिष्ठ्यूतं जन्तुलक्षक्षयोद्भवम् । कथमासाद्यते क्षौद्रं सुधीभिर्नरकावहम् ॥ १ ॥

पौराणिकैरप्युक्तम्—

सप्तग्रामेषु यत्पापमग्निना भस्मसात्कृते । तदेतज्जायते पापं मधुबिन्दुप्रभक्षणात् ॥ १ ॥

यो ददाति मधु श्राद्धे मोहितो धर्मलिप्सया । स याति नरकं घोरं खादकैः सह लम्पटैः ॥ २ ॥

योऽत्ति नाम मधु भेषजेच्छया, सोऽपि याति लघु दुःखमुल्बणम् ।
किं न नाशयति जीवितेच्छया, भक्षितं झटिति जीवितं विषम् ॥ ३ ॥

अथ भक्षणं चतुर्विधं गोमहिषाजैरुकभेदात् । तस्य दोषा इमे—

संसृजन्ति विविधाः शरीरिणो, यत्र सूक्ष्मतनवो निरन्तरम् ।
तद्ददाति नवनीतमङ्गिनां, पापतो निरयमत्र सेविनाम् ॥ १ ॥

ऊर्ध्वमन्तर्मुहूर्त्तात्स्युर्बहवो यत्र जन्तवः । विवेकिभिः कथंकारं नवनीतं तदद्यते ॥ २ ॥

तक्रतो बहिर्नीते नवनीतेऽन्तर्मुहूर्त्तात्परतः सूक्ष्माः सत्त्वा उत्पद्यन्ते इति श्लोकमूलार्थः । इमाश्चतस्रो विकृतयोऽभक्ष्या भोक्तुमनर्हा इति विज्ञाय त्याज्याः विवेकिभिर्धर्मज्ञैश्च, यतस्तासु निश्चयेन जीवास्तद्वर्णा मध्वादिजातयो दृष्टगोचरा अस्मादृशां सामान्यजीवानां, न तु महाज्ञानिनां, संमूर्छन्ति उत्पद्यन्ते । उक्तं च

मज्जे महुम्मि मंसम्मि नवनीयम्मि चउत्थए । उववज्जंति अणंता तव्वण्णा तत्थ जंतुणो ॥ १ ॥

गमनिका—तेषां मद्यादीनां वर्ण इव वर्णो येषां ते तद्वर्णाः । अनन्ता निगोदरूपाः जन्तवः । अतोऽ-

---

१ नाशयति.

भक्ष्या इति । केचित्तु निगोदजीवानामवारितप्रसरत्वेन सर्वत्रोत्पत्तिसद्भावात्सर्वस्यापि त्यागप्रसक्तेरुक्तार्थस्य सहृदयानामहृदयंगमत्वमाकलय्य निगोदवत्सूक्ष्मा एव जीवा रसजास्तेषामुपपात इति व्याख्यान्ति । अत एव पूर्वगाथायां केषुचिदादर्शेषु 'उप्पज्जंति असंखा' इति पाठोऽपि समर्थितः । मद्ये च रसजजीवोत्पत्तिमत्त्वेनासङ्ख्यातजीवत्वं श्रीहैमाभिधानकोषे "रसजा मद्यकीटाद्या" इति वाक्येनाहतं । रसजाश्च द्वीन्द्रिया एवासङ्ख्याता एव नानन्ता इति । तथा तैरेवोक्तं योगशास्त्रेऽपि—'अन्तर्मुहूर्त्तात्परतः' इतिश्लोके जीवोत्पत्तिकालप्रतिपादनान्निगोदजीवोत्पत्तिर्नोक्ता, तस्याश्च तत्र पुरापि संभवात् न कालनियमः । तथा च निगोदजीवैर्नात्र भक्ष्याभक्ष्यत्वं, किं त्वसङ्ख्यै रसजैरेवेति विचार्यम् । इति प्रसङ्गादुक्तम् ।

प्रोचिता विकृतयोऽत्र चतस्रस्तास्त्यजन्ति भुवि भावुकमर्त्याः ।
प्राप्नुवन्ति सुरसंपदमुच्चैर्जैनशासनजुषो यदि ते हि ॥ १ ॥

॥ इत्युपदेशप्रासादेऽष्टमस्तंभे पञ्चदशोत्तरशततमं व्याख्यानम् ॥ ११५ ॥

## ॥ अथ षोडशोत्तरशततमं व्याख्यानम् ॥ ११६

अथ शेषाण्यभक्ष्याण्याह—

बहुजीवाकुलाभक्ष्यं भवेदुम्बरपञ्चकम् । हिमं विषं तथा त्याज्याः कर्कराः सर्वमृत्तिकाः ॥ १ ॥

बहुजीवैर्मशकाकारैः सूक्ष्मसत्त्वैराकुलं निचितं तेनाभक्ष्यं । उदुम्बरपञ्चकं वट १ पिप्पल २ उदुम्बर ३ प्लक्ष ४ काकोदुम्बरीफलाख्यं ५ भवेत्, तद्वर्जनीयं । एवं महाविकृतिभिः सह नव ए । एवं हिमं शैत्यं

शुद्धासङ्ख्येयाप्कायरूपत्वात् १० । विषं सोमलाहिफेनादिकं, औषध्यादिना निर्विषीकृतमपि उदरान्तर्वर्त्तिगण्डोलकादिजीवघातहेतुत्वादभक्ष्यं ११ । करका—लोके करह इति असङ्ख्यातजलजीवसंयुक्तत्वात् त्याज्याः । नन्वेवं पानीयमप्यभक्ष्यं ? सत्यं, परं पानीयं विना निर्वाह एव न स्यात्, तान् विना तु सुखं निर्वाह एव, अतस्त एव निषेध्याः १२ । सर्वमृत्तिका उदरान्तर्भेक्यादिपञ्चेन्द्रियजीवोत्पत्तिहेतुत्वान्महारोगादिकारित्वाच्च । सर्वग्रहणं धवलिकादितद्भेदत्यागार्थं । लवणमप्यग्न्यादिभिः प्रासुकं जातं तदेव न त्वितरत् । अन्यदपि प्रासुकभवनव्यवहारोऽस्ति । यतः श्राद्धविधौ—

जोयणसयं तु गंतु अणहारेण तु भंडसंकंति । वायागणिधूमेण य विद्धत्थं होइ लोणाई ॥ १ ॥

हरिआलमणोसील पिप्पली खज्जूर मुद्दिया अभया । आईन्नमणाइन्ना ते वि हु एमेव नायव्वा ॥ २ ॥

योजनशतात् परतो गत्वाऽचित्तं लवणादिकं । कथं ? यत्रोत्पन्नं तद्देशीययोग्याहाराभावेन एकभांडादन्यभांडेषु संक्रान्त्या तथा वातेनाग्निना धूमेन च विध्वस्तमचित्तं स्यात् । यतः त्रिधा शस्त्रं तत्र स्वकायशस्त्रं यथा क्षारोदकस्य मधुरोदकं, परकायशस्त्रं यथाऽग्निरुदकस्य, तदुभयं शस्त्रं यथा मृत्तिका(जलमिश्रा) शुद्धोदकस्येति गाथागमनिका १ । मुद्दि(मृद्वी)का द्राक्षा, अभया हरितकी । एतेऽप्येवमेव लवणवत् योजनशतादागताः । परमेकेऽत्राङ्गीकृता अन्ये तु न । तत्र पिप्पलीहरितकीप्रभृतय आचीर्णा इति गृह्यन्ते। खर्जूरमुद्दि (मृद्वी) कादयः पुनरनाचीर्णा इति न गृह्यन्ते २ ।

लवणमग्निना प्रासुकं तदेवं व्यापार्यं, नापक्वं, मृत्तिकारूपत्वादभक्ष्यं १३ ।

अथ चतुर्दशं रात्रिभोजनाख्यमभक्ष्यं निरूप्यते—

चतुर्विधं त्रियामायामशनं स्यादभक्ष्यकम् । यावज्जीवं तत्प्रत्याख्यं धर्मेच्छुभिरुपासकैः ॥ १ ॥

रात्रौ चतुर्विधं अशनं १ पानं २ खादिमं ३ स्वादिमं ४ इति । अश्यते भुज्यते तदशनं भोज्यं अभक्ष्यकं स्यात् बहुजीवसंभवेन । यतः श्रावकदिनकृत्ये—

तज्जोणिआ जीवाणं तहा संपाइमाणा य । निसिभत्ते वहो दिट्ठो सव्वदंसीहि सव्वहा ॥ १ ॥

तस्मिन् संसक्तादौ भक्ते निगोद भरणीकादीनां योनिरुत्पत्तिर्येषां ते तद्योनिकत्वात् तेषां । तथा संपातिमानां कुन्थुपिपीलिकादीनां । निशि भक्ते वधो दृष्टः सर्वदर्शिभिः सर्वथा १ ।

तथा शीतयोनिका जीवास्त्रसाश्च भूमिवस्त्रभक्तादावुत्पद्यन्त इति निशि असङ्ख्यजीवानां घातः । तथा आकाशे तु दिवसाष्टमभागतोऽप्कायानां वृष्टिर्भवति, प्रभातेऽपि चतुर्घटिका यावत्, अत आकाशस्थले भोजनतोऽनन्तजीवघातः स्यात् 'जत्थ जलं तत्थ वणं' इति सूत्रवाक्यप्रमाणात् । तथा—

मेहा पिपीलिआए उ हणंति वामणं च मच्छिया कुणइ । जूआ जलोदरं तु कोलिओ कुट्ठरोगं च ॥ १ ॥

इत्यैहिकफलं । तथा—

जीवाण कुंथुमाइण घायणं भायण धोअणाईसु । एमाइ रयणिभोअण दोसे को साहिउं तरइ ॥ १ ॥

तथा—बहुदोस आयु थोवं तह पुण पभणंमि किं पदोसस्स ।

भव उन्दु हणइ जीवा सर सोसंत इक्क तं पवं ॥ १ ॥

एकः कश्चिज्जीवोऽजस्रं षण्णवतिं भवान् यावज्जीवहिंसां करोति तत्परिमितं एकसरोवरशोषकस्य पापं स्यादित्यर्थः १ ।

सरसोसे अट्ठुत्तरभवंमि जीवो करेइ जं पावं । तं पावं दव इक्के इकुत्तरभवं दवदंति ॥ २ ॥

अष्टोत्तरशतभवपर्यन्तं नित्यं सरः शोषयन्तं यत्पापं तन्मितं सकृद्दवदानेन स्यात् २ ।

इकुत्तरभवं दवदावे जं पावं समुपज्जइ जीवो । एग कुवणिजे पायं (वं) भवसयचउआल कुक्कम्मे ॥ ३ ॥

एकोत्तरशतभवपर्यन्तं दवदानेन यत् पापं स्यात् , तन्मितं एककुवाणिज्येन स्यात् । चतुश्चत्वारिंशदधिकशतभवपर्यन्तं कुवाणिज्यैर्यत्पापं तन्मितमेकेन कुकर्मणा स्यादिति ३ ।

जं कुकम्मे पावं तं पावं होइ आलमेगं च । भवसय एगावन्ने आलं तं गमण परइत्थी ॥ ४ ॥

चतुश्चत्वारिंशदधिकशतभवानां कुकर्मभिर्यत्पापं तत्तुल्यं सकृदलीकालदानेन स्यात् । एकपञ्चाशदुत्तरशतभवसम्बन्धि आलदानजं यत्पापं तन्मितं सकृत्परस्त्रीगमनेन भवति ४ ।

नवनवइ भव इत्थीगमणेणं होइ जं पावं । तं पावं रयणीय भोयण करेइ जीवाणं ॥ ५ ॥

नवनवतिभवपर्यन्तं नित्यं परदारगमनैर्यत्पापं तन्मितं सकृद्रात्रिभोजनेन पापं स्यादिति ५ । इति रत्नसञ्चयसूक्तभाषितं । तत्त्वं तु बहुश्रुता एव विदन्तीत्यर्थः ।

ये रात्रौ सर्वदाहारं वर्जयन्ति सुमेधसः । तेषां पक्षोपवासस्य फलं मासेन जायते ॥ १ ॥

तस्मादुपासकैर्यावज्जीवं तत्प्रत्याख्यं रात्रौ चतुर्विधोऽप्याहारस्त्याज्यः, तदशक्तौ त्वशनं स्वादिमं (च)

त्याज्यं । स्वादिमं पूगीफलादि दिवा सम्यक् संशोधितं गृह्णाति अन्यथा त्रसहिंसादयोऽपि दोषाः । मुखभागेन तु प्रातः सायं च रात्रिप्रत्यासन्नत्वाद्द्वे घटिके भोजनं त्यजेत् । यतः—

अह्नो मुखेऽवसाने च यो द्वे द्वे घटिके त्यजेत् । निशाभोजनदोषज्ञोऽश्नात्यसौ पुण्यभाजनम् ॥ १ ॥

उलूककाकमार्जारा गृध्रशंबरशूकराः । अहिवृश्चिकगोधाश्च जायन्ते रात्रिभोजनात् ॥ २ ॥

इति पारलौकिकं फलं । तथा रामायणग्रन्थेऽपि दोषो ज्ञातेनोक्तोऽस्ति । तथाहि—लक्ष्मणसीतासहितो रामो वनवासं गच्छन्नन्तराले कुबरनगराद्बहिर्वटाधः स्थितः वासं करोति । अत्रान्तरे तन्नगरे महीधरनृपपुत्री वनमाला लक्ष्मणोपरि रागिणी तस्य वनवासमाकर्ण्य रात्रौ दैवात्तस्मिन्नेव वटे गलपाशं कुर्वती ज्ञात्वा लक्ष्मणेन पृष्टा सा सत्यं प्राह । ततः पाशं छित्त्वा तेन परिणीता। तयापि शुभलक्षणचेष्टया स्वप्रतिज्ञायोग्यं वरं निश्चित्य स्वामी कृतः । ततो लक्ष्मणः प्राह—'त्वयाऽधुना पितृगृहे स्थेयं, वलमानोऽहं सार्थे ग्रहीष्ये' । सा नानुमन्यते । ततो लक्ष्मणेन स्त्रीगोबालहत्यादिशपथाः कृताः । तथापि नानुमन्यते । ततस्तेनोक्तं—'यत्त्वं ब्रूषे तच्छपथान् कुर्वे' । तयोक्तम्—"जगन्मध्ये ये रात्रिभोजनं कुर्वन्ति तेषां पापेन गृह्येऽहं चेद्वलमानोऽहं त्वां सार्थे न लामीति शपथं करोषि तदाऽहं मन्ये" । तदा तेन तथा विहिते स मुक्तः ।

स्त्रीब्रह्मगोभ्रूणविघातकल्मषात्, मत्वा निशाभोजनपापतुङ्गताम् ।
सा ग्राहयामास तु लक्ष्मणं प्रति, शार्वर्यभुक्तेः शपथं प्रसह्य तम् ॥ १ ॥

॥ इत्युपदेशप्रासादेऽष्टमे स्तंभे षोडशोत्तरशततमं व्याख्यानम् ॥ ११६ ॥

## ॥ अथ सप्तदशोत्तरशततमं व्याख्यानम् ॥ ११७ ॥

अथैतद्रात्रिभोजनव्रतरूपमन्नदयं दुस्त्यजत्वात्पुनः प्रतिबोधाय निरूप्यते—

स्वपरसमये गर्ह्यमाद्यं श्वभ्रस्य गोपुरम् । सर्वज्ञैरपि तत्त्यक्तं पापात्म्यं रात्रिभोजनम् ॥ १ ॥

स्वश्च परश्च स्वपरौ तयोः समयं शास्त्रं तस्मिन् गर्हितुं योग्यं गर्ह्यं । यतः स्वागमे—

जइ वि हु पासुगदव्वं कुंथुपणगा तहा वि दुप्पस्सा । पच्चक्खणाणिणो वि हु राईभत्तं परिहरंति ॥ १ ॥
जइ वि हु पिपीलिमाइ दीसंति पईवमाई उज्जोए । तह वि खलु अणाइन्नं मूलवय विराहणा जम्हं ॥ २ ॥

तथा परागमेऽपि

मृते स्वजनमात्रेऽपि सूतकं जायते किल । अस्तं गते दिवानाथे भोजनं क्रियते किमु ॥ १ ॥
मद्यमांसाशनं रात्रौ भोजनं कन्दभक्षणम् । ये कुर्वन्ति वृथा तेषां तीर्थयात्रा जपस्तपः ॥ २ ॥
वृथा चैकादशी प्रोक्ता वृथा जागरणं हरेः । वृथा च पौष्करी यात्रा कृतं चान्द्रायणं वृथा ॥ ३ ॥

इति पद्मपुराणे ।

उदकं नापि पातव्यं रात्रावत्र युधिष्ठिर । तपस्विना विशेषेण गृहिणा च विवेकिना ॥ १ ॥

इत्यष्टादशे पर्वणि ।

रक्तीभवन्ति तोयानि अन्नानि पिशितानि च । रात्रौ भोजनसक्तस्य ग्रासे तन्मांसभक्षणम् ॥ १ ॥

इति महाभारते ।

नैवाहुतिर्न च स्नानं न श्राद्धं देवतार्चनम् । दानं वा विहितं रात्रौ भोजनं तु विशेषतः ॥ १ ॥ इति ।
तथा श्वभ्रस्य नरकस्य गोपुरं पुरद्वारं आद्यं । यतः—

चत्वारो नरकद्वाराः प्रथमं रात्रिभोजनम् । परस्त्रीगमनं चैव संधानानन्तकायिके ॥ १ ॥

संधानं बोलकीप्रमुखं । इति पद्मपुराणे प्रभासखंडे ।

हृन्नाभिपद्मसंकोचोऽस्तंगते चंडरोचिषि । अतो नक्तं न भोक्तव्यं सूक्ष्मजीवादनादपि ॥ १ ॥

इत्यायुर्वेदेऽपि ।

एकभक्ताशनान्नित्यमग्निहोत्रफलं लभेत् । अनस्तभोजनान्नित्यं तीर्थयात्राफलं लभेत् ॥ १ ॥

इति स्कन्दपुराणे रुद्रप्रणीतकपालमोचनस्तोत्रे सूर्यस्तुतिरूपे । इत्याद्यनेकयुक्त्या पापात्म्यं किल्बिषमयं रात्रिभोजनं । तत्तस्मात्सर्वं भव्याभव्यं पश्यन्तीति सर्वदर्शिनः, तैस्त्यक्तं दूरीकृतं । कुतः ? तत्रोत्पन्नसूक्ष्मजीववधनिवारणेऽक्षमेण सर्ववेदिनापि निषिद्धं, तर्हि अस्मादृशां बाह्येन्द्रिकाणां विशेषेण त्याज्यमिति तत्त्वार्थः ।

एतद्व्रतविषये प्रबन्धो यथा—एकस्मिन् ग्रामे श्रावकभद्रकमिथ्यात्विनस्त्रयो मित्रवणिज आसन् । तेऽन्यदा जैनगुर्वन्तिके धर्ममिमं शुश्रुवुः—

पाणाइ दुगुण खाइमं खाइमं तिगुणेण साइमं होइ । साइमं तिगुण असणं राईभोई मुणेयव्वं ॥ १ ॥

रात्रौ जलपानात् खादिमभक्षणे दूषणं द्विगुणं स्यात्। शेषं सुगमम्।

नयणे न दीसई जीवा रयणीए अंधयारंमि। रयणी वि हु निप्फन्नं दिणभुत्तं राइभोयणं ॥ २ ॥

रात्रौ निष्पादितमन्नं यद्दिवा भुक्तं तद्रात्रिभोजनसमं स्यात्। इति रत्नसञ्चये ५४ पत्रे। तथा हि—

निसि जे उ न वज्जंति बाला कुग्गहमोहिया। एलगच्छु ब्व दुक्खाइं लहंति मरुउ जहा ॥ १ ॥

'एलगच्छु व्वेति' एरुकाक्षवत्। यथा दशार्णपुरे धनश्रीः श्राद्धसुता स्वपतिं धनदेवं प्रति कथमपि दिवसचरिमं कारितवती। ततो देव्या तस्य भगिनीरूपं कृत्वा परीक्षार्थं भोजने आनीते स्त्रिया निषिद्धोऽपि भोक्तुं स्थितः। देव्या चपेटाभ्यां पातितदृग्युगः सोऽभूत्। पत्न्याः कायोत्सर्गेण देव्या पुनर्दत्तं तस्य सद्यः केनचिन्मारितैरूकदृग्युगं। तदनु एरुकाक्षनाम्ना प्रसिद्धोऽभूत् इति।

तथा 'मरुउ' इति मरुकः। मरुकज्ञातं तु श्राद्धदिनकृत्यबृहद्वृत्तितो ज्ञेयं इति गाथार्थः। इत्यादिरात्रिभोजनदेशनां निशम्य श्राद्धेन कुलाचारत्वात्तूर्णं जगृहे वहून् नियमान्। भद्रकस्तु विमृश्य विमृश्य एकमेव प्रस्तुतनियमं जग्राह। मिथ्यात्वी तु न प्रतिबुद्धः। तदनु द्वयोः कुटुम्बमपि तन्नियमपरं जातं। क्रमाच्छ्राद्धः प्रातः सायं च त्याज्यघटिमध्येऽपि भुङ्क्ते, कदाचिद्रात्रावपि। इत्थं शिथिलो जातः। अन्यदा तौ राजकार्ये प्रातरभुक्तौ स्थितौ, सायं गृहे गतौ, तावदुत्सूरोऽभूत्। तत्र मित्रादिभिरत्यर्थं कदर्थितोऽपि भद्रको न भुंक्ते। श्रावकस्तु निःशूकतया 'क्व रात्रि संपूर्णा जाता ?' इति वदन् किञ्चिदन्धकारेऽपि बुभुजे। यतो दिवसेऽपि सान्धकारस्थले भोक्तुस्तथा खारीचंबूप्रमुखसंकरमुखैर्भाजनैर्जलपानकस्य

रात्रिभुक्तदोषाः प्रोक्ताः । यतः—

रयणी भोजन जे दोसा ते दोसा अंधयारंमि । जे दोसा अंधयारंमि ते दोसा संकमुहे ॥ १ ॥

तर्हि रात्र्यन्धकारे तु महान् दोषः । तदा तस्य भोजने मूर्ध्नः पतितयूकाभक्षणेन जलोदरव्याधिना पञ्चत्वमगमत् । ततो मार्जारोऽजनि । तत्राशुभध्यानेनाद्यनरके जातः । मिथ्यात्वी अपि अहिगरलमिश्रितनिशिभोजनतो मृत्वा स्थूलोतुत्वेनोत्पन्नः । तत आद्यश्वभ्रेऽजनि । भद्रकजीवस्तु सौधर्मे सुरोऽभूत् । ततः श्राद्धजीवो निःस्वद्विजस्य तनुजः श्रीपुञ्जनामा मिथ्यादृष्टिश्च तस्यानुजोऽभूत् । ततो भद्रकदेवेन नियमभङ्गफलमुक्त्वा तौ प्रबोधितौ सर्वाभक्ष्यनियमान् जगृहतुः । पित्राद्यैस्तु तयोः कदाग्रहनिग्रहाय सर्वथा भोजनं निषिद्धं । लङ्घनत्रयं जातं । तृतीयरात्रौ तत्सुरेण भूपतिजठरे व्यथा चक्रे । अनेकोपायैर्न शान्ता । तदा देवेनोक्तं—“निशिभोजननियमवान् श्रीपुञ्जः, तस्य हस्तस्पर्शेनैवास्य राज्ञः समाधिर्भविष्यति” । सचिवाद्यैः श्रीपुञ्जस्तत्रानीतः उच्चैराह—‘यदि मद्व्रतमाहात्म्यमस्ति तदा नृपरोग उपशाम्यतु’ इत्युक्त्वा नृपं स करस्पर्शेन पटूचक्रे । नृपेण पञ्चशतग्रामाधिपत्यं दत्तं । श्रीपुञ्जः सर्वत्र स्वनियममहिमानमतनोत् । ततः स्वानुजेन सार्द्धं सौधर्मे प्राप्तः । त्रयोऽपि क्रमात् सेत्स्यन्ति ।

व्रतात्तमात्रान्न हि धर्मपूर्णता, निमित्तमुख्यं परिणामसंगतः ।
सभद्रकोपासकयोः प्रबन्धतः, विचार्य तत्त्वं निशिभोजनं त्यजेत् ॥ १ ॥

॥ इत्युपदेशप्रासादेऽष्टमस्तंभे सप्तदशोत्तरशततमं व्याख्यानम् ॥ ११७ ॥

## ॥ अथाष्टादशोत्तरशततमं व्याख्यानम् ॥ ११८ ॥

अथ शेषाण्यभक्ष्याण्याह—

अनन्तकायसंधाने बहुबीजं च (त्व) भक्ष्यकम् । आमगोरसमिश्रं च द्विदलं सूक्ष्मसत्त्वजम् ॥ १ ॥

तुच्छफलं च वृन्ताकं रसेन चलितं तथा । अज्ञातफलमेतानि अभक्ष्याणि द्वाविंशतिः ॥ २ ॥

अनन्तकायं साधारणवनस्पतिः अनन्तजीवघातहेतुत्वादभक्ष्यं, तत्स्वरूपमग्रे लिखिष्यते १९ । तथा संधानं निंबुकबिल्विकादीनां, अनेकजीवोत्पत्तिनिमित्तत्वात् । क्षारव्यञ्जनस्य राजिकामिश्रस्य दिनत्रयादधिकमभक्ष्यं व्यवहारवृत्त्येति । तथा क्षारक्षिप्तार्द्रनिंबुकादेर्वर्णगन्धरसादिपरावृत्त्यावातपत्रयलग्नाभावेऽप्यनार्द्रता भवतीति वृद्धवादः १६ । बहुबीजं पंपोटकादि अंजीरकादिकमाभ्यन्तरपुटादिरहितं केवलबीजमयं । तत्र प्रतिबीजं जीवघातः स्यात् । यच्चाभ्यन्तरपुटादिसहितबीजमयं दाडिमटिंडुरकादि तन्नाभक्ष्यं १७ । आमगोरसं कच्चकदध्यादिकं तेन संमिश्रं मिलितं यद्द्विदलं तस्मिन् केवलिगम्यसूक्ष्मजीवोत्पत्तिसंभवात् । द्विदललक्षणं त्विदम्—

जामवपिलिज्जंति नहु नहु हवंति तं विदलं । विदले विहु उपन्नं नेहजुअं होइ नो विदलं ॥ १ ॥

अतः कठोलकमिश्रं तक्रादिकं न सेव्यं । परशास्त्रेऽप्युक्तं—

गोरसं माषमध्ये तु मुद्गादिस्तु तथैव च । भक्ष्यमाणं भवेन्नूनं मांसतुल्यं च सर्वदा ॥ १ ॥

तथा घोलवटका नाम घोलमिश्रवटकानि अभक्ष्याणि । यद्यावं कच्चकतक्रादिकमुष्णीकृत्य पश्चाद्वि-

दलनिष्पन्नं द्रव्यं क्षिप्तं न दोषायेति वृद्धेभ्यः श्रुतमस्ति । इदं केचित् ढुंढकादयो न मन्यन्ते, तदसत्यं, यतो विचारसंसक्तनिर्युक्तौ बियाख्यवृक्षस्य यष्टिः अंकोलवृक्षस्य घाणिका एतद्द्वययोगेनेक्षुपीलने समूर्छिममत्स्याः समुत्पद्यन्ते तद्वदत्रापि ज्ञेयं । यतः—

जइ मुग्गमासमाइ विदलं कच्चम्मि गोरसे पडइं । ता तस्स जीवुप्पत्तिं जाणंति दहिए वि दुदिणुवरिं ॥१॥

‘तिदिणुवरिं’ इति पाठस्तु न सम्यग्ज्ञायते ‘दध्यहर्द्वितयातीतं’ इति योगशास्त्रवृत्त्युक्तत्वात् । अत एव आमगोरससंसक्तं द्विदलं सूक्ष्मसत्त्वजं सूक्ष्मा जीवा जायन्ते यत्र तत्सूक्ष्मसत्त्वजं अभक्ष्यं ज्ञेयमिति १८ । इति प्रथमश्लोकार्थः ॥ १ ॥

तुच्छफलं मधुकजंबूबदरीफलादिकं उपलक्षणात् तुच्छं पुष्पं पत्रं च ग्राह्यं, पुष्पं करीराणिप्रमुखं, तुच्छं पत्रं वर्षाकाले तंदुलीयकादिकं कोमलमुद्गचपलसिंगादिकं च बहुजीवसंसक्तत्वाद्बहुतृप्तेरकरणाच्चेति १९ । चापरं । वृन्ताकं तन्मदनप्रकटनादिना दोषान्वितत्वात् । लोकग्रन्थेऽपि यतः—

यस्तु वृन्ताककालिंगमूलकानां च भक्षकः । अन्तकाले स मूढात्मा न स्मरिष्यति मां प्रिये ॥ १ ॥
वृन्ताकं श्वेतवृन्ताकं मूलकं रक्तमूलकम् । वर्जयेच्चैव शास्त्रज्ञ इत्येवं मनुरब्रवीत् ॥ २ ॥

इति भारते शान्तिपर्वणि प्रथमपादे इति २० । तथा रसेन चलितं निःस्वादजातं पर्युषितं द्विदलमपि पूलककेवलराद्धकूरादि तथाऽन्यदपि सर्वं कुथितं बहुजीवसंसक्तत्वात्त्याज्यं । यतः—

---

१ केरडो इति भाषायां ।

मिच्छत्ता संचइए विराहणा पाणजाईउ । समुच्छणाय तक्कण दव्वे य दोसा इमे हुंति ॥ १ ॥

अशनादिकं रजन्यां परिवासमानं वीक्ष्य शैक्षोऽन्यो वा मिथ्यात्वं गच्छेत् उड्डाहं वा कुर्यात्—'अहो अमी संचयकारकाः' । तथा परिवासिते संयमविराधना स्यात् । सक्तुकादिषु धार्यमाणेषु कुरणिकादयः प्राणिजातयः संमूर्च्छन्ति । पिपुलकादिषु लालादिसंमूर्च्छिमाश्च भवन्ति, उंदिरा वा तत्राहारार्थमागताश्चर्वणं कुर्वन्तो मार्जारादिना भक्ष्यन्ते । एवमादिदोषा भवन्तीत्यादि बृहत्कल्पटीकायां ज्ञेयं । लालाजीवास्तु द्वीन्द्रिया इति वृद्धसंप्रदायः । केचित् ढुंढकादयो न मन्यन्ते, तदयुक्तं, प्रत्यक्षं रोटिकादिषु दृश्यमानत्वादिति । तथोपलक्षणात् कालातीतपक्वान्ने तु एवमुक्तं—

वासासु पनर दिवसं १ सीउ २ एह ३ कालेसु मास १ दिन वीसं ३ ।
उंगाहिमं जईणं कप्पइ आरंभपढमदिणा ॥ १ ॥

केचित्तु वर्णगन्धादिनाऽविनशनं यावदवगाहिमं शुध्यतीत्याहुः । तथार्द्रानक्षत्रात्परतः सहकारफलरसोऽपि दिनद्वयातीतं दधि च तक्रं च न सेव्यं इत्यादिभक्ष्यविचारः संप्रदायान्निर्धार्यः इति २१ । तथाऽज्ञातफलं नामजात्याद्यगम्यं फलं, उपलक्षणतः पत्रं पुष्पं मूलं च त्याज्यं २२ । यतो ब्रह्माण्डपुराणेऽपि—

'अभक्ष्यभक्षणाद्दोषात् कंठरोगः प्रजायते' ।

तथा शातातपोक्तशास्त्रेऽपि—'अभक्ष्यभक्षणे चैव जायन्ते कृमयो हृदि' । इति । एतानि पूर्वोक्तैः सह मीलने द्वाविंशतिः अभक्ष्याणि भवन्तीति द्वितीयश्लोकार्थः ॥ २ ॥

एतद्भक्ष्यं किल पापरूपं सर्वत्र काले व्रतिभिर्गृहस्थैः ।
कृत्वादरं न हि सेवनीयं, श्रीमज्जिनेन्द्रागममर्मविज्ञैः ॥ १ ॥

॥ इत्युपदेशप्रासादेऽष्टमस्तम्भेऽष्टादशोत्तरशततमं व्याख्यानम् ॥ ११८ ॥

## ॥ अथैकोनविंशत्युत्तरशततमं व्याख्यानम् ॥ ११९ ॥

अथ चलितरसं पर्युषिताद्यभक्ष्यमाबालगोपालादीनां दुस्त्याज्यत्वात् पुनस्तद्वर्ण्यते—

रसैश्चलितं निःस्वादं क्षुद्राणां योनिस्थानकम् । पर्युषितं कुत्सितान्नं भक्षणाद्दुःखमासदेत् ॥ १ ॥

स्पष्टार्थः । उक्तमर्थं दृष्टान्तेन दृढीक्रियते—

कनकपुरे जिनचन्द्रश्रेष्ठी । तस्य पत्नी शीलवती । तयोः पुत्रो गुणसुन्दरनामाऽभूत् । पुत्रो धर्मरहितः । तं प्रति माता प्राह—"हे पुत्र त्वं वासिभोजनाद्यभक्ष्यं मा कुरु, येन देहे दद्रुकरोलियावाक्षणिवातबुद्धिहीनत्वादिदोषा जायन्ते, तथा त्रसहिंसापि स्यात् । त्वयास्य दोषाः समयामृतसूरीनापृच्छ्य धार्याः"। स तत्रोद्यानागतगुरुं नत्वा तद्दोषान् पप्रच्छ । तैरुक्तं—'सुभागनगरे श्वपचमातङ्गोऽस्ति । स त्वां कथयिष्यति' । स तत्र नगरे गत्वा श्वपचगृहमन्वेष्य श्वपचाय तद्दोषान् पप्रच्छ । तेनोक्तं—'कथयिष्ये' । ततो मातङ्गेनेभ्यहट्टात् शाल्यादिकं दापितं । तेन गृहीतं । कृपणगृहे मूल्येन पाचितं । स भोज-

नाय निविष्टः । तदा कृपणपत्न्या पृष्टं—'त्वं कुतः समागतः ?' । तेन सर्वं प्रोक्तं । तया भ्रातेति उपल-
क्षितः । तया द्वितीयदिने चलन्नाग्रहेण रक्षितः । स्वपतिपार्श्वे शाट्यादि मार्गितं । तेनोक्तं—'वस्त्रतैलं
गृहीत्वा भोजय' । तयाऽन्यहट्टादानीय भोज्यं घेवरादिकं क्रियमाणं श्रेष्ठिना ज्ञातं । तेनातीव खिन्नः ।
क्रोधेन पर्युषितमन्नं भक्षयित्वा हृदयस्फोटेन मृतः । भ्राता भोजनार्थं स्थापितः । स्त्रिया तत्स्वरूपं ज्ञातं,
परं द्रव्यं राजसाद्भवतीति भिया नोक्तं, तं गर्त्तायां निक्षिप्य बन्धुमाह—"त्वं चतुःकोटिद्रव्येण व्यापारं
कुरु, लोकानां पुरः श्रेष्ठी वेलाकूले गतोऽस्तीत्येव वाच्यं, तज्जीवितेन मंक्षिता मृतेन च रंक्षिता, किमत्र
शोकेन रोदनेन च" । तद्वचसा हट्टे स व्यवसायमकरोत् । अथ स मातङ्गस्तं प्रति भोजनं दापयित्वा
गृहे गतः । भोजनसमये स्त्रिया इदमद्यैव रन्धितमस्तीति परुषवाक्यमुक्त्वा वासिभोजनं द्वात्रिंशत्प्रह-
रीयं तक्रं तस्य परिवेषितं, किंचिदन्धकारे तद्भुक्तं । तेन ज्ञातमपि नियममवगणय्य भुक्तं । शूलरोगेण
गाढनिद्रामध्ये मृत्वा सुन्दरभगिनीकुक्षावुत्पन्नः । केषुचिद्दिवसेषु गतेषु सुन्दरो मातङ्गपाटके गतः । श्वाव-
रगृहे शोकाक्रन्दं वीक्ष्य कस्यचित् पृष्टं । तेन श्वावरनिमीलनं ज्ञापितं । श्रुत्वा स विषण्णः 'हा किमेतत्
संदेहोऽपि न भग्नः' । ततो गमनोत्सुको भगिन्या पुत्रजन्म यावत् स्थापितः तस्थौ । एकदा विपणिस्थित
एकया स्त्रियाऽवाचि—'जामयेनाधुना त्वमाकार्यसे' । स आश्चर्येण गतस्तत्र । तेन जातमात्रो बालो
दृष्टः । तेनोक्तं—'श्वावरगृहे जातमात्रं बालं श्वावरपत्न्या मार्यमाणं रक्ष' । स तत्र गत्वा मातङ्गीं प्राह—
'किमर्थं हिंसां करोषि ?' । साऽवोचत्—"किं करोमि ? यदा कुक्षावागतस्तदा तत्र सुहृन्मृतः परमदा-

रिद्यं च गेहे प्रसृतं, किं बहुना ?" । सुन्दरेण बहुधनदानेन मोचितः । पुनर्गृहमागतः । भागिनेयोऽवदत्—'मातुल भग्नः संदेहः ?' मातुलेनोक्तं—'न भग्नः' । बालोऽवदत्—"तव साधर्मिकस्य भक्तिं कृत्वा नियममभक्ष्यस्य प्रपाद्याहं थावरोऽत्र चतुःकोटिद्रव्येशो जातः । किंचिद्विराधितं, तेन तद्भवे शूलरोगेण महाव्याधिना मृतः । उषिताद्यभक्ष्यभक्षणेन श्रेष्ठी थावरसुतो जातः । अतः परं त्वमपि अभक्ष्यनियमं स्वीकुरु" । तदङ्गीकृत्य स स्वपुरे एत्य सर्वस्वरूपं मातरं प्राह । माता हृष्टा । यतः—

अधमा सान्वयासुना मध्यमा द्रविणार्जनैः । उत्तमा हृष्यति (स्त्री) च तैस्तैः सुकृतकर्मभिः ॥ १ ॥

एकदा स गुरुं प्राह—'स्वामिन् मत्संशयो भग्नः, परं मज्जामेयस्य वाक् कथं जाता ?' । गुरुभिरूचे—"मातङ्गेन प्रान्तसमये मित्रचेटकाय पृष्टं—'सुन्दरसंशयो मत्तो न भग्नः, अथ किं करोमि ?' । देवेनोक्तं—'कृपणौकसि तव मुखेऽवतीर्य तं निःसंशयं करिष्ये' । ततो वाग् बभूव" । इति श्रुत्वा स सुन्दरः श्रावकधर्मं मुनिधर्मं च प्रपाद्य देवभूमिमियाय ।

एतच्चरित्रस्य विभाव्य तत्त्वतां, सर्वाङ्गपाटव्यविशेषजीवितम् ।
तन्मानुपत्वं च समाप्य तन्यतां, पर्युषितान्नकदनस्य सद्व्रतम् ॥ १ ॥

॥ इत्युपदेशप्रासादेऽष्टमस्तम्भे एकोनविंशत्युत्तरशततमं व्याख्यानम् ॥ ११९ ॥

## ॥ अथ त्रिंशत्युत्तरशततमं व्याख्यानम् ॥ १३० ॥

अथाज्ञातफलविषये गुणदोषानाह—

फलान्यज्ञातनामानि पत्रपुष्पाण्यनेकधा । [1]गुरुसाक्ष्यात्मसौख्यार्थं त्याज्यानि वंकचूलवत् ॥ १ ॥

स्पष्टः । वंकचूलप्रबन्धस्त्वयम्—

ढीपुरीतिपुर्यां विमलयशोराज्ञः पुष्पचूलापुष्पचूलाख्यौ पुत्रीपुत्रावभूतां । पुष्पचूलस्तु प्रकृत्योद्धंवत्वाल्लोकैर्वंकचूल इत्यभिधानं कृतं । तदौद्धत्यं महाजनादाकर्ण्य राज्ञा क्रोधेन नगरान्निःसारितो महारण्ये गतः । तस्य पत्नी स्वसापि च स्नेहेन तदनुगते । भिल्लैः स स्वपल्ल्यां नीत्वा स्वभूपः कृतः । एकदा तत्र सिंहगुहापल्ल्यां सूरयः प्रापुः । वर्षाकाले वसतिस्तत्पार्श्वे तैर्याचिता । वंकचूलः प्राह—'मम सीमानं यावद्धर्मो न वाच्यः, मौनेनात्र स्थेयं' । त ऊचुः—'भवद्भिर्जीववधो न कार्यः' । तेन स्वीकृतं । चतुर्मास्यन्ते विहारसमयस्तस्मै ज्ञापितः । यतः—

समणाणं सउणाणं भमरकुलाणं च गोकुलाणं च । अनिआउ वसईउ सारईआणं च मेहाणं ॥ १ ॥

ततो गच्छद्भिस्तैः सह कंचित्प्रदेशं गत्वा स्थितः । सूरिस्तमाह—"हे भद्र त्वममुमभिग्रहं गृहाण, अज्ञातफलानि नाद्यानि, सप्ताष्टपदान्यपसृत्य घातो देयः, राज्ञः स्त्री न सेव्या, ध्वांक्षमांसं न खाद्यं इति" । सुकरत्वात्तेनात्तं व्रतैकदेशत्वं, गुरूंनत्वा गृहमगमत् । एकदा स सार्थं चौरैः सह हृत्वाऽरण्ये प्रविष्टः ।

---

१ गुरुः साक्षी यस्मिन् कर्मणि यथा स्यात्तथेति क्रियाविशेषणम्.

तत्र क्षुत्क्षामैरन्यलुंटाकैः किंपाकवृक्षफलानि भुक्तानि, स्वयं त्वज्ञातनामानि मत्वा नादत् । ते तु मृताः । ततोऽसौ दध्यौ—'अहो नियमफलं' । ततो रात्रौ स्वगृहे प्रविष्टः पत्न्या सह सुप्तैकनरं वीक्ष्य चुकोप । तं हन्तुमिच्छन् नियमं संस्मृत्य सप्ताष्टपदान्यपसृत्य खङ्गं उद्यच्छति तावत्खङ्गो द्वारे पश्चात्संघट्टितः । तद्र-वेण स्वसा विनिद्रोत्थाय कस्त्वमित्यवदत् । ततः स्वरेण स्वसारं तां ज्ञात्वा पप्रच्छ—'कथमयं पुंवेषः कृतः ?' । साह—'नरवेषेण नटनृत्यं विलोक्यात्रैव सुप्ता' । तदाकर्ण्य स्वगुरुमश्लाघत । एकदा तत्राग-तसूरिशिष्यान्नत्वा जिनप्रासादबिम्बविधापनदेशनां श्रुत्वा तस्यामेव पल्ल्यां चर्मण्वतीनदीतीरे श्रीवी-रप्रासादमकारयत्, तत्तीर्थं जातं । कालान्तरे एको नैगमः सन्नार्यस्तद्यात्रायै प्रस्थितः । क्रमेण चर्मण्वतीं नदीमुत्तरितुं नावमारूढौ दम्पती । तच्चैत्यशिखरं वीक्ष्य चन्दनादि भृतस्वर्णकच्चोलेन तद्द्रव्यं क्षेप्तुमार-ब्धवती नैगमस्त्री । तावत्तस्या हस्तात्पतितं जलमध्ये । तदा वणिजाऽभाणि—"अहो इदं राज्ञः कच्चोलं ग्रहणके रक्षितं रत्नखचितं, किं प्रत्युत्तरं तस्मै दास्ये ?" । ततस्तदाज्ञया धीवरो मध्ये प्रविष्टः, तत्रान्तः श्रीपार्श्वबिम्बाङ्के स्थितं गृहीत्वा दत्तं । तद्रात्रौ नाविकेन स्वप्नं दृष्टं—"नद्यां क्षिप्ता पुष्पमाला यत्र गत्वा तिष्ठति तत्र बिम्बं संशोध्य एकं वंकचूलाय देयं" । तेन तथा कृते स तस्य दानं दत्त्वा श्रीवीरप्रासादस्य बहिर्मंडपे श्रीपार्श्वबिम्बमस्थापयत् । ततो नव्यं चैत्यं कारयित्वा तद्बिम्बस्थापनार्थं बहिर्मंडपाद्ग्रहीतुमा-रभन्ते बहुनराः । परं तद्बिम्बं तत्रैव तस्थौ । अद्यापि तथैवास्ते । पुनर्धीवरेणोक्तं—स्वामिन् तत्र द्वितीयं बिम्बं सुवर्णरथं चास्ति । ततो वंकचूलेन पृष्टा स्वपरिषत्—'को जानीते कोऽप्यनयोर्बिम्बयोर्ज्ञातं' । केन-

चित्स्थविरेणोक्तं—"देव पुरा प्रजापालनृपः शत्रुसैन्येन सार्धं योद्धुं गतः । तदा भीत्या तस्य स्त्री निजं स्वमेतच्च बिम्बद्वयं कनकरथस्थं विधाय जलदुर्गमिति मत्वा चर्मण्वत्यां नौकायां प्रक्षिप्य स्थिता । इतश्च केनचित् खलेन नृपकथाशेषत्वमुक्तं । ततः सा तां नावमाक्रम्य जलतले प्राक्षिपत् । सा मृत्वा जिनध्यानेन सुरो भूत्वा एतद्बिम्बभक्तो जातो भविष्यति । अन्यथा महिमा कथं स्यात् । तत्रैकं बिम्बं भवद्भिरानीतं । द्वितीयं तत्रास्ति" । इति श्रुत्वा तद्बिम्बग्रहणायानेकोपायानकार्षीत् । न च तन्निर्गतं । श्रूयतेऽद्यापि वर्षमध्ये एकदिने दर्शनं ददाति । अथ श्रीवीरबिम्बापेक्षया लघीयस्तरं श्रीपार्श्वनाथबिम्बं इति महावीरस्यार्भकोऽयं देव इति मत्वा चेल्लण इत्याख्यां लोका प्राचीकथन् । सा सिंहगुहापल्ली क्रमान्महापुरं जातं । अद्यापि श्रीवीरः सचेल्लणपार्श्वनाथः संघैर्यात्रोत्सवैराराध्यते इति । अन्यदा वंकचूल उज्जयिन्यां राजकोशाद्बहिर्गोधापुच्छे विलग्य प्राविशत् । कोशो दृष्टः । राजाग्रमहिष्या रुष्टया पृष्टः—'कस्त्वं ?' । तेनोचे—'चौरोऽहं' । तयोक्तं—'मा भैषीः, मया सह संगमं कुरु' । सोऽवोचत्—'का त्वं ?' । साप्यूचे—'नृपराज्ञ्यहं' । चौरोऽवादीत्—'यद्येवं तर्हि ममाम्बा भवसि, अतो यामि' । इति श्रुत्वा तया स्वनखैः स्वाङ्गं विदार्य पूत्कृतिपूर्वकमाहूता रक्षकाः । तैर्बध्वा रक्षितः । तदा छन्नो नृपोऽप्यचिन्तयत्—'अहो स्त्रीचरित्रं कीदृशं ?' । ततः प्रभाते सभायां तैः स नृपस्य पुरो नीतः । नृपेण बन्धनान्मोचितः, नत्वोपाविशत् । 'कथं मन्मन्दिरे त्वं समागतः ?' इति नृपेण कथिते सति वंकोऽवदत्—'देव चौर्यायाहं प्रविष्टः, पश्चाद्युष्मद्देव्या दृष्टोऽस्मि' । यावदन्यन्न कथयति तावत्तुष्टो नृपस्तं पुत्रतयाऽरक्षत् । मार्यमाणां

देवीं ररक्ष सः । 'अहो नियमानां शुभं फलं इत्यजस्रं दध्यौ । एकदा नृपेण युद्धार्थं प्रेषितस्तत्राहवे गाढप्रहारार्दितः सेवकैः नृपाग्रे नीतः बहुवैद्या आकारिताः, तैः काकमांसौषधं प्रोक्तं, स नेच्छति, तदा तन्मित्रजिनदासो भूपेनाहूतः । जिनदासोऽवन्तिं समागच्छन् वने द्वे देव्यौ रुदत्यौ अद्राक्षीत् । तेन पृष्टे— 'किं रुदिथः ?' । ताभ्यामुक्तं—'देव्यावावां हि सौधर्मवासिन्यौ भर्तृवर्जिते काकमांसमनश्नन् आवयोरेष पतिर्भवेत्, त्वद्वचसा नियमभंगात्तस्य दुर्गतिर्भाविनीति रोदनहेतुः" । तच्छ्रुत्वा स आह—'अहं तं दृढं करिष्ये' । ततः स श्राद्धो नृपप्रेरितोऽपि तं प्राह—

वरं मच्चु वरं वाहि वरं दारिद्दसंगमो । न पुन गहियवयभंगं कज्जमकज्जं च ॥ १ ॥

इत्यादिना विशेषप्रतिपन्नव्रतनियमोऽच्युतकल्पमगमत् । वलमानेन तेन सुर्यौ प्रोक्ते—'किमित्यधुनापि रुदिथः ? न तावत्स मांसं संग्राहितः' । ताभ्यामभिदधे—'स चाधिकाराधनावशादच्युतं प्राप्तः, ततो नाभवदस्मद्भर्त्ता' । इति श्रुत्वा श्राद्धो गृहमाससादेति । अस्य ढीपुरीतीर्थस्य निर्मापयिता वंकचूलः ।

श्रीवंकचूलोऽच्युतदेवलोकं, स्वल्पव्रतेनाप स सत्यसन्धः ।
सर्वाण्यभक्ष्याणि नरास्त्यजन्ति, तन्वन्ति तद्वन्ननु सौख्यपुष्टिम् ॥ १ ॥

॥ इत्युपदेशप्रासादेऽष्टमस्तंभे विंशत्युत्तरशततमं व्याख्यानम् ॥ १२० ॥

॥ समाप्तोऽयमष्टमः स्तम्भः ॥ ८ ॥

## ॥ नवमः स्तंभः ॥ ए ॥

### ॥ एकविंशोत्तरशततमं व्याख्यानम् ॥ १२१

अथानंतकायस्वरूपमाह—

प्रसिद्धा आर्यदेशेषु, कंदाद्यनंतकायिकाः । द्वात्रिंशत्संख्यया ज्ञेया–स्त्याज्यास्ते सप्तमे व्रते ॥ १ ॥

कंदाद्यनंतकायिका द्वात्रिंशद्विधाः । यदाहुः—

“सव्वाय कंदजाई, सुरणकंदो अ वज्जकंदो अ । अल्लहरिद्दाय तहा, अल्लं तह अल्लकच्चूरो” ॥ १ ॥
“सत्तावरी विराली, कुंआरि तह थोहरी गलोई य । लसुणं वंसकरिल्ला, गज्जर लूणो अ तह लोढी” ॥ २ ॥
“गिरिकन्नि किसलिपत्ता, खरिंसुआ थेग अल्लमुत्था य । तह लूण रुक्खछल्ली, खिल्लहडो अमयवल्ली य” ॥ ३ ॥
“मूला तह भूमिरुहा, विरुहा तह ढक्क वत्थुलो पढमो । सूअरवल्लो अ तहा, पल्लंको कोमलंबिलिआ” ॥ ४ ॥
“आलू तह पिंडालू, हवंति एए अणंतनामेणं । अन्नमणंतं नेयं, लक्खणजुत्तीइ समयाओ” ॥ ५ ॥

व्याख्या—

सर्वकंदजातिरनंतकायिका, तत्र प्रसिद्धभेदान्नामत आह—सूरणकंदः (अर्शोघ्नः), वज्रकंद, आर्द्रहरिद्राः, आर्द्रशृंगवेर ‘आदु’ इति लोके, आर्द्रकच्चूरकः, शतावरीविरालिके वल्लिभेदौ, कुमारी, थोहरी

स्नुही तरुः, गडुचिः 'गलो' इति लोके, लशुनं, वंशकरिल्लानि, गर्जरकाणि, लवणको वनस्पतिः, येन दग्धेन सर्जिका निष्पद्यते, लोढकः पद्मिनीकंदः, गिरिकर्णिका वल्लिः, किशलयपत्राणि प्रौढपत्राण्यर्वाक् बीजस्योच्छूनावस्थायां सर्वाण्यपि, न तु कानिचिदेव, ननु 'सव्वोवि किसलओ खलु उग्गममाणो अणंतओ भणिओ' इति वाक्यं तु सत्यं कृतं परमागमे—'जोविय मूले जीवो, सोवि य पत्ते पढमयाएत्ति' एतद्वाक्यस्य किं समाधानं ? एकत्र संध्यतेऽन्यत्र प्रच्यवते । शृणवत्रोत्तरं मात्वरिष्ठाः—बीजस्यांबुकालक्ष्मादिसामग्र्या बीजजीवोऽन्यो वा उद्गमावस्थायां भवति तत्र बीजस्य मूलप्रथमपत्रे एकजीवकर्तृके एतद्वयमपि जानीमः, परं—

"बीजे मूलतयोत्पद्य, बीजजीवोऽथवापरः । करोत्युत्सूनावस्थां, ततोऽनंतरभाविनीम्" ॥ १ ॥

"ध्रुवं किशलयावस्थां, सृजंत्यनंतजंतवः । ततश्च तेषु जीवेषु विनष्टेषु स्थितिक्षयात्" ॥ २ ॥

"स एव जीवमूल(मूलजीव)स्तां, तनुमनंतदेहिनाम् । समासाद्य स्वग(क)तया, तावद्वर्ध्यते किल" ॥३॥

"यावत्प्रथमपत्रं स्या–त्ततश्च न विरुध्यते । किशलयेऽनंतकायित्व–मेककर्त्तृकतापि च" ॥ ४ ॥

अन्ये तु प्रथमं पत्रत्वशब्देन बीजस्याद्यसमुच्छूनावस्थामेव वदंति, प्रत्येकोऽथवापरः किशलयसर्वमनंतकायिकम् । खरिशुकः, थेगश्च गोपकंदः, आर्द्रा मुस्ता, लवणापरपर्यायस्य भ्रमरनाम्नो वृक्षस्य छविस्त्वक्, न त्वन्येऽवयवाः, खिल्लहूडो (डः) कंदः, अमृतवल्ली, मूलकं, महाभारतेऽप्युक्तं—

"पुत्रमांसं वरं भुक्तं, नतु मूलकभक्षणम् । भक्षणान्नरकं गच्छे–द्वर्जनात्स्वर्गमाप्नुयात्" ॥ १ ॥

"रक्तं मूलकमित्याहु–स्तुल्यं गोमांसभक्षणम्। श्वेतं तद्विद्धि कौंतेय मूलकं मदिरोपमम्" ॥ २ ॥
"यस्मिन् गृहे सदन्नार्थं, कंदमूलानि पच्यन्ते । श्मशानतुल्यं तद्वेश्म, पितृभिः परिवर्जितम् ॥ ३ ॥

भूमिरुहाणि छत्रकाणि पर्जन्यकाले भूमिस्फोटकानीति, विरूढान्यंकुरितानि द्विदलधान्यानि, ढंक-वास्तुलः शाकभेदः, शूकरनामा वल्लः न तु धान्यवल्लः, पल्यंकः शाकभेदः, कोमलाम्लिका, आलुकपिंडा-लुकौ कंदौ । न चैते एवानंतकायाः किंतु सिद्धांतयुक्त्याऽन्येऽपि ज्ञेयाः । यतः—

"गूढसिरसंधी(धि)पव्वं, समभंगमहीरुगं च छिन्नरुहं । साहारणं सरीरं तव्विवरीयं च पत्तेयं" ॥ १ ॥

तेषामेकदेहे स्थितानंतजीवानां शरीरोच्छ्वासनिःश्वासाहारादयः सर्वेषां सममेवोक्तास्तेन दुःखमप्यनंतम्। साधारणवनस्पतेस्त्वग्मात्रखंडेऽनंता जीवा निगदिताः । एतद्विपरीतलक्षणा प्रत्येकवनस्पतिः स्यादिति । अत्र बहु वक्तव्यं तत्तु लोकप्रकाशवनस्पतिसप्ततिकातो ज्ञेयं ।

लोकशास्त्रे त्वेवं—

"शून्यसप्तांकहस्ताश्व–सूर्येंदुवसुवह्नयः ( ३८११२७२९७० ) ।
एतत्संख्यांकनिर्दिष्टो, वनभारः प्रकीर्त्तितः" ॥ १ ॥

पाठांतरे च—

"रामो वसवतश्चंद्रः ( रामश्च वसवश्चन्द्रः ) सूर्यो भूमिस्तथैव च ।

मुनिशून्य ( ३०११२११० ) समादिष्ट–जारसंख्या निगद्यते" ॥

"एकैकजातेरेकैक–पत्रप्रचयतो जवेत्। प्रोक्तसंख्यैर्मणैर्जार–स्ते त्वष्टादश जूरुहां" ॥ २ ॥

"चत्वारोऽ पुष्पका जारा, अष्टौ च फलपुष्पिताः। स्युर्वल्लीनां च षड्जाराः शेषनागेन जाषितम्" ॥ ३ ॥

अथवा पक्षांतरे च—

"कटुकस्य जारचत्वारिं, द्वौ जारं तिक्तमुच्यते। त्रीणि जारं जवेन्मिष्टं, मधुरं जारकत्रयम्" ॥ ४ ॥

"क्षारं च जारमेकं तु, कषायं जारकद्वयम्। सविषं जारमेकं तु, द्वौ जारं निर्विषं यथा" ॥ ५ ॥

"षड्जाराः कंटका ज्ञेयाः, षड्जाराश्च सुगंधकाः। षड्जाराश्च निर्गंधा, जारानष्टादश विदुः" ॥ ६ ॥

"चार जार फूलांविण जोय, फलविण आठ जार जग होय।
फलफूले षट जार विचार, एहवी वणसइ जार अढार" ॥

अनंतकायमजक्ष्यं चाचित्तीजूतमपि नादेयं, शुंठ्यादिकं तु ग्राह्यमित्याद्यनंतकायस्वरूपं ज्ञात्वा सप्तमव्रते ते त्याज्या हेया, अनंतजीवात्मकादिवस्तु नैव जक्ष्यमित्यर्थः। अत्रार्थे धर्मरुचिसंबंधोऽयं—

"वसंतपुरे जितशत्रू राजा, धारिणी जार्या, तयोर्धर्मरुच्यजिधानः सुतः। स च राजान्यदा तापसपार्श्वे प्रव्रजितुमिछन् स्वसुतं राज्ये स्थापयितुमुद्यतस्तेन च जननी पृष्टा—"किमिति पिता राज्यं त्यजति?" तयोक्तं—"किमनया चपलया नरकादिसकलदुःखहेतुजूतया स्वर्गापवर्गमार्गार्गलयाऽवश्यमपायिन्या

परमार्थत इह लोकेऽप्यभिमानमात्रया राजविभूत्याऽतः सर्वसुखसाधकं धर्मं कर्त्तुमुद्यतः" । धर्मरुचिस्तदाकर्ण्योक्तवान्—"यद्येवं किमहं तातस्यानिष्टो येनैवंभूतं सर्वदोषभूमिं मयि नियोजयति ?" इत्युक्त्वा पित्रा सह दीक्षां ललौ, तत्र च सकलां तापसक्रियां यथोक्तां प्रपालयन्नास्ते ।

अन्यदा चामावास्यायाः प्राग्दिन एकेन तापसेनोद्घोषितं यथा—"भो भोः तापसाः श्वोऽनाकुट्टिर्भविता, तदद्यैव कुसुमसमित्कंदमूलफलाद्याहरणं युक्तं, एतच्च श्रुत्वा धर्मरुचिना जनकः पृष्टः—"तात ! केयमनाकुट्टिर्नाम ?" तेनोक्तं—"पुत्र लतादीनामुच्छेदनं तद्ध्यमावास्यादिके विशिष्टे पर्वदिने न वर्त्तते सावद्यत्वाच्छेदनादिक्रियायाः । श्रुत्वा चैतदसावचिंतयत्—"वनस्पतेः सात्मकत्वं स्फुटमेवं प्रतीयते, जन्यादिधर्मोपेतत्वान्मनुष्यादिशरीरवत् ॥ १ ॥

यदि पुनः सर्वथाऽनाकुट्टिः स्याद्भोजनं भवेत्" । एवं ध्यायिनस्तस्याममावास्यायां तपोवनासन्नपथेन गच्छतां साधूनां दर्शनमभूत्, तेन ते पृष्टाः—"किमद्य भवतामनाकुट्टिर्न जाता ? येनाटवीं प्रस्थिताः" । तैरभिहितं—"यथास्माकं तु यावज्जीवमनाकुट्टिः," इत्यभिधायातिक्रांताः साधवः, तस्य च तदाकर्ण्योहापोहसविमर्शेन जातिस्मृतिर्जाता—"यथाहं जन्मांतरे प्रव्रज्यां कृत्वा देवलोकसुखमनुभूयेहागतः पूर्वं मया सर्ववनस्पतिजीवानामभयं दत्तमत्र तेषां हननं न योग्यं," इति ध्यात्वा प्रत्येकबुद्धोऽभवत्, अन्यतापसानां कंदादिभक्षकाणां प्रत्याख्यानमकारयत्" ।

'मेषोष्ट्रहस्त्यादिभवेषु भक्षणं, वह्न्यादिकानां बहुधा विधायितम् ।
आद्धत्वमृत्वाथ विधेहि रक्षणं, तासां यथा धर्मरुचिर्मुनींद्रवत् ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रंथस्य वृत्तावेकविंशोत्तरशततमं व्याख्यानम् ॥ १२१ ॥

## ॥ अथ द्वाविंशोत्तरशततमं व्याख्यानम् ॥ १२२ ॥

तत्र भोगोपभोगव्रते विंशतिरतिचारास्तेषु पूर्वं भोगतः पंचातिचारानाह—

सचित्तस्तेन संबन्धः, संमिश्रोऽभिषवस्तथा । दुष्पक्काहार इत्येते, भोगोपभोगमानगाः ॥ १ ॥

सचित्तस्तु कंदादिस्तं च कृतनियमवतोऽनाभोगादिना खादतः सचित्तातिचारः प्रथमः । धान्यानां सचित्तत्वमियत्कालं यावत्, तत्परं बीजं निर्बीजमुप्तमंकुरितं न भवेत् । यतः—

जवगोहुमसालीओ, वरसतिगं पंचवरस तिलविदले । अयसी कुसुंभ कुदव, पभिईणं सत्तवरिसाणं ॥ १ ॥

जघन्यतस्त्वंतर्मुहूर्त्तादूर्ध्वं योनिध्वंसस्तथा सेटुकं कर्पासस्त्रिवर्षातीतो निर्बीजं इत्यादि सचित्तविचारं सूत्रतो ज्ञात्वा त्याज्योऽतिचारः १ । तेन सचित्तेन संबंधः प्रतिबद्धो, वृक्षादिना संबंधः, तत्कालगृहीतगुंदादी, राजादनादिर्वा खर्जूरालुखारिकादिर्वा सचित्तांतर्बीजं पक्कफलं कटाहमेव भक्षयिष्यामि पक्कं तेन प्रासुकत्वाद्, बीजं पुनरप्रासुकत्वात्त्यक्ष्यामीति बुद्ध्या मुखे प्रक्षिपतः सचित्तप्रतिबद्धाहारः (२) । तथा

सचित्तेन मिश्रः शबलाहारः स मिश्राहारः, तिलमिश्रो यवधानादिर्वा, अथवा संभवत्सचित्तावयवस्यापक्वमग्निनाऽसंस्कृत्य, कणिक्कादेः पिष्टत्वादिनाऽचेतनबुद्ध्याहारः । चालितपिष्टमंतर्मुहूर्त्तात्परमचित्तमचालितं मिश्रं धान्यनखिकावयवानां परिणतत्वसंभवात् । मिश्रकालमानं च पूर्वमुक्तं, अत्रानाभोगादिनातिचारः ३ । अभिषवोऽनेकद्रव्यसंधाननिष्पन्नः, सुरासौवीरकादिर्मांसप्रकारखंडादिर्वा सुरामध्वाद्यभिस्यंदिद्रव्योपयोगो वा । अयमपि सावद्याहारवर्जकस्यानाभोगः ४ । तथा दुष्पक्वो मंदपक्वः स चासावाहारश्च दुष्पक्वाहारः स चार्द्धस्विन्नपृथुकचणकयवगोधूमस्थूलमंडकतंदुलफलादेः । दुःपक्वतया संभवेत्सचेतनावयवत्वात्पक्वत्वेनाचेतन इति भुंजानस्यातिचारः पंचमः ५ । तथा श्राद्धप्रतिक्रमणसूत्रे—'अप्पोल दुप्पोल तुच्छोसहि' अपक्वतुच्छौषध्याहारः सचित्तांतर्ज्ञेयः । एते पंचातिचारा भोगोपभोगपरिमाणगता बोद्धव्या । इमे भोजनमाश्रित्य हेयाः । अत्रार्थे धर्मनृपस्योदाहरणं तच्चेदं—

"कमलपुरे कमलसेननृपस्य पुरोऽन्यदा नैमित्तिको द्वादशवार्षिकं दुर्भिक्षभावमकथयत् । इति श्रुत्वा लोके राज्ञि च चिंतातुर एव नित्यं तिष्ठति सत्याषाढमेघोऽतीव वृष्टस्तेन सर्वे हृष्टाः । काव्यम्—

"तावन्नीतिपरा धराधिपतयस्तावत्प्रजाः सुस्थितास्तावन्मित्रकलत्रपुत्रपितरस्तावन्मुनीनां तपः ।
तावन्नीतिसुरीतिकीर्त्तिविमलास्तावच्च देवार्चनं यावत्स प्रतिवत्सरं जलधरः क्षोणीतले वर्षति" ॥ १ ॥

सर्वे नैमित्तिकमुपहसंति स्म । अन्यदा चतुर्ज्ञानी युगंधरगुरुरागमत् । राजादयस्तं वंदित्वा नैमित्तिकोक्तं कथं विघटितमित्यप्राक्षुः । ( गुरुराह ) "राजन् ! शृणु—पुरिमतालनगरे कोऽपि प्रवरदेवनामा

भिन्नकुलस्सदाप्यविरतत्वेन सर्वभक्ष्यजीर्णत्वेन कुष्ठभ्भूत् । लोकैर्धिक्कृतो मुनीन् दृष्ट्वाऽवक्—"कथं मे कुष्ठरोगः ? कथं चोपशाम्यत्येषः ?" तेऽभ्यधुः—"भद्र ! अविरतो ह्यात्माऽसंतोषतो यत्र तत्र यत्तद्यदा तदा खादति, ततोऽजीर्णप्राबल्येन कुष्ठादिरोगोद्भवः । यदि च विरतो भूत्वा चतुर्विधाहारतः परिमाणे ( मितं ) भोजनं कुरुषे तदा रोगक्षयश्च स्यात् । तत एकमन्नमेका विकृतिरेकं शाकमेकं च प्रासुकनीरमिति परिमितभोजी बभूव । क्रमेण नीरोगतां गतः सः । ततोऽवगतधर्ममाहात्म्यो निष्पापवृत्त्या व्यवहरन् क्रमतः प्राप कोटीमितं धनं । स्वयं भोगोपभोगपराङ्मुखो नियमिताहारभोजी पात्रादीनां दानपरोऽजनि ।

एकदा दुर्भिक्षसमये प्रत्यलाभयत् प्रासुकघृतादिभिर्लक्षमितान्महर्षीन् प्रछन्नदानादिनोदभ्रे च लक्षशः साधर्मिकान् । एवं यावज्जीवमखंडितव्रतो मृत्वाऽसौ सौधर्मे शक्रसामानिकोऽभूत् । स सुरः स्वर्गचैत्यान्नमस्कुर्वंश्च्यवनासन्नक्षण इति दध्यौ—

"सावयकुलंमि वर हुज्ज, चेरुओ नाणदंसणस्सिओ । मिच्छत्तमोहिअमई, म सक्को (राया) चक्कवट्टीवि ॥१॥

इत्यादि विभावयंस्ततश्च्युतोऽत्रैव पुरे शुद्धबोधश्राद्धगृहे विमलापत्न्युदरेऽवतीर्णस्तज्जन्मना दुर्भिक्षं ग्रहचारादियोगेनोत्पन्नमपि प्रणष्टं—"इति गुरुवचः श्रुत्वा विस्मितमना राजा राजन्यादिपरिवृतः शुद्धबोधश्रेष्ठिगृहे गतः । पुत्रं सर्वलक्षणं प्रेक्ष्योत्संगे कृत्वोवाच—

"मूर्त्तिमानिव धर्मस्त्व-मिष्टं दुर्भिक्षभंगभृत् । इति तस्याभिधा धर्म, इति धात्रीभृता कृता" ॥ १ ।

अहं तव तलारक्षोस्मीति, त्वं तु 'धर्मनृप' इति नाम दत्त्वा नृपो गृहे गतः । यौवने बह्वी राजकन्याः

परिणिनाय सः, तत्पुण्यात्प्रजास्वतीवदुर्भिक्षादिनामाप्यनेशत्, सदाप्रमोदावैतं चाभूत् । सम्यक्त्वद्वादशव्रताराधकः स भुक्तभोगः क्रमादीक्षामादाय तद्भव एवाप्तकेवलः प्राप मुक्तिमिति—

इति निशम्य धर्मस्य भवद्वयनिदर्शनम् । जैनधर्मरतैः श्राद्धैर्ग्राह्यं हि सप्तमं व्रतम् ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थस्य वृत्तौ नवमे स्तंभे द्वाविंशोत्तरशततमं व्याख्यानम् ॥ १२२ ॥

## ॥ अथ त्रयोविंशत्युत्तरशततमं व्याख्यानम् ॥ १२३ ॥

अथ कर्म्मादाने पंचदशातिचारानाह—

अंगारवन शकट—भाटकस्फोटजीविका । दंतलाक्षारसकेश—विषवाणिज्यकानि च ॥ १ ॥
यंत्रपीडा निर्लांछन—मसतीपोषणं तथा । दवदानं सरःशोष, इति पंचदश त्यजेत् ॥ २ ॥

जीविकाशब्दः प्रत्येकं संवध्यते, अङ्गारकर्म काष्ठदाहेन नव्याङ्गारकरणं । चूर्णकेष्टिकाभ्राष्ट्रिकुंभकारायस्कारकलादभाडभुञ्जादिकृतं वाङ्गारकर्म तेन यज्जीवनं तदङ्गारजीविका, अनयाऽग्नेर्दशधा खड्गत्वात् सर्वजगद्दाहकशक्तित्वात् षण्णां जीवनिकायानां वधः स्यात्, अत एतद्व्यवसायो गृहिभिस्त्याज्यः १ । छिन्नाछिन्नवनपत्रपुष्पफलकंदमूलतृणकाष्ठवंशादिविक्रयणं आरामवनकव्यादिकरणं तद्वनकर्म, अनेन वृक्षाद्याश्रित्य त्रसादीनां वधः स्यात् । २ ॥ शकटशकटावयवकरणखेटनविक्रयादि, शकटेन मार्गस्थषड्जी-

वानां वधः स्यात् । ३ ॥ भाटकेन करभवृषभमहिषवेसरतुरंगादेर्भाटकग्रहणेन भारवाहनं भाटककर्म, तेन भारवाहकानां बहुदुःखं स्यात् । ४ ॥ यवगोधूममुद्गमाषचणककरदेफासक्तुदालितंदुलकरणादि तदा-कवापीकूपाद्यर्थभूखननहलखेटनपाषाणघट्टनादि च स्फोटककर्म ( तेन जीविका स्फोट ) जीविका, अनया कणदलनादौ वनस्पतेर्भूखननादौ पृथिव्यास्तद्गतत्रसादेश्च वधः स्यात् । ५ ॥

अथ पञ्चवाणिज्ये दन्तवाणिज्यं, तत्राकरे गत्वा दन्तिदन्तहंसादिरोमचर्मचमरीचमरसाबरादिशृङ्गशङ्ख-शुक्तिकपर्दिकाकस्तूरिकादि त्रसाङ्गग्रहणं दन्तवाणिज्यं, आकरे व्यापारिणो वीक्ष्य लोभात्पुलि-न्दादयो झटिति हस्त्यादिवधं कुर्वन्त्यतस्त्याज्यम् । ६ ॥ लाक्षावाणिज्ये लाक्षाया बहुत्रसाकुलत्वात्तद्रसस्य च रुधिरभ्रमकारित्वाद्, धातकित्वक्पुष्पयोर्मद्याङ्गत्वात्, तत्कल्कस्य कृमिहेतुत्वाद्, गलिकाऽनेकजीव-घातजातत्वात्, मनःशिलाहरितालेे जलामक्षिकादिहिंसा स्यात् । पटवासस्य त्रसाकुलत्वात्, टंकणसा-बुक्षारादेः प्रत्यक्षं महादोषः, लाक्षादेर्दुष्टत्वं मनुस्मृतावप्युक्तम्—

"लाक्षानीलितिलक्षार–कुसुंभक्षीरसर्पिषाम् । विक्रेता दधितक्रस्य, विप्रः शूद्र इवोच्यते ॥ १ ॥"

मधुमद्यमांसनवनीतदुग्धदधिघृततैलादिविक्रयो रसवाणिज्यं, तत्र दोषाः प्रागुक्तयुक्त्या ज्ञेयाः । दुग्धे संपातिमजीववधः, दिनद्वयातीते दधितक्रे महान्दोषः, तथा तक्रं च षोडशप्रहरमध्येऽपि गलित्वा पेयं, यतः—

"अगलियतक्केणयगह–णेणय तत्थ हुंति बहुदोसा । सम्मं मरकेण जोगे, तो तस्स जीवउप्पत्ति ॥ १ ॥"

तथा घृततैलेऽप्यपध्यानेन महापापं स्यात् । कदाचिदन्यवाणिज्याभाव आजीविकार्थं करोति तदाऽशुभध्यानं त्याज्यं, यतः—

"अभिप्रायवशात्पाप—ध्यानं नो वस्तुदर्शनात् । वाच्यात्र विदुषां मुख्यै—र्घृतचर्मवणिक्कथा ॥ १ ॥"

एकत्र पुरवासिनौ द्वौ वणिजावाषाढमासे स्वस्वव्यापारार्थं ग्रामान्तरं गतौ । तत्र श्राविकागृहे जेमनाय स्थितौ, तदा तया पृष्टौ—"युवां किं व्यापारविधायिनौ ?" तावूचतुः—"हे मातः ! आवयोर्मध्य एको घृतव्यापारी द्वितीयश्च चर्मव्यवसायी" इति श्रुत्वा सा दध्यौ—"नूनं घृतव्यवसायकस्य परिणामः शुभः, यथा मेघा वर्षंति, तदा गावो महिष्यः प्रभूतदुग्धदाः स्युर्घृतानि समर्घाणि भवंतीति । यो हि चर्मव्यापारी स पापवान्, यतः—घनाघना न वर्षंति तदा पशवो म्रियंते, तदा चर्माणि भूयांसि स्युरिति ध्यानं न श्रेयः," इति मत्वा साऽऽदिवणिजं गृहे चंद्रोदयाधस्तादमंडयत्, द्वितीयं गृहाद्बहिराकाशे च । अथ तौ प्रगे स्वसमीहितार्थं गत्वा निजं व्यापारं च कृत्वा पुनस्तदुपासिकागृहे प्राप्तौ, परं भुक्तेरवसरे व्यत्ययेन निवेशितौ, तदनु पृथक् पृथक् तां पृच्छतः स—"हे मातः ! प्रथमं त्वया योग्यं कृतं, यद्घृतव्यापार्यग्रेकृतः श्रेयस्तरत्वात्, अधुना तु व्यत्ययः कथं कृतः ?" अथान्यः प्राह—"मातः ! अधुना धर्मव्यापारी गृहे भोजनाय स्थापितोऽन्यो बहिरिति वैपरीत्यस्य को हेतुः ?" । ( साऽब्रवीत् ) "हे पुत्रौ ! शृणुतं—घृतवणिजो हि स्वांतवृत्तिरिदानीमशुभा, यतोऽयं घृतं महार्घमीहते, घृतमहार्घता हि पशूनामुपद्रवेणैव स्यात्, तन्मेघतृणाद्यभावेन स्यात् । चर्मवणिजो मनोवृत्तिः श्रेयसी, यतोऽयमधुना चर्माणि

महार्घाणि समीहते, चमर्या महार्घता हि पशूनामारोग्येणैव स्यात्, हे भद्रौ ! तेनैषा युवयोः प्रतिपत्तिविपरीतता, यतोऽहं श्राविका गुणिनो विना आसनं न दास्ये, तेनेत्थं कृतं" । इति श्रुत्वा प्रतिबुद्धौ पापव्यापारं त्यक्त्वा शुद्धे प्रवृत्तौ । इति श्रुत्वा गृहस्थै रसवाणिज्यं त्याज्यमिति संटङ्कः । ८ ॥ दासादिनृणां गवादितिरश्चां च विक्रयः केशवाणिज्यं । ९ ॥ विषवाणिज्यं कुशीकुद्दाललोहहलादिविक्रयः, आदिशब्दाद्वत्सनागसोमिलादेर्विषस्य ग्रहणं, शस्त्रं विषं च जीवघ्नं प्रत्यक्षं दृश्यते । परेऽपि विषादिवाणिज्यं निषेधयन्ति, यतः—

"कन्याविक्रयिणश्चैव, रसविक्रयिणस्तथा । विषविक्रयिणश्चैते, नरा निरयगामिनः ॥ १ ॥"

इति । १० ॥ प्रथमश्लोकार्थः ।

अंगारकर्मप्रमुखाणि पंच, कर्माणि दन्तादिकविक्रयाणि ।
विहाय शुद्धव्यवसायकश्च, गृही प्रशस्यो जिनशासनेऽस्मिन् ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थस्य वृत्तौ त्रयोविंशत्युत्तरशततमं व्याख्यानम् ॥ १२३ ॥

## ॥ अथ चतुर्विंशत्युत्तरशततमं व्याख्यानम् ॥ १२४ ॥

अथ द्वितीयश्लोकार्थमाह—

यंत्रपीडेति—शिलोदूखलमूशलघरट्टारघट्टनिशातरकङ्कपत्रिकादिविक्रयः,तिलेक्षुसर्षपालसीफलैरण्डफ-
लादिपीडनेन तैलगुडविधानं जलयन्त्रवाहनादिर्वा यन्त्रपीडा, तस्याः कर्मण्यनेकत्रसवधोऽपि तत एवोक्तं-
"खण्डनी पेषणी चूल्ली, जलकुम्भः प्रमार्जनी । पञ्च शूना गृहस्थस्य, बध्यते यास्तु वाहयन्" ॥ १ ॥
तिलयंत्रादेश्च महापापहेतुत्वं शिवपुराणे—
"तिलयन्त्रं तु कुर्वंति, तिलसंख्या नराधिप । तावद्वर्षसहस्राणि, रौरवे परिपच्यते" ॥ १ ॥
"तिलखलघुता तेषां, तिलवत्क्षुद्रता पुनः । तिलवच्च निपीड्यन्ते, ये तिलव्यवसायिनः" ॥ २ ॥
तत्र फाल्गुनमासानन्तरं तु तिलपीलनतिलभक्षणतिलव्यवसायस्य महादोषस्त्रसजीवोत्पत्तिसंभ-
वात् यतः—
"स्थापयेत्फाल्गुनादूर्ध्वं, न तिलान्नालसीमपि । गुडदुप्परकादीनि, जन्तुघ्नानि घनागमे" ॥ १ ॥
तन्मासोपरि न रक्षणीयास्तिलव्यवसायोऽनेन ज्ञातेन दुःखदो मान्यः । तथाहि—
"पृथ्वीपुरे गोविंदविप्रः, तिलव्यवसायेन तिलभट्ट इति नाम प्रसिद्धं । तस्य प्रिया स्वैरिणी तिलव-
क्षारेभ्यः पंचमूढकतिलान् प्रछन्नं विक्रीय स्वेप्सिताशनवसनभूषणानि व्यसनानि च सेवते । एकदा सा
दध्यौ—"यदि मद्भर्त्ता तिलविक्रयित्वं ज्ञास्यति तदा मां विडम्बयिष्यति, अतः पूर्वं कश्चिदुपायं कुर्वे ।
ततो रात्रौ शालिक्षेत्ररक्षणाय क्षेत्रे तद्भर्त्तरि गते सा पुरो वहिरेत्य पिशाचरूपमकरोत् । तत्र मुनिपतिराज-
र्षिर्द्वादशप्रतिमावही वने हेमन्तमासे कायोत्सर्गेण स्थितोऽस्ति । पूर्वं संध्यायां पुरमध्यं गच्छन्तो गोपास्तं

मुनिं दृष्ट्वा शीतत्वत्यागार्थं स्वस्ववस्त्राणि मुनिदेहे परिधाप्य गृहं जग्मुः । ततस्तत्पुरस्तात्तया मुखं कज्जलवर्णीकृतं, कृष्णवस्त्राणि ( परिधाय ) करे निस्त्रिंशखड्गं कृत्वा, शिरसि ज्वलंतीं सगडिकां संस्थाप्य, भयानकशब्दं कुर्वत्येत्य तिलभट्टं प्राह—"भो अहं क्षुत्क्षामा त्वां भक्षयिष्यामि, जीवनेच्छुश्चेत्तदा तिलवखारांस्त्वत्सत्कान् देहि"। भयविह्वलः स पादौ प्रणम्य प्राह—"हे मातः ! गच्छ सर्वांस्तिलान् भक्षय"। सेदं चरित्रं कृत्वा पुनर्यत्र मुनिस्तत्रैत्याऽचिंतयत्—"अहो ! मच्चेष्टितमनेन मुनिना दृष्टं, प्रत्यूषे लोकस्य पुरोऽयं कथयिष्यति, अतो ज्वलदग्निनैनं दहामि" इति ध्यात्वा मुनिदेहस्थवस्त्राणि प्रज्वाल्य गृहं गता, कृत्रिमवेषमत्यजत्, मुनिस्तु प्रबलायुषा जीवितः, शुभध्यानं नामुंचत्—"अहो ! जडदेहपुद्गला दहन्ति दूरस्थं परगृहं ज्वलदवेक्ष्य मूढ एव नरः शोकं धत्ते । अहो चेतन ! तव गृहं तु ज्ञानादिगुणरूपं तद्यत्नेन साम्यजलेन सिंचय, यथा क्रोधाग्निरूपज्वाला न समेति" इत्यादिध्यानपरस्य मुनेर्मुखावलोकनाय सूर्य उद्गतः । प्रगे तद्गोपैर्मुनिं वीक्ष्य तादृगवस्था तन्नगरश्रेष्ठिनं कुचि(ञ्चि)कं प्रति निवेदिता, कुञ्चिकेनाचङ्कारिश्रावकगृहस्थशतसहस्र ( पाक ) तैलेन मुनिदेहः सज्जीकृतः ।

अथ स तिलभट्टो रात्रावेव गृहमेत्य सुप्तो ज्वरेण परवशो दध्यौ—"अहो मे तिलवखारकास्सर्वे गताः" इति हृदयस्फोटेन मृतः, बहुभवांस्तिलेष्वेवोत्पन्नः । प्रायेणैवं भाव्यते यो ह्यत्र भवे घांचिकस्तिलान् यंत्रेण पीडयति पुनस्ते तिलजीवा अपि तिलपीलकं प्रति पीडयिष्यतीति विचार्य श्रावकैस्तिलादियंत्रपीडनव्यापारस्त्याज्यः । इति संटङ्कः । ११ ॥ गवादिकर्णकम्बलशृङ्गपुच्छछेदननासावेधाङ्कनषण्ढनत्व-

दाहादि, उष्ट्रपृष्ठगालनादि च निर्लांछनकर्म तत्र च गवाश्वोष्ट्रादीनां कदर्थना स्यादिति ॥ १२ ॥ अरण्यैकांशादिदाहे सति वनेचराः सुखेन चरंति, जीर्णतृणदाहे नवतृणाङ्कुरोद्गमे गवादयश्चरन्ति, यद्वा वृष्टेः पूर्वं क्षेत्रे दग्धे बहुधान्यप्राप्तिः स्यादिति, तथा पुण्यबुद्ध्यापि भिल्लादयो भणन्ति यथा—"इयन्तो मम श्रेयोऽर्थं धर्मदीपोत्सवाः कार्या" इति श्रूयते। यथा केचित्कौतुकेन दवदानं कुर्वन्ति, तापनिका हुताशनी पुण्यायेत्यादि, दवदाने जीवकोटिवधः, यतः पञ्चमाङ्गे गणीशैर्जिनेन्द्रः पृष्टं—"स्वामिन्! योऽग्निं बृंहयति तस्य बहु पापं किंवा जलधूल्यादिनाग्निं विध्वंसयति तस्य?" प्रभुरुवाच—"गौतम! आद्यः क्लिष्टकर्मबंधकः, अन्यस्त्वक्लिष्टतरो ज्ञेय इति ॥ १३ ॥ सरोवरादिशोषे जलचरमत्स्यादीनां षण्णामपि जीवनिकायानां विनाशः ॥ १४ ॥ वित्तार्थं तु दुःशीलदासीरक्षणं शुकसारिकामयूरमार्जारकुर्कुटमर्कटश्वानगर्ताशूकरादीनां पोषोऽसतीपोषः, इमे जीवाः शुभान्नपानपोषणेन पुष्टा जाता मूषकशशकादिजीवाहिंसाकरणेनात्मीयसौख्यकरा भवंतीति बुद्ध्या पोषो न कार्यः, तत्पोषे पापवृद्धिरिति, अभयदानं तु देयं ॥१५॥ इति पञ्चदश कर्मादानातिचारांस्त्यजेत्। भगवत्यंगे तु श्राद्धानां पञ्चदशकर्मादाननिषेधः सर्वथा प्रोक्तस्तदौत्सर्गिको ज्ञेयः, यतः—

"धर्मबाधाकरं यच्च, यच्च स्यादयशस्करम्। भूरिलाभमपि ग्राह्यं, पण्यं पुण्यार्थिभिर्न तत्" ॥ १ ॥

कदाचिदन्यव्यापाराभावे दुर्भिक्षादौ वा नृपाज्ञादिनाऽशक्यपरित्यागेऽपवादपदे सेवते, तदा स्वं

निन्दन्सशूकतयैव करोति । सिद्धराजकृतसौराष्ट्रदेशस्वामिसज्जनदण्डनायकवत् यस्तद्देशोत्पन्नं द्रव्यं रैवते पुण्यात्मकमकरोत् । इति द्वितीयश्लोकार्थः । इत्यनन्तरोक्ताश्च । इन्द्रवज्रा—

पञ्चातिचाराः परिभोगतः स्युर्धत्रप्रमाणाश्च सकर्मजोक्त्या ।
तेषां स्वरूपं ह्यवधार्य सुज्ञैरेतद्व्रतं सप्तममाचरेयम् ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थस्य वृत्तौ नवमस्तंभे चतुर्विंशत्युत्तरशततमं व्याख्यानम् ॥ १२४ ॥

---

## ॥ अथ पंचविंशत्युत्तरशततमं व्याख्यानम् ॥ १२५ ॥

अथानन्तरं पापव्यवसायनिषेधः प्रोक्तस्तर्हि केन प्रकारेण द्रव्यवृद्धिः कार्येत्याह—

हित्वा च खरकर्माणि, न्यायवृत्तिममुञ्चकः । शुद्धेन व्यवसायेन, द्रव्यवृद्धिं सृजेद् गृही ॥ १ ॥

खरकर्माणि निर्दयजनोचितानि कोट्टपालगुप्तिपालसीमपालादीन्यत्यन्तपापव्यवसायत्वात् त्यक्त्वा न्यायवृत्तिर्विशिष्टजनानिन्दिता, तामपरित्यजन्, यतः परमार्थतोऽर्थोपार्जनहेतुर्न्यायवृत्तिरेव । उक्तं च—

"सुधीरर्थार्जने यत्नं, कुर्यान्न्यायपरायणः । न्याय एवानपायोऽय—मुपायः संपदां यतः" ॥ १ ॥

तथोपलक्षणादन्यायवृत्तिस्तु देवज्ञानपाखण्डिपार्श्वस्थादिधनेन वा देशकालजात्याद्यनौचित्यकरणेन वा देवादिद्रव्यस्य व्याजेन ग्रहणाद्यपि महादोषकृत् । यदुक्तं लोकशास्त्रेऽपि—

"देवद्रव्येण या वृद्धि–र्गुरुद्रव्येण यद्धनम् । तद्धनं कुलनाशाय, मृतोऽपि नरकं व्रजेत्" ॥ १ ॥

अत्र भारतोक्तज्ञातं—

"पुरा श्रीरामराज्ये एकदा राजमार्गस्थितः कश्चित्कुर्कुरः एकेन द्विजेन कर्णे कर्करेण हतः, ततो रुष्टः श्वा द्विजस्य वस्त्राञ्चलं दृढं गृहीत्वा प्राह—"कथं निरागा अहं त्वया हतः ?" तत्र बहुजनाः कौतुकेन मिलिता न्यायार्थं राजसभायां तौ प्रति निन्युः । राजा शुनो मुखाद्विप्रं दण्डार्हं मत्वा पप्रच्छ—"त्वद्घातकाय को दण्डो विधीयते ?" श्वावोचत्—"रुद्रस्य मठाधिपत्ये नियोज्यतां" "कथमीदृशो दण्डः ?" राज्ञेति पृष्टः श्वा पुनर्जगौ—"प्रागहं सप्तमे भवे सदाशिवं प्रपूज्य देवस्वभीत्या प्रक्षाल्य करौ भोजनमाचरं । अन्यदा दुग्धदधिघृतेन पर्वणि लिंगं पूजितं लोकैः, तदुत्सारणे आज्यं कठिनं मम नखांतः प्रविष्टं, भोजन क्षणे तद्विलीनमजानता मया भुक्तं, तेन दुष्कर्मणा सप्तकृत्वो मंडलो जातोऽस्मि । अत्र भवेऽहं जातिस्मृत्या त्वत्प्रभावेण च मानुषवाग्जातोऽस्मि" । ततः स द्विजोऽपि तं प्रसन्नीकृत्यान्यदण्डं ययाचे इति ।

एवमजानता भुक्तं, देवस्वं दुःखकारणम् । रक्षणीयमतस्तद्धि, विवेकज्ञैः स्वशक्तितः ॥ १ ॥

इत्यादि श्रुत्वाऽनेकधाऽन्यायवृत्तिं परिमुच्य कुत्रापि न्यायो न मोच्यः, यशोवर्मनृपवत्—

कल्याणकटकपुरे यशोवर्मा नृपो न्यायैकनिष्ठः, तेन निजगृहद्वारे न्यायघण्टा बन्धिता । एकदा राज्याधिष्ठात्री देवी नृपतिन्यायवृत्तेः परीक्षार्थं धेनुरूपं तत्कालजं च वत्सरूपं कृत्वा राजमार्गे स्थिता । अत्रांतरे

नृपपुत्रो वेगवत्तरवाहिनीमारूढस्तत्र प्राप्तो, वेगवशाच्च वाहिनी वत्सचरणयोरुपरि गता, वत्से मृते धेनुः कोकुष्यतेऽश्रूणि च मोमुच्यते, केनाप्युक्तं—"राजद्वारे न्यायं याचस्व" सा गता, तया शृङ्गाग्रेण घण्टा चालिता। नृपस्तदानीं भोक्तुमुपविष्टः शब्दं श्रुत्वा बभाषे—"रे कोऽयं घण्टां चालयति?" सेवकैर्विलोक्योक्तं—'देव! केनापि न, भुज्यतां' नृपः प्राह—'निर्णयं विना कथं भुञ्जे?' । नृपः स्थालं त्यक्त्वा प्रतोल्यामागत्यान्यं कमप्यवीक्ष्य धेनुं प्राह—"किं केनापि पराभूतासि? दर्शय मम तं"। साऽग्रे भूता, नृपः पृष्ठे लग्नः, तया वत्सो दर्शितः। नृपेणोक्तं—"येनेयं वाहिनी वाहिता, स पुरो भवतु"। कोऽपि किमपि न वक्ति, राज्ञोक्तं—'तदा भोक्ष्ये यदा स्फुटं भावि'। राज्ञो लंघने जाते कुमारेण प्रातरुक्तं—'देवाहमपराधी, मम दण्डं कुरु यथार्हं'। राज्ञा स्मृतिज्ञाः पृष्टाः—"कोऽस्य दण्डः?' तैरुक्तं—'देव! राज्यार्ह एक एव पुत्रस्तस्य को दण्डः?' नृपः प्राह—"कस्य राज्यं कस्य वा सुतः? मम न्याय एव गरीयान्, यतः सोमनीतौ—'अपराधानुरूपोहि दण्डः पुत्रेऽपि प्रणेतव्य इति' ततो यदस्य योग्यं स्यात्तत्कथयत" इत्युक्तेऽपि तेष्वेकोऽवदत्—'योऽन्यस्य यां व्यथां कुरुते तस्य तथा विधीयते, कृते प्रतिकृतं कुर्यादिति वचनात्' इति स्वयं नृपेण वाहिनीमानाय्य पुत्रस्योक्तं—"इह स्वपिहि"। सोऽपि विनीतस्सुप्तः। राज्ञोक्तं—'अस्योपरि वेगेन वाहिनीं वाहयत' कोऽपि न वाहयति, ततो नृपः सर्वैर्निवार्यमाणोऽपि यावत्स्वयमुपविश्य पुत्रचरणयोरुपरि वाहयति, तावद्देवी प्रकटीभूय पुष्पवृष्टिं चक्रे, न गौर्न वत्सः, देव्योक्तम्—'राजन्! मया तव परीक्षा कृता, प्राणप्रियैकपुत्रादपि तव न्यायो वल्लभः इति राज्यं निर्विघ्नं कुरु'। इति

न्यायदृष्टान्तो मनस्यवधार्यः । सर्वत्र न्यायवृत्तिममुंचको गृहस्थ उपासकः शुद्धेन व्यवसायेन द्रव्यवृद्धिं सृजेत् । शुद्धव्यापारश्चतुर्द्धा, यतः—

उजुववहारो चउहा, जहत्थजणणं १ अवंचगा किरिया २ ।
हुंतावायपगासणं ३ मित्तिजावो य सज्ञावो ४' ॥ १ ॥

ऋजुव्यवहारश्चतुर्द्धा—'यथार्थजणनं यतः—

"परवंचणबुद्धीए, धम्ममधम्मं व जाणिऊण सया ।
न जणंति जावसड्ढा जणंति सच्चं च महुरं च" ॥ १ ॥

तत्र धर्मपीडाकरं कदाचिदपि न ब्रूते कमलश्रेष्ठ्यादिवत् ॥ १ ॥ तथाऽवञ्चिका क्रिया परव्यसनहेतुका मनोवाक्कायव्यापाररूपा चेष्टा, यतः—

"तप्पडिरूवगविहिणा, तुलापलाईहिं जणमङ्गहियं । लिंतोदिंतोपि परं, न वंचए सुद्धधम्मत्थी" ॥ १ ॥

इति । २ । हुंता०—अशुद्धव्यवहारकृतौ ये जाविनोऽपाया अनर्था राजदण्डनरकपातादयस्तेषां प्रकाशनं स्वस्यावधारणं चेति ३ । मित्ति०—मित्रस्य जावः कर्म वा मैत्री, तस्या जावो-जवनं निष्कपटतया सुमित्रवत् । न तु दम्जेन जनं वञ्चयति, एवं हि गोमुखव्याघ्रवृत्त्या व्यवहरन्सर्वेषामविश्वासस्थानं पापजाक् च जवेदिति ४ ज्ञात्वा शुद्धवृत्त्या द्रव्यवृद्धिं करोतीत्यर्थः । गृहस्थानां द्रव्यादेव कार्यसिद्धिः, अतो धर्माद्यविरुद्धव्यवसायेन विज्ञववृद्धिर्विधेयेति समस्तजावार्थः ।

'देशजातिकुलधर्महृत्कुधीमुंचनाद्भवति नीतितत्परः ।
तेन यान्ति सदुपासकाः शुभां सम्पदं च वणिजां विशुद्धताम्" ॥ १ ॥
॥ इत्यब्ददिनपरिमितहितोपदेशसङ्ग्रहाख्यायामुपदेशप्रासादग्रन्थस्य वृत्तौ नवमस्तंभे
पञ्चविंशत्युत्तरशततमं व्याख्यानम् ॥ १२५ ॥

## ॥ षड्विंशत्युत्तरशततमं व्याख्यानम् ॥ १२६ ॥

अथ शुद्धव्यवसायो यथा भवति तदाह—
निन्दायोग्यजनैः सार्द्धं, कुर्यान्न क्रयविक्रयौ । द्रव्यं कस्यापि नो देयं साक्षिणं भूषणं विना ॥ १ ॥
निन्दायोग्यजना नटधूर्त्तपण्याङ्गनाकौनि (लि) [1]कशौनिकमात्सिकवागुरिकराजद्रोहकदेवार्चकादिजनाः, तैः सार्द्धं क्रयविक्रयौ न कुर्याद् गृहीति शेषः । तथा क्षत्रियव्यापारिनृपाद्यैः सह व्यवहारः स्वल्पोऽपि न प्रायो गुणाय, स्वहस्तदत्तवित्तयाचनेऽपि येभ्यो भीतिस्तैः सह शुभफलं कथं । यतः—
"व्यापारिभिश्च विप्रैश्च, सायुधैश्च वणिग्वरः । श्रियमिच्छन्न कुर्वीत, व्यवहारं कदाचन" ॥ १ ॥
"यो द्यूतधातुवादादि–सम्बन्धाद्धनमीहते । स मषीकूर्चकैर्धाम धवलीकर्त्तुमिच्छति" ॥ २ ॥
कदाचित्तैः सार्द्धं प्राप्तो लाभो, बहुकालं न तिष्ठेत् स लाभो, यतः—

[1] कलाल.

"धनं यच्चार्ज्यते किंचित्, कूटमानतुलादिभिः । नश्येत नैव दृश्येत, तप्तपात्रेऽम्बुबिंदुवत् ॥ १ ॥"

इति । तथा द्रव्यं साक्षिणं बहुजनसाक्ष्यं विना नो देयं न दातव्यं कस्यापि, तथाऽदृष्टमपरीक्षितं पण्यं न ग्राह्यं तदपि समुदायैरेव ग्राह्यं, कष्टे साहाय्यकादिभावात् । साक्षीकृत्य दत्तं तद्वस्तु कालांतरेऽपि प्राप्यते । यथा—

बहुवित्तवता वणिजा धूर्त्तेन विदेशेऽरण्यस्थले तस्करधाटीमिलने जोत्कारे कृते तैर्द्रव्यं मार्गितं । वणिजोक्तं—साक्षिणं कृत्वा सर्वं गृह्णंतु, पुनरवसरे भवद्भिर्ममार्प्यमहं च न मार्यः । ततस्तैर्मुग्धोऽयमिति मत्वाऽरण्यमार्जारः साक्षीकृतः, सर्वस्वं गृहीत्वा मुक्तः, स परंपरया तद्ग्रामाद्यवगम्य स्वग्रामं गतः ।

कियति काले गते ते चौरा बहुवस्तु लात्वा तत्राजग्मुः । तेन स्वद्रव्यमार्गणे मिथः कलहे न्यायकारकैः 'साक्षी कोप्यस्तीति' पृष्टेन वणिजा कृष्णबिडालमेकं कक्षे क्षिप्त्वा प्रोक्तं—'एष साक्षी' तस्करैरुक्तं—'विलोक्यते भोः कीदृशः साक्षी ?' ततस्तेन स दर्शितस्तैरुक्तं—'एषोऽसन्, कृष्णत्वात्, स तु कर्बुरोऽभूदिति' स्वमुखेनैव माननाश्यायकारकैर्वलेन सर्वस्वं पश्चाद्गृहीतं तेनेति साक्षिफलं मत्वा गुप्तवृत्त्या द्रव्यं न मोच्यं नो देयमिति, तथा भूषणमलंकारादिग्रहणं विनोद्धारके द्रव्यं न दातव्यं कदाचिन्मूलनाशो न स्यात्, यतः—

"नटे पण्यांगनायां च, द्यूतकारे विटे तथा । दद्यादुद्धारके नैव, धनरक्षापरायणः ॥ १ ॥

मुख्यरीत्या तु गृहस्थैः समधिकाभरणादिरक्षणेनैव द्रव्यादिदानमुचितं अन्यथा मार्गणादिहेतुकक्लेश-

विरोधधर्महानिलंघनधरणशपथाद्यनेकानर्थापत्तेः । कदाचिच्छपथकार्ये प्राप्तेऽपि यथा तथा शपथं न विदध्यात्, तत्र विशेषेण देवगुरुज्ञानधर्मतीर्थयात्रादिसंबंधिनः शपथं नैव विदध्यात् । यतः पूर्वमनीषिभिः—
"अलिएणवि सच्चेणवि, चेइअ सम्मं करेइ जो मूढा । सो वमइ बोहिवीअं, अणंतसंसारिओ होइ"॥१॥

तथा कदाचिल्लंघनेन कार्यसिद्धिस्तदा स्वयं लंघयेन्न परेषां बालवृद्धादीनाम् । क्षणमात्रलङ्घनं पंचदशशतजीवानां कारितं, तेन ढंढणर्षिणा षण्मासान् यावदाहारो न प्राप्तः । इत्यादि स्वबुद्ध्याऽनेकदोषापत्तिं निर्धार्य समधिकवस्तुग्रहणेन द्रव्यं देयं । अत्रार्थे हितशिक्षार्थं पूर्वसूरिभिर्ज्ञातं प्रोक्तमस्ति, तद्यथा—

श्रेष्ठिजिनदत्तसुतो नाम्नापि मुग्धः पितृप्रसादान्निश्चिंतः प्रांते तथैव गुणदर्शनाद्गूढार्थवाक्यैरेवं शिक्षितः—'वत्स ! गृहस्यांते सर्वतो दंतानां वृतिर्विधेया १ । परस्य धनं दत्वा पश्चात् न मार्गणीयं २ । मस्तके कश्चिदपि भारो नोत्पाद्यः ३ । सदा दिवसः सफलीकार्यः ४ । भार्या स्तंभे बद्ध्वा ताड्या ५ । मिष्टान्नं भोज्यमेव ६ । सुखेनैव शेयं ७ । ग्रामे ग्रामे गृहं कार्यं ८ । दौःस्थ्ये गंगायमुनयोर्मध्ये खननीयं ९ । क्षेत्रे क्षेत्रे धनं वपनीयं १० । तदर्थसंदेहे मम मित्रश्रेष्ठी सोमदत्तः प्रष्टव्यः । इति प्रोच्य स कथाशेषत्वं प्राप्तः । ततस्तत्सुतस्तदर्थाज्ञस्तथैवाकरोत्तेन निःस्वो जातः । ततः पाटलीपुरे सोमदत्तगृहे गतः, तं मुग्धं मत्वा श्रेष्ठिना सुचिरं विलंबेन भोजने चवलादिद्विदलं परिवेषितं सोऽपि बुभुक्षितत्वेन सुखाद्यमिवामन्यत । ततो नामकलेखकादिना बह्व्यां रात्रौ गतायामुज्जृंभामंगमोटनं च कुर्वन्तं प्रेक्ष्य मत्कुण-

१ शपथं.

भूनमंचकः शयनाय दत्तः । तूर्णं निद्रामाप । पुनः श्रेष्ठी तस्य ब्राह्ममुहूर्त्ते निद्राछेदमकारयत् । ततः
प्रत्यूषे तद्भावार्थं पप्रच्छ, तेनोक्तं—'सर्वेषां प्रियं हितं च वाच्यं येन स्वमुखस्थदंतानां वृतिर्भवति, यतः—
"जिह्वामें अमृत वसे, विषभी उनके पास । एके बोल्ये कोडीगुण, एके कोडी विनाश ॥ १ ॥ इति ।
समधिकग्रहणकादानादिना तथा धनादि देयं यथा स्वयं परोऽर्पयति २ । तथा मस्तके ऋणसंबंधिभारो
न धार्यः, उक्तं च जैनागमे—
"तत्तेय मित्तं जंपह, जत्तेय मित्तस्स निव्वहं वहह । तं उक्खिवेह भारं, जं अद्धपहे न ठंभेह" ॥ १ ॥
को हि मूढधीर्भवद्वयपराभवकारणमृणं क्षणमात्रमपि धारयेत्? यतः—
"धर्मारंभे ऋणच्छेदे, कन्यादाने धनागमे । शत्रुघातेऽग्निरोगे च, कालक्षेपं न कारयेत्" ॥ १ ॥
"तैलाभ्यंगमृणच्छेदं, कन्यामरणमेव च । एतानि सद्योदुःखानि, परिणामे सुखानि च" ॥ २ ॥
ऋणच्छेदे न विलंब्यं, अन्यथा ऋणमदाता भवांतरे तद्गृहे कर्मकरमहिषादिः स भवेत् । ऋणरक्षणे द्वयोर्मिथो भवांतरे
वैरवृद्ध्याद्यापत्तेः । श्रूयते हि—'श्रेष्ठिभावडस्य ऋणसंबंधेन पुत्रभवनादि, यथा दुःस्वप्नादिदुष्टः आद्यः सुतो
मृत्युयोगोत्पन्नो नदीतीरे तरोरधस्त्यक्तः । रुदित्वा हसित्वा चाह—'स्वर्णलक्षं मे उत्तमर्णं देहि नो चे-
त्त्वानर्थो भावीति' । ततो जन्मोत्सवादिना षष्ठीदिने लक्षपूर्त्तौ स मृतः, एवं द्वितीयस्त्रिलक्षपूर्त्तौ मृतः ।
सुस्वप्नादिहेतुस्तृतीयपुत्रस्त्वेकोनविंशतिः स्वर्णलक्षा मया देया इत्यवादीत् । भावडः पित्रोर्धर्मव्यये ताव-
द्धनमानीय काश्मीरे नवलक्ष्या ऋषभपुंडरीकचक्रेश्वरीमूर्त्तीर्लात्वा दत्ता, लक्षेण च प्रतिष्ठाप्याष्टादशपो-

तैरर्जितासंख्यस्वर्णः शत्रुंजये लेप्यमयं बिंबमुत्थाप्य तत्र मणिमयं बिंबमस्थापयत्'। इति श्रुत्वा तत्रैव एव ऋणसंबन्धो यथा कथञ्चिन्निध्याप्यः। धर्मार्थिना ऋणदानेऽसमर्थं तं मत्वा यदा शक्नोषि तदा दद्या नो चेदिदं धर्मपदे मे ब्रूयादिति वाच्यं, न तु ऋणसंबन्धः चिरं स्थाप्य इति द्वयोर्मिथो विवेकः कार्यः। इति प्रस्तावाच्चर्चितं, परमृणभारः शिरसि न धार्यः, इति मुग्धस्य शिक्षा दत्ता ३। वासरः सफलस्तु गृहिणां धनलाभेनैव स्यान्न तु व्यसनात्, यदुक्तं—

"वणिग्वेश्या कविर्भट्टस्तस्करः कितवो द्विजः। यत्रापूर्वार्थलाभो न, मन्यते तदहर्वृथा" ॥ १ ॥

न तु गीतनृत्यविकथादिनावसरः शुभः स्यादिति ४। सापत्यैव प्रिया ताड्या, पुत्रादिषु स्नेहस्तंभेन बंधिता ताडितापि न किंचिद्विपरीतं तनोति ५। बुभुक्षयैव भुज्यते यत्तत्सर्वं मिष्टं न त्वत्र पक्वान्नमेव, कद्वये यद्भुक्तं तत्कीदृशं कदन्नमपि मिष्टं लग्नं, तद्वत्सदा भोक्तव्यं। यत उक्तं च पंचत्रिंशद्भ्राद्धगुणविवरणे—

"अजीर्णे भोजनत्यागी, काले भोक्ता च सात्म्यतः"।

पूर्वकृतभोजनेऽपक्वे बहुरोगाः स्युः। यतो वैद्यके—

"मलवातयोर्विगंधो, विड्भेदो गात्रगौरवमरुच्यम्। अविशुद्धश्चोद्गारः षडजीर्णे व्यक्तलिंगानि" ॥ १ ॥

अजीर्णे सति भोजनं त्यजतीति, तथा काले बुभुक्षासमये भोक्ता लौल्यादिपरिहारात्, यतः—

"कंठनालमतिक्रांतं, सर्वं तदशनं समम्। क्षणमात्रसुखस्यार्थे लौल्यं कुर्वीत नो बुधः ॥ १ ॥

"जिह्वे प्रमाणं जानीहि, भोजने वचने तथा। अतिभुक्तमतीवोक्तं, प्राणिनां मरणप्रदम्" ॥ २ ॥

क्षुधार्त्तेन भुक्तं विषमप्यमृतायते, श्रूयते हि—

कचित्काले भोक्तारं नृपं सगदं कर्तुं केनचिद्वैद्येन सूपकारः शिक्षितः—"त्वया रसवतीपाककाले- ऽद्य मिषेणोल्लंघ्यः"। तेन तथा कृतं, नृप एत्य विलंबं ज्ञात्वा जाठराग्निकपिष्टं गुरुभूतनिश्च कृत्वाऽभुङ्क्त, काले भुक्तत्वाज्जीर्णं, वैद्यो विलक्षोऽभूदिति प्रसंगात्प्रस्तुतम्। अतीव क्षुधि भोजनं मिष्टं स्यादिति तदु- त्तरम् ६॥ निद्रालुनैव शयितव्यं, कल्ये मम मंचकवत्, यत्रतत्रापि सुखं निद्रेति ७॥ ग्रामेग्रामे मैत्री कार्या यथा स्वगृहवद्भोजनादि सर्वं सुसाध्यं स्यात् ८॥ अतिदौःस्थ्ये तत्र गृहस्थगंगायमुनाख्ययोर्गवोः स्थाने खन्यं न तु नदीतटे, यथा पित्रा प्राग्न्यस्तं निधिं लभसे इति ९॥ क्षेत्रं तु धर्मस्थानं, तत्र धनं वप्यं येन महत्फलं स्यात्. यतः—'एकगुणं दानं सहस्रगुणं पुण्यं' इति जनप्रवादात्, न तु शालिपुंजार्हक्षेत्र धनं क्षेप्यं। अथवा साधर्मिकादिरूपक्षेत्रे धनं देयं,तैः सह व्यवसायो न्याय्यस्तत्पार्श्वे स्थितस्य निजस्वस्य धर्मो- पयोगित्वसंभवात्, न तु नीचजनरूपक्षेत्रे धनं स्थाप्यं। १०॥ इत्यादि श्रुत्वा गतसंशयः सोऽपि तथा कुर्वन् धनी सुखी महनीयश्च जज्ञे । इत्थं यथायोग्यमन्यैरपि शिक्षां गृहीत्वा शुद्धव्यापारः कार्यः । इति ।

'पित्रा प्रदत्ता व्यवसायशिक्षा, तद्वाक्यभावार्थमबमत्य मुग्धः ।
दुःखी बभूवानु स एव सस्वो, विज्ञाय तत्त्वं व्यवसायशुद्ध्या ॥ १ ॥

॥ इत्यब्ददिनपरिमितहितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थस्य वृत्तौ नवमस्तंभे
पड्विंशत्युत्तरशततमं व्याख्यानम् ॥ १२६ ॥

## ॥ सप्तविंशत्युत्तरशततमं व्याख्यानम् ॥ १२७ ॥

अथ व्यवसायविषयिकां हितशिक्षामाह—

कार्पण्याच्चातिराटित्वं, न कुर्यादर्थम (स्या) जकः । मायाबुद्धिं च सर्वत्र, संत्यजेद्व्यवसायवान् ॥ १ ॥

अर्थम (स्या) जकः, द्रव्यवृद्धिमिच्छुकः कृपणनावं न कुर्यात् । कुतः कृपणत्वेन नुवनजानुजीवेन सोमदत्तनवे मातुलपुत्रं निजमार्गद्रव्यनामकार्थं निराहारं रत्नकोटिर्गृहीता, शेषपंचकोट्यर्थं स्वात्मानं तं च सप्तरात्रं यावत् बुभुक्षितमरक्षत् स तु मृतः । तद्वार्ता लोके प्रसृता, कोऽपि तेन सार्द्धं न व्यवस्यति । एकदा पंचशतशकटानि लात्वा वनकमार्थं गतः । गह्वर एकाकी वृक्षच्छेदनाय तत्परो व्याघ्रेण नक्षितः, एकेन्द्रियत्वं प्राप्तः । इत्थं कृपणनावेन दिग्विदिक्षु गतवान् परं पुण्यादधिकं नाप्तं द्रव्यादिकं । अतस्त-त्याज्यमिति । ननु यत्र तत्र द्रव्यविकिरणात् कथं तस्य स्थैर्यं स्यात् ? उच्यते—'गृहस्थानामचिंत्यस्थले तन्न रक्ष्यं, यथा—कस्यापीन्यस्य नव्या स्नुषा श्वशुरं दीपात्पतिततैलबिन्दुयोपानहमभ्यंजंतं वीक्ष्य किमि-दमतिकार्पण्यं किमुतातिवैदग्ध्यं ?' इति संदिहाना परीक्षार्थं 'मे शीर्षं दूष्यति' इति मिषात्सुप्ता नृशं क्रंदति, श्वशुरेण बहुप्रतिकारे कारिते तयोक्तं—"मम प्रागप्यंतरांतरेवं मांद्यं स्याद् गुणस्तु जात्यमुक्ता-फलचूर्णलेपेनैव स्यात्" तदा श्वशुरो हृष्टस्तान्यानीय यावद्वर्त्तयति तावत्तया सम्यक्स्वरूपं प्रोक्तमिति ।

यः काकणीमप्यपथप्रपन्नां, मन्येत तां निष्कसहस्रतुल्याम् ।
काले च कोटिष्वपि मुक्तहस्त—स्तस्यानुबंधं न जहाति लक्ष्मीः ॥ १ ॥

अपरं च द्रव्यार्थी अतिक्लेशं न विदध्यात्, कुतः? क्षमा हि श्रीवृद्धिक्षमा। यतः—
"होममंत्रबलं विप्रे, नीतिशास्त्रबलं नृपे। राजा बलमनाथानां, वणिक्पुत्रे क्षमाबलम्" ॥ १ ॥

"अर्थस्य मूलं प्रियवाक् क्षमा च, कामस्य वित्तं च वपुर्वयश्च।
धर्मस्य दानं च दया दमश्च, मोक्षस्य सर्वार्थनिवृत्तिरेव" ॥ २ ॥

यतः—'लक्ष्मीदारिद्र्ययोर्मिथो विवादे जाते शक्रांतिके जग्मतुः। दारिद्र्यं प्राह—मत्त इयं विज्ञेत्यतः सर्वत्र भ्रमति, अहं निर्शंकं—
'दारिद्र पण रलीयामणुं, कियती केती वार। एक उचाले पलीवणे, जूया खेलणकाल" ॥ १ ॥

शक्रेण श्रीः पृष्टा—'त्वं कुत्र वससि?' साह—
"गुरवो यत्र पूज्यंते, वित्तं यत्र नयार्जितम्। अदंतकलहो यत्र, तत्र शक्र वसाम्यहम्" ॥ १ ॥

तत इंद्रपृष्टं दारिद्र्यमवक्—
"द्यूतपोषी निजद्वेषी, धातुवादी सदालसः। आयव्ययमनालोची, तत्र तिष्ठाम्यहं हरे" ॥ १ ॥

शक्रः प्राह—'अक्लेशादिस्थले श्रीस्तिष्ठत्वितरस्मिंस्त्वं' इति विवादो भग्नः। इति श्रुत्वा श्रावकेण साम्नैव कार्यं साध्यं न क्लेशेन। यतः—
"मार्दवेनैव वश्याः स्युः, सर्वेऽपि तीक्ष्णनिष्ठुराः। जिह्वामुपासते पश्य, दंताः कर्मकरा इव" ॥ १ ॥

न्यमार्गणाद्यप्यकठिनवृत्त्यैव युक्तमन्यथा धर्मयशोहान्याद्यापत्तेः । जातु महता सहार्थादिसंबंधः स्यात्तदा प्रणिपातादिनैव सर्वकार्यसिद्धिर्नतु बलकलहादिना, यतः—

"उत्तमं प्रणिपातेन, शूरं भेदेन योजयेत् । नीचमल्पप्रदानेन, स्वतुल्यं तु पराक्रमैः" ॥ १ ॥

इति तथेति शेषः । व्यवसायवान् सर्वत्र क्रयविक्रयादौ परकीयग्राहकव्युद्ग्राहणमषीभेदलंचादानादिषु च मायाकरणं परवंचनं संत्यजेन्न कुर्यादित्यर्थः, यतः—

"विधाय मायां विविधैरुपायैः परस्य ये वंचनमाचरंति । ते वंचयंति त्रिदिवापवर्गसुखान्महामोहसखाः स्वमेव"

मायारहितमपि निष्पन्नवस्त्रसूत्रनाणकस्वर्णरूप्यादिपण्यं, प्रायो वाणिज्ये च यथा यथा स्वल्पपापं स्यात्तथा विधेयमिति । ननु मायादिरचनां विना दुःस्थादीनां शुद्धव्यवसायेन निर्वाहः कथं स्यात् ? उच्यते—बहुकूटकल्पनोपार्जितं वर्षादिप्रांते राजचौराग्निजलराजदंमादिभिरपह्रियमाणत्वान्न चिरस्थायि, नापि स्वदेहभोगधर्मव्ययादिहेतुरपि, यतः—

"अन्यायोपार्जितं वित्तं, दश वर्षाणि तिष्ठति । प्राप्ते चैकादशे वर्षे, समूलं च विनश्यति" ॥ १ ॥

सागरश्रेष्ठिपापबुद्धिरंकश्रेष्ठ्यादिवत्, अतोऽमायित्वमिहापि प्रतिष्ठाहेतुः, यतः—'विहाराहारव्यत्र द्वारस्तपस्विनां गृहिणां तु व्यवहार एव शुद्धो विलोक्यते । श्रूयते हि—'नित्यं पंचविंशतिदोकरूकानां स्वामी पुणिकश्रेष्ठी सार्द्धद्वादशदोकरूकोपार्जनेन शुद्धवृत्त्या चेत्थं गृहभारं निर्वहतीति श्रुतं वृद्धेभ्य इति । ननु न्यायधर्मैकनिष्ठा अपि केचिद्दौःस्थ्यादिपीडिता एव दृश्यंते, अन्ये त्वधर्मव्यापारनिष्ठा अप्यै-

श्वर्यादिना सुखिनश्च, तत्कथं शुद्धव्यवहारस्यैव प्राधान्यं ? उच्यते—'अयं प्राक्कर्मकृतो विपाकविशेषो न त्वेतद्भवकर्मकृतः। कर्म च चतुर्धा, यदाहुः श्रीधर्मघोषसूरिपादाः—

"पुन्नाणुबंधिपुन्नं, तहेव पावाणुबंधि पुन्नं च। पुन्नाणुबंधि पावं, पावं पावाणुबंधि तह" ॥ १ ॥

अविराधितजिनधर्मस्य भरतस्येव पुण्यानुबंधि पुण्यं १। अज्ञानकष्टेन कोणिकस्येव ऋद्धिप्रापणं पापानुबंधि पुण्यं २। तद्भवे पापोदयाद्दरिद्रिणो द्रमकमुनेरिव पुण्यानुबंधि पापं ३। कालशौकरिकादिकस्येव पापानुबंधि पापं। ४। एवं च यद्यपि कस्यचित्पापानुबंधिपुण्यकर्मवशादैहलौकिकी विपन्न दृश्यते तथाप्यायत्यामवश्यंभाविन्येव। श्रूयते हि—'कश्चिच्छ्राद्धः कश्चिच्चौरश्च स्वस्वगृहाद् द्वावपि निरीयतुः। श्राद्धस्तत्पार्श्वादग्रे जिनदर्शनार्थं गच्छन् कंटकविद्धपादोऽभूत्, तस्करश्च श्राद्धपुरस्ताद्व्रजन् रूपकं प्रापत् सहर्षो जातः। ततः श्राद्धो दध्यौ—'अहो! अधर्मिणः कथं महत्फलं' इति संदेहे गत्वा गुरुं पप्रच्छ, गुरुराह—'तव तु पापं कंटकभग्नपादेन गतं, अग्रे गच्छंतं चौरं नृपभटा बद्ध्वा शूलिकायामारोपयिष्यंति' इति। क्षणांतरे तथैव जातं, तच्छ्राद्धेन श्रुतं। ततः श्राद्धो नित्यं शुद्धव्यवसायपरो जात इति।

अमुं प्रबंधं हृदये निधाय, स्वहानिहेतून् कृपणादिदोषान्।
विहाय नित्यं व्यवसाय एष्यः, सर्वत्र तेनैव विवर्द्धते स्वं ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थस्य वृत्तौ नवमस्तंभे
सप्तविंशत्युत्तरशततमं व्याख्यानम् ॥ १२७ ॥

## ॥ अष्टाविंशत्युत्तरशततमं व्याख्यानम् ॥ १२८ ॥



अथ पुनर्मायाकरणाकरणयोः फलमाह—

कूटस्य जल्पनं मोच्यं, राज्ञां पुरो विशेषतः । दंभात्कीर्त्तिश्रियां हानि–स्तस्माच्छ्राद्धः परित्यजेत् ॥ १ ॥

गृहस्थ इति शेषः । क्रयादानदानादौ कूटजल्पनं त्याज्यं । ननु गुह्यं परेषां न प्रकाश्यं, यतः—

"स्वकीयं दारमाहारं, सुकृतं द्रविणं गुणम् । दुष्कर्म मर्म मंत्रं च, परेषां न प्रकाशयेत्" ॥ १ ॥

अत्र श्लोके सत्यज्ञापणं निषिद्धं, तत्कथं कूटजल्पनं भवद्भिर्निषिद्धं ? उच्यते,—'केनाप्यायुर्वित्तं गृहछिद्रमित्यादिकं पृष्टं (सत्) कूटं न वदेत्, किंतु "किमनेन प्रश्नेन ?" इत्यादिभाषासमित्या प्रत्युत्तरयेत्, तथा राज्ञां पुरोऽग्रे विशेषतस्तत्त्याज्यं । उपलक्षणाद् गुर्वादिप्रश्ने तु यथास्थितमेव वाच्यं, यतः—

"सत्यं मित्रैः प्रियं स्त्रीभि–रलीकं मधुरं द्विषा । अनुकूलं च सत्यं च, वक्तव्यं स्वामिना सह" ॥ १ ॥

श्रूयते हि—"दिल्ल्यां श्रेष्ठी महणसिंहोऽकूटवादी शुद्धव्यवसायी, इति श्लाघां श्रुत्वा परीक्षार्थं सुरत्राणेन 'तव कियन्मितं धनमस्ति ?' इति पृष्टो 'लेख्यकं वीक्ष्य विज्ञपयिष्यामि' इत्युक्त्वा सर्वं नामकं सम्यक् कृत्वा राज्ञोऽग्रे—चतुरशीतिटंकसहस्रं मद्गृहे संभवि नोऽनुमानेनेत्यूचे । 'मया स्तोकं श्रुतमनेन तु बहूक्तं' इति सत्योक्तिहृष्टो नृपस्तं कोशाध्यक्षं चक्र इति" । तथा कूटजल्पनात् किं स्यात् ?—दंभः कपटविशेषस्ततश्च कीर्त्तिश्रियां हानिरभावः, अतः श्राद्धस्तद्दंभं परित्यजेदित्यर्थः । अत्रार्थे धर्मबुद्धिज्ञातं, तच्चेदं—



१ अस्माकम्.

“भीमपुराद्धनार्जनाय द्वौ सुहृदौ चलितौ । धनमुपार्ज्य पश्चात्स्वगृहं प्रति चेलतुस्त्वरितं, यतः—

“प्राप्तविद्यार्थशिष्या (क्षा) णां, देशांतरनिवासिनाम् । क्रोशमात्रोऽपि भूभागः, शतयोजनवद्भवेत्” ॥ १ ॥

ततस्तौ महाभारत्वात्किंचिद्धनं ग्रामाद्बहिर्न्यासीकृत्य गृहमागतौ, यतः—

“न वित्तं दर्शयेत्प्राज्ञः, कस्यचित्स्वल्पमप्यहो । मुनेरपि यतस्तस्य, दर्शनाच्चलते मनः” ॥ १ ॥

“यथामिषं जले मत्स्यै-र्भक्ष्यते श्वापदैर्भुवि । आकाशे पक्षिभिश्चैव, तथा सर्वत्र वित्तवान्” ॥ २ ॥

एकदा रहो रात्रौ पापबुद्धिना तत्र गत्वा धनं गृहीतं, कर्करैर्गर्त्तां पूरयित्वा स्वालय आगात् ।

अन्येद्युर्धर्मबुद्धिः प्राह—“धनं विना सीदामि तेन धनमानीयते’ पापधीः प्राह—‘गम्यते’ ततो द्वावपि धनं लातुं गतौ, धनरिक्तं तत्स्थानं वीक्ष्य प्रथमं दांभिकः शिरस्ताडयन्नाह—‘त्वयैव धनं गृहीतं’ धर्मबुद्धिः प्राह—‘त्वया गृहीतं, मायां कुर्वाणोऽसि त्वं, मया तु दंभवृत्तिः प्रत्याख्याताऽस्ति’ । एवं द्वौ विवदमानौ राजकुले गतौ, मिथो दूषणानि प्रोचतुः । अधिकारिभिः प्रोक्तं—‘दिव्यं क्रियतां’ तदा पापबुद्धिः प्राह—‘अहो न दृष्टो न्यायः सम्यग् भवद्भिः, उक्तं च—

“विवादेऽन्विष्यते न्याय-स्तदभावे च साक्षिणः । साक्ष्यभावे ततो दिव्यं, प्रवदंति मनीषिणः ॥ १ ॥

यदत्र विषये मे वनदेव्येव साक्षिण्यस्ति, सा च वक्ष्यति चौरं । ततस्तैरुक्तं—‘सत्यमुक्तं त्वया, यतः—

“अंत्यजोऽपि यदा साक्षी, विवादे संप्रजायते । तत्र न विद्यते दिव्यं, किं पुनर्यत्र देवता” ॥ १ ॥

ततोऽधिकारिभिः प्रोक्तं-प्रातर्वनदेवता प्रेक्ष्यते । ततः पापबुद्धिना रात्रौ प्रछन्नं पिता शमीकोटरे

स्थापितः, सिंदूरतैलादिना तस्यारवव्यत्ययं कृत्वा शिक्षितः—'त्वयेदं वाच्यं'—"धर्मबुद्धिर्गोमुखव्याघ्रो धनं ललौ"। द्वितीयदिने तौ द्वावन्ये नृपादिलोकाश्च वने गताः, वनदेव्याः पूजां कृत्वा तैः प्रोक्तं—'भो वनदेवते! येन धनं गृहीतं तत्कथय'। ततः शमीकोटराच्छब्दो निःससारेति—'धर्मबुद्धिर्धनं ललौ'। ततो यदाधिकारिणो जगुः—'त्वया धनं गृहीतं' तदा धर्मबुद्धिना शमीवृक्षो वह्निना ज्वालितः, शमीतरौ ज्वलत्यर्द्धदग्धांगः पापधीपिता स्फुटिताक्षः शमीकोटरान्निर्ययौ। ततोऽधिकारिभिः प्रोक्तं—'श्रेष्ठिन्नेतत्किं त्वया वृद्धत्वे पापं कृतं?' श्रेष्ठ्याह—'पुत्रेण कारितोऽहं'। ततो लोके धर्मबुद्धिपापबुद्धीति नाम्ना प्रसिद्धौ जातौ। नृपेण दांभिकस्य सर्वस्वं गृहीत्वा स्वदेशान्निष्काशितः। यतः—

"मायामविश्वासविलासमंदिरं, दुराशयो यो कुरुते धनाशया।
सोऽनर्थसार्थं न पतंतमीक्षते, यथा बिडालो लगुडं पयः पिबन्" ॥ १ ॥

शुद्धधर्मिणं नृपः प्राशंसदिति।

मित्रद्वयोर्ज्ञातमिदं निशम्य, सर्वत्र कार्या प्रतिभिर्गृहस्थैः।
दंभं जहित्वा (विहाय) व्यवसायबुद्धिः, सौभाग्यलक्ष्मीप्रददानशक्ता ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थस्य वृत्तौ नवमे स्तंभेऽष्टाविंशत्युत्तरशततमं व्याख्यानम् ॥ १२८ ॥

## ॥ एकोनत्रिंशदुत्तरशततमं व्याख्यानम् ॥ १२९ ॥

अथ पुनर्व्यवसायविषये हितशिक्षामाह—

बाधा मिथस्त्रिवर्गस्य, न कार्या ह्यास्तिकैर्नरैः । विश्वासघातकार्यं च, सुवृत्त्या दूषणं मतम् ॥ १ ॥

त्रिवर्गस्य—धर्मार्थकामलक्षणस्य मिथः—परस्परं बाधा—प्रतिबंध आस्तिकैर्नरैः—श्राद्धैर्न क्रियेतेत्यर्थः । तत्र धर्मो निःश्रेयससुखसाधकश्च, सर्वार्थप्रयोजनसिद्धिः सोऽर्थः, शब्दादिभिः सर्वेंद्रियप्रीतिः स कामः । एतत्त्रिवर्गस्यान्योन्यपीडा त्वेकैकसेवनेन स्यात्, यतः—'कश्चिद्धर्ममेव सेवतेऽतिमुक्तकजंबूस्वाम्यादिरिव । यद्वा म्लेच्छकुलेऽपि केचिल्लघुकर्मिणः श्रूयन्ते, यथा—अहम्मदसुरत्राणः सपादमणपुष्पशय्यायां शेते । एकदा तत्र शय्यायां कौतुकाद्दासी सुप्ता, तत्क्षणमेव निद्रां गता । राजा सत्रात एत्य तां दासीमेकया कंबयाऽमारयत् । सा सहसा हसंत्युत्थाय भुवि तस्थौ । राज्ञा हास्यकारणं निर्बंधेन पृष्टा सा प्राह—'महाराज ! मम तु पापं युष्मद्दत्तप्रहारेण नष्टं तूर्णं, यूयं तु नित्यमनेकवृक्षाणां तनुजसमानि पुष्पाणि शय्यायां स्थापयित्वा निद्रां कुरुथ, तत्पापदंरुः कियन्मितो भावी ? इति विचार्याहं हसितवती." तदाकर्ण्य नृपस्ततः पुष्पशय्यां न्यवारयत् । एकदा स एव सुरत्राणश्चतुरंगचमूवृत उपवनमार्गेऽगच्छत्तदा पुर एक उष्ट्रो गच्छन्नन्तराले मृतस्तेन सर्वसैन्यं स्थिरीभूतं वीक्ष्य नृपः प्राह—'कथमेतदग्रे न चलति ?' अमात्यादिभृत्येन क्रमेलकमरणं प्रोक्तं । स मरणतत्त्वमजानन्पप्रच्छ—'मरणं किं ?' भृत्यः प्राह—'स्वामिन् ! श्रवणत्वेक्षणत्वाशनादिरहितं मरणं.' नृपः सविस्मयस्तत्र गत्वा करभं पप्रच्छ—'भो ! उत्तिष्ठ, खानं पानं च विधेहि,

क्रोधेनेदृशी निद्रा न कार्या.' तदान्यैः प्रोक्तं—'महाराज ! अयं तु निर्जीवो जातः'। अनेकयुक्त्या मरणस्वरूपं विज्ञाय स्वयं दध्यौ—'अहो! यदेदृशमचिंतनीयमात्मनः समेति तदा को रक्षति? इति विचिंत्य तदैव सर्वं त्यक्त्वा स्वजातीयश्रेष्ठधर्मं स्वीचकार, अत एव लोका अपि प्रशशंसुः, यतः—

"सोल सहस्स साहेलीयां, तुरी अढारह लक्ख।
साहेब तेरे कारणे, छोड्या सेहेर बलक्ख" ॥ १ ॥

इति श्रूयते परशास्त्रोक्तसंबंधोऽपि किंचिदुपयोगित्वादत्र प्रोक्तः। अर्थकामौ त्यक्त्वा धर्मोऽहिंसालीकत्यागादिलक्षणः स्वीकृतस्तेन। एवमन्येष्वपि यथार्हं भाव्यमिति। १। तथा कश्चिदर्थमेवैकं साधयतीति मम्मणनंदादिरिव। धर्मकामातिक्रमाद्धनमुपार्जितमपि परेऽनुभवंति स्वयं तु परपापस्य भाजनं सिंह इव सिंधुरवधान्मौक्तिकदंतादीनां स्वामी अन्य एव। यद्वा—

"कीटिकासंचितं धान्यं, मक्षिकासंचितं मधु। कृपणोपार्जिता लक्ष्मीः, परैरेवोपभुज्यते ॥ १ ॥

इति द्वितीयभंगः २। तथा कश्चित्काममेवैकं सेवते, न धनं न च धर्मं, विषयसुखलुब्धो ब्रह्मदत्तादिवत्। यद्वा श्रूयते लोकशास्त्रेऽपि—'सपादलक्षग्रामाधिपः पृथु(पृथ्वी)राजचहुवाणनृपो दिल्लीशः कामासक्तो राज्यभ्रष्टो बभूव, तथाहि—'पृथ्वीराजेन पंगुनृपस्यांतःपुराच्छलेन संयोगितां तत्पुत्रीं गृहीत्वा नष्टः स्वपुरमेत्य तया सह कामासक्तो राज्यचिंतारहितो म्लेच्छेशसुरत्राणेन ज्ञातः सुखेन तद्राज्यं लात्वा बद्धो द्वयोर्नेत्रयोः पुटं संसीव्य सदवरकसूचीलोहपंजरे निश्चलीकृतो महादुःखमापेति। स्वागमेऽप्यनंगसेनकला-

दशीलोपदेशमालावृत्त्युक्तस्त्रीदासत्वरिपुमर्द्दनादि प्रबंधाः कामलौल्ये ज्ञेया इति । ३ । इत्येकसंयोगिका भंगाः ३ । द्विकसंयोगाः इमे यथा—कश्चिद् धर्मधनासक्तः, न तु कामपरः, यथा कुमारपालनृपेण धर्मप्राप्तेः पूर्वं बह्व्योऽपि राजकन्याः परिणीताः, परं व्रतसमये तासां स्वल्पायुष्कादेकैव भोपलदेवी बभूव, कियता कालेन सापि परासुरजायत । तदनु ७२ सामंतादिवर्गो विज्ञपयति—'हे प्रजापाल ! पुनः पाणिग्रहणं कुरु.' राजोवाच—'अलममुना संसारवृद्ध्युपायेन पाणिग्रहाग्रहेण, भवतु मेऽतः परं यावज्जीवं शीलं, येन सर्वक्रियाः सफलाः, यदागमः—'जेण सुचरियेण वयाणि दाणाणि तवो नियमाणि सुचरियाणि' इति । 'राजन् ! पट्टराज्ञीं विना कथं मंगलोपचारा राज्ञो जायंते, न ह्यन्यलोकवन्नृपा राज्ञीरहिताः श्रुता दृष्टा वा.' राजाह—'अहो राजन्याः ! श्रीगांगेयः पितामह आजन्माकृतपाणिग्रह एव किं विस्मृतिपथमानीयते ?' । ततः सामन्तादिवृतः श्रीगुरुमुखेन ब्रह्मव्रतमङ्गीकृतवान् । तदनु मंत्रिभिः समग्रराजधर्ममंगलोपचारारात्रिकमंगलप्रदीपकरणावसरे स्वर्णमयीं भोपलदेवीं निर्माप्य राज्ञः पार्श्वे स्थाप्यते, गुरुभी राजर्षिबिरुदं दत्तमिति । महापुरुषत्वात्तस्य युक्तं परं व्यवहारस्थितस्य गृहिणः कामपीडया स्त्र्यादिकृतोपद्रवो भवतीति । ४ । तथा कश्चिद्धर्मकामौ सेवते, न तु धनोपार्जनपरः । एवमर्थबाधया धर्मकामौ सेवमानस्य ऋणाधिकत्वं मानहानित्वं च, गृहिणां तु प्रयत्नेन धनमुपार्ज्यं, यतः—

"नहि तद्विद्यते किंचि—द्यदर्थेन न सिद्ध्यति । यत्नेन मतिमांस्तस्मा—दर्थमेकं प्रसाधयेत् ॥ १ ॥

यथा धनदत्तश्रेष्ठी मिथ्यात्वी, तेन धर्मबुद्ध्या द्विजेषु दानं ज्ञातिपोषणं पुनः पुनः कन्यादानं गोदान-

मित्यादियुक्त्या लब्धधनं व्ययितं, नव्यं नोपार्जितं, तथा कामलौल्येन तस्य बहु धनं गतं, इत्थं स निर्द्रव्यो जातो, अपमानं च प्राप्तः । ततः स्वधर्मविक्रयाय सक्तुशंबलं गृहीत्वाऽचलत् । कानने भोजनाय स्थितस्तावदेको मुनिर्मासक्षपणकस्तत्रायातः, दानं दत्तं, ततः स्वेप्सितेभ्यगृहे गत्वा पूर्वकृतधर्मं व्यक्रीणीत । स्वपूर्वजादेशादिभ्यः प्राह—'यदि मुनिदानफलं दत्से, तदा मुखमार्गितं दद्मि.' तदाकर्ण्य स्वगृहाभिमुखो जातोऽरण्यस्थोडुंबरफलानि गृहीत्वा गृहमागतः । दानपुण्यात्सर्वं तत्स्वर्णं जातं मुनिभक्तवनदेवप्रसादात् । ततो व्ययमायोचितं कुर्वन् सुश्राद्धो जातः । इति श्रुत्वा गृहस्थेन यथार्हं स्वीकार्यमिति । ५ । तथा कश्चिदर्थकामावेव सेवते, न धर्मं, सागरश्रेष्ठी इव, नास्त्यधार्मिकस्यायत्यां किमपि कल्याणं । यद्वा धवलश्रेष्ठी इवेति ६ । तथा कश्चित्त्रयमपि न सेवते, एतत्त्रयातीतचतुर्थवर्गवर्त्तिन एवैतद्रूभंगकस्वामिनो भवंतीति स्वयमभ्यूह्यमिति । ७ । तथा कश्चित्त्रयमपि सेवते, एतद्भंगकस्वामिनोऽभयकुमारसुलसादयो भवंति । ८ । इति श्रुत्वा त्रिवर्गस्य बाधा गृहस्थस्य कर्त्तुमनुचिता, यतः—

"यस्य त्रिवर्गशून्यस्य, दिनान्यायांति यांति च । स लोहकारभस्त्रेव, श्वसन्नपि न जीवति ॥ १ ॥

यदा तु दैववशान्मिथः प्रतिबंधः संभवति, तदोत्तरोत्तरपीडायां पूर्वस्य पूर्वस्य बाधा न कार्या, तथाहि—कामबाधायां धर्मार्थयोर्बाधा रक्ष्या, तयोः सतोः कामस्य सुकरत्वात् । कामार्थयोस्तु बाधायां धर्मो धार्यः, यतः—

"धर्मे सिद्धे ध्रुवं सिद्धि—र्द्युम्नप्रद्युम्नयोरपि" ।

इत्यादि, तथा नीतिशास्त्रेऽपि—

"पादमायान्निधिं कुर्या—त्पादं वित्ताय कल्पते । धर्मोपभोगयोः पादं, पादं भर्तव्यपोषणे ॥ १ ॥

तथा सिंदूरप्रकरणे—

"त्रिवर्गसंसाधनमंतरेण, पशोरिवायुर्विफलं नरस्य ।
तत्रापि धर्मं प्रवरं वदंति, न तं विना यद्भवतोऽर्थकामौ" ॥ १ ॥

अन्योन्याऽबाधया शुद्धो—पधयाराधयन्सुधीः ।
त्रिवर्गं क्रमतः स्वर्गा—पवर्गसुखभाग् भवेत् ॥ २ ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थस्य वृत्तौ नवमे स्तंभे एकोनत्रिंशदुत्तरशततमं व्याख्यानम् ॥ १२९ ॥



## ॥ त्रिंशदुत्तरशततमं व्याख्यानम् ॥ १३० ॥

अथानंतरोक्तश्लोकपदद्वयस्य व्याख्यामाह—

विश्वस्तेति—विश्वासघातकरणं शुद्धव्यवसायस्य दूषणं ज्ञेयमित्यर्थः। विश्वस्तवंचने महत्पापं, यतः—इह पापं द्विप्रकारं गुप्तं प्रकटं च, तत्र गोप्यं तदपि द्विधा, अल्पं महच्च, अल्पं कूटतुलामानादि, महद्विश्वास-

घातादि । प्रकटमपि द्विधा—कुलाचारेण गृहिणामारंभादि म्लेछादीनां हिंसादि चेति, निर्लज्जत्वादिना तु
यतिवेशस्य हिंसादि, तत्प्रकटकरणेऽनंतसंसारित्वं, प्रवचनोड्डाहकारणत्वात्, कुलाचारेण पुनः स्फुटे स्तोकः
कर्मबंधो गोप्ये तु तीव्रतरोऽसत्यमयत्वात् । परवंचनादौ महत्पापं, अत्रार्थे विसेमिरासंबंधो यथा—
"विशालायां नंदो राजा, विजयपालसुतः, बहुश्रुतनामामात्यः, भानुमती राज्ञी । राजा तदासक्तः सभा-
यामपि तां पार्श्वे स्थापयति । एकदा मंत्रिणा विज्ञप्तं—'देव ! राज्याः पार्श्वे रक्षणमनुचितं, यतः—
"अत्यासन्ना विनाशाय, दूरस्था न फलप्रदाः । सेव्या मध्यमभावेन, राजा वह्निर्गुरुः स्त्रियः" ॥ १ ॥
अतो राज्ञीरूपं चित्रस्थं कारयित्वा पार्श्वे रक्ष, तेन तथा कृतं, यतः किराते—
"स किं सखा साधु न शास्ति योऽधिपं, हितान्न यः संशृणुते स किं प्रभुः ।
सदानुकूलेषु हि कुर्वते रतिं, नृपेष्वमात्येषु च सर्वसंपदः" ॥ १ ॥
तच्चित्रं स्वगुरोः शारदानंदनस्य दर्शितं, तेन स्वविज्ञताज्ञापनायोक्तं—'वामोरुप्रदेशे तिलोऽस्ति स न
कृतः' । राजा तं स्वभार्यारमणं संकल्प्य सचिवमाह—'अयं मार्य एव.' विमृश्यकारी स गृहे रहस्तमस्था-
पयत् । अन्यदा राजपुत्र आखेटके सूकरमनुव्रजन् दूरं गतः, सायं सरसि जलं पीत्वा व्याघ्रभीत्या तरौ
चटितः, तदुपरि स्थैकवानरस्तद्वृक्षवासिव्यंतराधिष्ठितो मनुष्यवाचोवाच—'भोः कुमार ! अधो व्याघ्रोऽस्ति'
इत्युक्त्वा तेनांके पूर्वं शायितो, व्याघ्रेण सुबहु याचितो न दत्तः । पश्चात्तदुत्संगे कपिः सुप्तः, व्याघ्रस्त-
मयाचत—'भोः कुमार ! वानरस्य को विश्वासः, यतः—

"नदीनां च नखिनां चेत्यादि॰"

"क्षणे रुष्टाः क्षणे तुष्टा—स्तुष्टरुष्टाः क्षणे क्षणे । अव्यवस्थितचित्तानां, प्रसादोऽपि भयंकरः ॥ १ ॥

क्षुधार्त्तव्याघ्रवचसा तेन कपिर्मुक्तः, स च पतन्नंतराले शाखासु लग्नः, उवाच च—'भोः त्वं स्वकृतं कर्म जानासि.' प्रभाते तेन ग्रहिलीकृतः । सर्वत्र 'विसेमिरा' इति शब्दमुच्चरन् भ्राम्यति । स्वीयतुरगो भयात्रस्तो नृपपुरो गतः । ततस्तं संशोध्य गृहे आनयत् । कथमपि गुणो न, तदा नृपः स्वगुरुगुणान् संस्मृत्य स्वं निनिंद । राज्ञा राज्यार्द्धदानपटहे दापिते मंत्रिणोक्तं—'मत्पुत्री किंचिद्वेत्ति' राजा सपुत्रो मंत्रिगृहे प्राप्तः । ततो जवनिकामध्यांतरेण शारदानंदनेन श्लोकः पठितः—

"विश्वासप्रतिपन्नानां, वंचने का विदग्धता ?। अंकमारुह्य सुप्तानां, हंतुः किं नाम पौरुषम् ?" ॥ १ ॥

इति श्रुत्वाद्याक्षरं मुक्त्वा स 'सेमिरा' इति पठति ।

"सेतुं गत्वा समुद्रस्य, गंगासागरसंगमे । ब्रह्महा मुच्यते पापै—र्मित्रद्रोही न मुच्यते" ॥ २ ॥

द्वितीयश्लोके द्वितीयाक्षरं मुक्त्वाऽपठत् ।

"मित्रद्रोही कृतघ्नश्च, स्तेयी विश्वासघातकः । चत्वारो नरकं यांति, यावच्चंद्रदिवाकरौ" ॥ ३ ॥

तृतीयाक्षरं तेन मुक्तं ।

"राजंस्त्वं राजपुत्रस्य, यदि कल्याणमिच्छसि । देहि दानं सुपात्रेषु, गृही दानेन शुध्यति" ॥ ४ ॥

इति श्रुत्वा नृपसूः स्वस्थो जातः । सर्वं वनवृत्तांतमुवाच, तदा राज्ञा प्रोक्तं—
"ग्रामे वससि कौमारि, वनस्थं चरितं खलु । कपिव्याघ्रमनुष्याणां, कथं जानासि पुत्रिके !" ॥ १ ॥
ततो जवनिकांतरितः स प्राह—
"देवगुरुप्रसादेन, जिह्वाग्रे मे सरस्वती । तेनाहं नृप जानामि, भानुमत्यास्तिलं यथा ॥ १ ॥
अनेन श्लोकेन नृपस्य संदेहः पूर्णस्ततो गुरुराजानौ मिलितौ हृष्टौ" । इति वृत्तांतं श्रुत्वा श्राद्धैः स्वामिमित्रविश्वासिदेवगुरुवृद्धबालद्रोहन्यासापहारादीनि महापातकानि सर्वथा विशिष्य वर्जनीयानीति ।
"शुद्धस्य व्यवसायस्य, दूषणानि परित्यजेत् । इहामुत्रभवे श्राद्धः, स्याद्यशस्वी निरंतरं ॥ १ ॥

॥ इत्यब्ददिनपरिमितहितोपदेशसङ्ग्रहाख्यायामुपदेशप्रासादग्रन्थस्य वृत्तौ नवमस्तंभे त्रिंशदुत्तरशततमं व्याख्यानम् ॥ १३० ॥

## ॥ एकत्रिंशदुत्तरशततमं व्याख्यानम् ॥ १३१ ॥

उक्तं सातिचारं द्वितीयं गुणव्रतं । अथानर्थदंडपरिहाराख्यं गुणव्रतं तृतीयमाह—
शरीराद्यर्थदंडस्य, प्रतिपक्षतया स्थितः । योऽनर्थदंडस्तत्त्याग—स्तृतीयं तु गुणव्रतम् ॥ १ ॥
स्पष्टं—अनर्थं निष्प्रयोजनं प्राणी पुण्यधनापहारेण दंड्यते पापकर्मणा विलुप्यते येनासावनर्थदंडः, स च चतुर्धेत्याह—

"आर्त्तरौद्रमपध्यानं, पापकर्मोपदेशिता । हिंसोपकारिदानं च, प्रमादाचरणं तथा ॥ १ ॥

अपकृष्टं ध्यानमपध्यानं, ध्यानं नामांतर्मुहूर्त्तं यावन्मनःस्थिरत्वमेकाग्रता च । यतः स्थानांगवृत्तौ—

"अंतोमुहुत्तमित्तं, चित्तावत्थाणमेगवत्थुम्मि । छउमत्थाणं झाणं, जोगनिरोहो जिणाणं तु" ॥ १ ॥

तत्रापध्यानं आर्त्तरौद्रभेदात् द्विधा, तत्राप्यार्त्तं चतुर्द्धा—अनिष्टशब्दरूपगंधादिकं प्राप्य कालत्रयेऽपि तद्विप्रयोगचिंता १ । अभीष्टशब्दादिकं लब्ध्वा कालत्रयेऽप्यविच्छेदचिंतनं तत् २ । एवं रोगादिवेदनाव्यथाया विप्रयोगचिंता ३ । भुक्तानां कामभोगानां स्मरणं चतुर्थं ४ । यत्रावश्यकनिर्युक्तिगतध्यानशतकवृत्तौ तु तदिदं—'देवेंद्रचक्रवर्त्तित्वादीनां गुणा रूपादय ऋद्धिस्तत्प्रार्थनात्मकमधमं निदानचिंतनं 'अहमनेन तपस्त्यागादिना देवेंद्रः स्याम्' इत्यादिरूपं । आह—किमिति तदधमं ? उच्यते—यस्मादज्ञानानुगतमत्यंतं, तथा च ज्ञानिनो विहाय सांसारिकेष्वन्येषामभिलापः स्यात्, इति धर्मनिदानचिंतनं तत्तुरीयकं ४ । अथैतद्ध्यानस्यात्मैकवर्त्तित्वादलक्ष्यमप्येभिर्लक्षणैश्चतुर्भिरिदं लक्ष्यते—"तस्स कंदण सोयण, परिदेवणताडनादि लिंगाइं । इट्ठाणिट्ठविओगाविओगवेयणानिमित्ताइं" ॥ १ ॥

तस्य ध्यानस्य चत्वारि लिंगानि—तत्राक्रंदनं महता शब्देन विरवणं, शोचनं त्वश्रुपरिपूर्णनेत्रस्य, परिदेवनं दैन्यं पुनः क्लिष्टभाषणं, ताडनमुरःकुट्टनादि,—एतानि लिंगानि इष्टानिष्टवियोगावियोगवेदनानिमित्तानि । १ । अनेन ध्यानेन तिर्यग्गतिः, अथवावश्यकहारिभद्र्यां—

"अट्टेण तिरिक्खगइ, रुद्दज्झाणेण गमयंति निरयंमि । धम्मेण देवलोयं, सिद्धिगइ सुक्कज्झाणेण" ॥ १ ॥

आर्त्तध्यानेन संयत्याख्या साध्वी गृहगोधात्वं प्राप्ता। एतद् ध्यानं देशविरतिं यावत्स्यादतः नंदमणिकारश्रेष्ठी मंडूकत्वं प्राप्तः, सुंदरश्रेष्ठी चंदनगोधात्वं प्राप्तः, इत्यार्त्तध्यानम्।

अथ रौद्राख्यमपध्यानं पूर्वोक्तादतिक्रूराध्यवसायात्मकं, तदपि चतुर्धा—एकेंद्रियादिसत्त्वानां ताडनं वेधनं बंधनं अंकनं प्राणवियोजनं असिशक्तिकुंतादिभिस्तथा वीरपिशाचमुष्टिप्रयोगविषमंत्रयंत्रादिभिः मारणं चिंतनं क्रोधेनेति हिंसानुबंधि १। पैशुन्यं चाटिकाकरणं, असभ्यवचनं, चकारमकारादि च स्वगुणाधिक्यादन्यदोषप्रकटनं, यद्वा स्वेप्सितनृपस्य जयं श्रुत्वाऽन्यनृपोपरि रौद्रबुद्ध्या 'श्रेष्ठं जातं अहो अस्मदीयनृपस्य खड्गे जयः, एकेन प्रहारेणैतावंतो हताः,' इत्यादिचिंतनं पुनः पुनः कथनं च तन्मृषानुबंधि २। तीव्ररोषतस्तन्नायकोपघाताद्यैः परद्रव्यापहारचिंतनं तत्स्तेयानुबंधि ३। स्वधनादिरक्षणार्थं सर्वतः शंकमानस्य परोपघाताध्यवसायस्तत्स्वसंरक्षणानुबंधि ४। यतो ध्यानशतके—

"इय करणकारणाणुमइ, विसयमणुचिंतणं चउब्भेयं। अविरयदेसासंजय, जणमणसंसेवियमहण्णं ॥ १॥

एवं करणकारणानुमतिविषयं पर्यालोचनं चतुर्भेदमिति रौद्रध्यानं स्यात्। अविरताः सम्यग्दृष्टयः देशासंयताः श्रावकास्त एव जनास्तेषां मनांसि तैः संसेवितं संचिंतितमधन्यमश्रेयस्करं पापं निंद्यमिति।१।

अस्य चत्वारि लिंगानि तद्यथा—'हिंसादिषु एषु चतुर्षु यदेकादिसेवनं भूयो भूयः तदाद्यं १। एषु चतुर्ष्वपि प्रवृत्तिस्तत् २। कुशास्त्रं श्रुत्वाऽज्ञानतो वा हिंसात्मकयागादिषु धर्मबुद्ध्या प्रवर्त्तनं तल्लिंगं ३। मरणांतं यावद्धिंसादेरनिवर्त्तनं कालशौकरिकादिवत् तत् ४। यद्वा विचारामृते उक्तं—

"रौद्रस्मृतेस्तंदुलनाममीनो, हिंसादिदुष्कर्म विनापि याति ।
असंख्यदुष्कर्मपरानुभूतं, तथैव भूयो नरकं दुरंतम् ॥ १ ॥

तथा रौद्रध्यानविषये कुरुकुरुटसंबंधोऽयं—

"कुणालानगर्याः खालाभ्यर्णे द्वौ ऋषी कायोत्सर्गेण स्थितौ । तन्महिम्ना मेघो नगरस्य बहिर्वर्षति साध्वोर्जलोपसर्गो मा भवत्विति । लोकैः संभूय तावुपद्रुतौ । 'युवयोर्महिम्ना नगरे महातापोऽस्ति, अरिष्टमेतदस्माकं' । इत्युक्त्या तयोर्ध्यानभंगो जातः, तेषामुपरि रौद्रध्यानमुत्पेदे, तेन ताभ्यां ताभ्यामयं श्लोकः प्रोक्तः—

"वर्ष मेघ कुणालायां, दिनानि दश पंच च । मुशलप्रमाणधाराभि–र्यथा रात्रौ तथा दिने" ॥ १ ॥

एतत्कथनानंतरं जलैः पुरं प्लावितं तरदुदधौ गतं, तौ ऋषी अपि नगरजलेन प्लावितौ अशुभध्यानेन सार्द्धं स्वदेहौ मोहतुः भव्यभावाभ्यां भ्रमितौ तौ नरकं जग्मतुः ।

आर्त्ताद्यपध्यानवलाहकस्य, वृष्टिं प्रतन्य व्रतिनौ ह्यभावात् ।
क्रांत्याः पुरप्लावयनं विधाय, तौ प्रापतुः श्वभ्रमनर्थदंभात् ॥ १ ॥

॥ इत्यब्ददिनपरिमितहितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थस्य वृत्तौ
नवमे स्तंभे एकत्रिंशदुत्तरशततमं व्याख्यानम् ॥ १३१ ॥

॥ द्वात्रिंशदुत्तरशततमं व्याख्यानम् ॥ १३२ ॥

अथ द्वितीयभेदोऽयं—'पापकर्मोपदेशिता' पापकर्माणि—क्षेत्रे खननं कुरु, हलफालादि सज्जीक्रियतां, वृषान्दमय, शत्रून्मारय, इमां कन्यकां विवाहय—इत्यादीनि, तेषामुपदेशः । श्रूयते हि—'कृष्णचेटकादीनां स्वापत्यविवाहेऽपि नियम इति २ ।

तथा "हिंसोपकारिदानं च"—हिंसायोग्योपकरणानि शकटशस्त्रघरट्टोदूखलमुशलदातरूकृपाणिकांकुशिकाकुद्दालरेचकौषधव्रणकृम्यादिघातहेतुगर्भशातनपातनाद्यर्थं मूलद्वारादिदानमित्यादीनि हिंसाधिकरणानि तेषां दानं, यथा—'द्वारवत्यां धन्वंतरिवैद्यो बहुसावद्यात्मकः, द्वितीयो वैतरणी मूलपुष्पादिबहुजीवहिंसात्मकोऽपि ग्लानमुनीनां निरवद्यं ददाति भैषजं । एकदा कृष्णो जिनं पप्रच्छ—'स्वामिन् ! वैद्यानां का गतिः ? यतो लोका अपि पठंति—

"कवि चित्रकर पारधी, वली विशेषे भट्ट । गांधी नरक सधावीया, वैद्य देखाडे वट्ट" ॥ १ ॥

अस्मन्नगरवासिनौ धन्वंतरिवैतरणिनौ, तयोः क्व गतिर्भाविनी ?'। 'हे नृप ! आद्योऽप्रतिष्ठानप्रस्तटे; द्वितीय आरंभं कुर्वन्नपि मनसा बिभेति किंचिदतः वनवानरत्वं प्राप्स्यति, तत्र मुनिं कंटकविद्धपादं वीक्ष्य जातिस्मृत्या च शल्योद्धरिण्यौषध्या निःकंटकं करिष्यति, मुनिप्रोक्तधर्मोपदेशात्पूर्वकृतपापान्यालोच्य त्रिदिनानशनेन वानरः सहस्रारं प्राप्स्यति, आद्यस्तु षट्कायहिंसातः पुनः पुनस्तत्रैवोत्पत्स्यते, कपर्दिकानंततमे भागे च क्रयविक्रयत्वं प्राप्स्यति इति तृतीयभेदः ३ ।

तथा "प्रमादाचरणं तथा" प्रमादा मद्यादयः पंच तेषामंगीकरणं, यतः—

"मज्जं विसयकसाया, निद्दा विकहा य पंचमी जणिया । एए पंच पमाया, जीवं पाडंति संसारे" ॥ १ ॥

मद्यं मदिरा उपलक्षणाद्यजनमांससरकताड्यादिपरिग्रहः । मद्यं लोकोत्तरे निंद्यं, यतः—

"गायति भ्रमति वक्ति गद्गदं, रौति धावति विगाहते क्लमम् ।
हंति हृष्यति न बुध्यते हितं, मद्यमोहितमतिर्विषीदति" ॥ १ ॥

तथा संबोधसित्तरिवृत्तौ—मद्यमत्तकृष्णपुत्रेभ्यो जातः दोषो यथा—

"बत्तीसुत्तरसयसंखसु, कुलकोडी जायवजणस्स । बारवइएमहा—वज्जगिरिनिवायखयहेऊ ॥ १ ॥

षट्पंचाशत्कुलकोट्यः पुरमध्यवर्त्तिन्यः द्वासप्ततिकुलकोट्यः पुरपार्श्ववर्त्तिन्यः ये संयमं प्रतिपन्नास्तान् विहाय दूरं गतास्तेऽप्याकृष्य वह्नौ हुताः चतुःकोट्यः कुलानां । कुलसंख्येयं—एकस्य यादवस्य गृहाद-ष्टोत्तरशतं कुमारा निःसरंति तदेका कुलकोटिः, इति वृद्धमुखात् श्रूयते, तत्त्वं तु बहुश्रुता विदंति, इति मद्याख्यप्रमादः ॥ १ ॥ तथा विषयाः शब्दादयः पंच, यतः—

"विषयव्याकुलचित्तो, हितमहितं वा न वेत्ति जंतुरयं ।
तस्मादनुचितचारी, चरति चिरं दुःखकांतारे ॥ १ ॥

इति द्वितीयः । २ । कषायाः—कषः संसारस्तस्य लाभो येभ्यस्ते कषायाश्चत्वारस्तेषां स्वरूपमग्रे वक्ष्यते इति ३ । निद्रा स्वापः सा पंचधा, यतः—

"सुखप्रबोधा निद्रा स्या—दन्या दुःखप्रबोधिका । निद्रानिद्रा प्रचला च, स्थितस्योर्ध्वस्थितस्य वा" ॥१॥
"गच्छतोऽपि जनस्य स्या—त्प्रचलाप्रचलाभिधा । स्त्यानर्द्धिर्वासुदेवार्द्ध—बलाऽहर्चिंतितार्थकृत्" ॥२॥
स्त्याना संघातीभूता गृद्धिर्दिनाचिंतितार्थविषयाभिकांक्षा यस्यां सा स्त्यानगृद्धिरिति तु कर्मग्रंथावचूर्णौ—
"आद्यसंहननापेक्ष—मिदमस्यां बलं मतम् । अन्यदा तु वर्त्तमान—युवभ्योऽष्टगुणं भवेत्" ॥ १ ॥
अयं कर्मग्रंथवृत्त्या अभिप्रायः । जीतकल्पवृत्तौ तु यदुदये सति अतिसंक्लिष्टपरिणामादिनाऽदृष्टमर्थ-मुत्थाय प्रसाधयति, केशवार्द्धबलश्च जायते, तदनुदयेऽपि च शेषनरेभ्यस्त्रिचतुर्गुणं बलं भवति । इयं नरकगामिन एव स्यादित्युक्तमस्तीति । अत्रार्थे ज्ञातानि महाभाष्योक्तानि यथा—
"पोग्गलमोयगदंते, फरूसगवडसालभंजणे चेव ।
थीणद्धियस्स एए, आहरणा हुंति नायव्वा ॥ १ ॥
पौद्गलं मांसं सिद्धांतभाषया, तस्योदाहरणं यथा—'कोऽपि कुटुंबिको मांसासक्तः । कैश्चित्स्थविरैः प्रबोध्य दीक्षां ग्राहितः । स कदाचित् क्वचित्स्थले महिषवधं प्रेक्ष्य तदभिलाषेणैव रात्रौ सुप्तः, ततस्त्या-नर्द्धिनिद्रोदयो जातस्तदुदये चोत्थाय गत्वाऽन्यं महिषमेकं हत्वा चाभक्षयत् । तदुद्धरितशेषं च मांसं समानीयोपाश्रये निधाय सुप्तः । प्रगे गुरुं प्राह—'इत्थंभूतो मया स्वप्नो दृष्टः' । ततः साधुभिस्तदामि-षमदृश्यत । पंचमीनिद्रोदयोऽस्यास्ति इति ज्ञातं च । संघेन लिंगमपहृत्य विसर्जितोऽसाविति ॥ १ ॥
तथा एकः साधुः श्रावकगृहे मोदकान् वीक्ष्य तदीहापरः सुष्वाप । अंतिमनिद्रोदये रात्रौ तद्गृहं

गत्वा स्फोटयित्वा कपाटान् तान् नक्षयित्वा शेषं पतद्गृहे क्षिप्त्वा एत्य सुप्तः, उत्थितेन तथैवालोचितं। पुनस्तत्प्रत्यक्षेण गुरुर्निर्दिष्टं, 'अंतिमनिद्रोदयः' इति ज्ञात्वा तथैव विसर्जितः । २ ।

तथा एकः साधुर्दिवा द्विरदेन खेदितः कथमपि नंष्ट्वोपाश्रयमागतः । दंतिनं प्रति सकोप एव निशि सुप्तः । तन्निद्रोदये च पुरकपाटे भंक्त्वा हस्तिनं व्यापाद्य दंतौ गृहीत्वा स्वस्थले क्षिप्त्वा सुप्तः । प्रभाते तं संयमेऽयोग्यं ज्ञात्वा तथैव निष्कासितः । ३ ।

फरूसगः कुंभकारः समयवाच्या । यथा—एकः फरूसगो महति गच्छे प्रव्रजितः । अन्यदा तन्निद्रायां यथा पूर्वं मृत्पिंडानतोरूयत्, तद्वत्साधूनां शिरांसि त्रोटयित्वा कबंधैः सहैकांते उज्झांचकार । ततः शेषाः केचन मुनयोऽपसृताः । प्रगे तत्सर्वं ज्ञात्वा संघेन दूरीकृतः । ४ ।

तथा कश्चित्साधुः गत्यागतिकाले एकं वटवृक्षं दुःखदं मत्वा तन्निद्रायां तं भंक्त्वा स्वस्थले निक्षिप्य सुप्तः । 'स्वप्नो दृष्टः' इत्यालोचिते तज्ज्ञाते लिंगापनयनतः गणाद्बहिष्कृतः । ५ । इति विशेषतो ज्ञातानि निशीथादवसेयानीति—

अथ सामान्यतः निद्रादोषश्चायं—

"सर्वगुणघातिनी निद्रा, निद्रा संसारवर्द्धनी । निद्रा प्रमादजननी, तस्मात्त्याज्या बुधैः सदा" ॥ १ ॥

तथा मुनिधार्मिकाणां विनिद्रत्वं श्रेष्ठं, यतः—पंचमागमे श्रीवीरशय्यातरी श्राविका मृगावतीपति-भगिनी जयंत्याख्या प्रभुं प्रति प्रश्नमिदमकरोत्—'सुत्तत्तं भंते साहु जागरिअत्तं साहु ?' 'जयंति ! अत्थे-

गइआणं सुत्तत्तं साहु, अत्थेगइआणं जागरिअत्तं साहु । जे इमे जीवा अहम्मिआ अहम्माणुआ अहम्मेण चेव वित्तिं कप्पेमाणा विहरंति एएसि णं जीवाणं सुत्तत्तं साहु, एएसिं जीवा सुत्तासमाणा णो बहूणं जीवाणं पाणाणं भूआणं सत्ताणं दुक्खणं जाव वट्टंति । एएसिं जीवा सुत्ता समाणा अप्पाणं परं वा तदुभयं वा नो बहुहिं अहम्मिएहिं संजोअंति, एएसिणं सुत्तत्तं साहु । जयंति ! जे इमे जीवा धम्मिया जाव धम्मेणं चेव वित्तिं कप्पेमाणा विहरंति, एएसिणं जीवाणं जागरिअत्तं साहु—इत्याद्यालापकः । एवं बलिअत्तं दुब्बलिअत्तं दक्खत्तं आलसत्तं इच्चाइ, यावज्ज्ञेयं इति चतुर्थः । ४ ।

सामस्त्यपूर्वश्रुतपोऽपि साधुर्विस्मार्य ( विस्मृत्य ) ग्रंथान् प्रमिलादियोगात् ।
कालं निगोदेषु वसत्यनंतं, निद्रादिदोषांश्च विमुंच सूरे ॥ १ ॥

॥ इत्यब्ददिनपरिमितहितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थस्य वृत्तौ नवमे स्तंभे द्वात्रिंशदुत्तरशततमं व्याख्यानम् ॥ १३२ ॥

## ॥ त्रयस्त्रिंशदुत्तरशततमं व्याख्यानम् ॥ १३३ ॥

अथ विकथाख्यं पंचमं प्रमादमाह—

राज्ञां स्त्रीणां च देशानां, भक्तानां विविधाः कथाः । संग्रामरूपसद्वस्तु—स्वादाद्या विकथाः स्मृताः ॥१॥

राज्ञां संग्रामादिवर्णनं राजकथा। यथायं नृपो भीमवद्युद्धकारकः सुचिरं राज्यं करोतु, अथवायं नृपो दुष्टः म्रियतामित्यादि ज्ञेयं। १। तथा च स्त्रीणां कथा तद्रूपनिंदाप्रशंसादिरूपा यथा—

"द्विजराजमुखी गजराजगति—स्तरुराजविराजितजंघतटी।
यदि सा दयिता हृदये वसति, क्व तपः क्व जपः क्व समाधिरिति" ॥ १ ॥

तथा—

"करहगई कागसरा, दुब्भगा लंवजठरपिंगदसी। दुब्भीला दुब्भासी, विहिको नियई थीइसुहं ॥ १ ॥

तथा देशजातिकुलरूपनामनेपथ्यपरिजनकथा स्त्रीणां संबंधिनी न कार्या। तत्र देशसंबंधेन स्त्रीणां वर्णनं यथा—'लाटोद्भवा मंजुलवचना रतिनिपुणाश्च भवंति' इत्यादिका, तथा जातिविकथा—'धिग्ब्राह्मणीः, या विधवा जीवन्ति मृता एव धन्या मन्ये, पुंश्चली पतिलक्षेऽप्यनिंदिता'। तथा कुलकथा—"अहो चौलुक्यपुत्रीणां, साहसं जगतोऽधिकम्। पत्युर्मृत्यौ विशंत्यग्नौ, याः प्रेमरहिता अपि"॥ १ ॥

रूपकथा—'रूपशोभावर्णनं'। नामकथा—'यादृशं नाम तादृशः परिणामः' इति। नेपथ्यकथा—'धिक् धिक् नारीरूपं यद्यौवनं नेपथ्यं च न यूनां चक्षुर्मोदाय भवति'। परिजनकथा—'अस्याश्चेटीदासादिपरिकरो दक्षो विनीतश्च' इत्यादिस्त्रीकथा त्याज्या इति। २।

देशानां कथा—'यथा—

"रम्यो मालवकः सुधान्यकनकः कंच्यास्तु किं वर्ण्यते?, दुर्गा गुर्जरभूमिरुद्भटभटा लाटाः किरातोपमाः।

काश्मीरे वरमूर्खता सुखनिधौ स्वर्गोपमाः कुंतला—वर्ज्यादुर्जनसंगवद्बुधधिया दैशी कथैवंविधा" ॥१॥

इति ३ । तथा भक्तानां कथा स्वादादिसंबंधिनी यथा—'अहो अनेन विवाहादिकार्ये वर्या रसवती कृता, व्यंजनादिस्वादोऽद्यापि दंष्ट्रामध्येऽस्ति । अथवा ज्वलत्वनेन कृतं पक्वान्नादिकं, एकं पर्पटादिकं मुक्त्वा सर्वमनिष्टं कृतमभूत्' इत्यादि स्वयमभ्यूह्यं । ४ । इति चतस्रो विकथाः स्मृताः । संबोधसित्तरीवृत्तौ तु सप्तविधास्तद्यथा—'चतस्रस्तु पूर्वोक्ता एव तिस्रस्त्विमाः—श्रोतृजनहृदयमार्दवजननान्मृद्वी सा चासौ पुत्रादिप्रजाप्रधानत्वात्कारुण्यवती मृडकारि(रु)णिकी यथा—

"हा पुत्त पुत्त हा वच्छ वच्छ मुक्कामि कह मणाहाहं । एवं करुणपलावा, जलंतजलणंमि सा पडिया ॥१॥

दर्शनभेदिनी ज्ञानाद्यतिशयतः कुतीर्थिकप्रशंसारूपा, यथा—सूक्ष्मार्थबुद्धिदृष्टं श्रोतव्यं बुद्धशासनं इत्यादि २ ॥ चारित्रभेदिनी कथा—यया कथया प्रतिपन्नव्रतस्य व्रतार्थमुपस्थितस्य वा चारित्रभेदः क्रियते यथा—केवल्यादिरहितेऽधुना काले तस्य शुद्धाशुद्धं भावं चरणं को जानाति ? अन्यच्च—

"जह मंचाओ पडियस्स, देहपीडा सुयोविया होई । गिरिसिहराओ महंती, तहणंतभवो तओ भट्ठे" ॥१॥

तथा—

"काले पमायबहुले, दंसणनाणेहिं वट्टए तित्थं । वुच्छिन्नं च चरित्तं, तो गिहिधम्मो वरं काउं" ॥ १ ॥

इति । ३ । अत्र श्लोके तु आवश्यकादिसूत्रप्रसिद्धत्वाच्चतस्र एव संदर्शिता इति । अत्र विकथाविषये रोहिणीसंबंधः मागधीप्राकृतभाषात उद्धृत्यात्र लिख्यते—

कुंरूनपुर्यां सुन्नडश्रेष्ठी, तस्य पुत्री रोहिणी नाम्ना बालविधवा गुरुपार्श्वेऽध्ययनं कुर्वती कम्मपयम्नी-प्रमुखग्रंथान् कंठे स्वनामपाठवदकरोत् । अजस्रं त्रिसंध्यं जिनार्चां द्विसन्ध्यमावश्यकं च नामुंचत् । नित्यं पठंती साधिकलक्षस्वाध्यायपातिनी जाता । इतश्च कुबोधदूतः स्वं नृपं चित्तपुरवासिनं मोहभूपं व्यजिज्ञपत्—'स्वामिन् ! युष्मद्दोषान्पुनः पुनः सर्वेषां ज्ञापयति इयं रोहिणी' तच्छ्रुत्वा मोहनृपः रागद्वेषसुतयोर्मिथ्यात्वमंत्रिणोऽष्टादशपापस्थानादिसन्यानां पुरः रुरोद गद्गदवाण्या चाह—'अहो ईदृशः कोऽपि नास्ति यो मदाज्ञाखंडिनीं रोहिणीं असद्वैरिचारित्रधर्मनृपमिलनोत्सुकां वशीकृत्य मम ददाति'। तत एकत्र कोणे स्थिता मोहभार्या कुदृष्टिस्तस्याः सखी विकथा योगिनी उवाच—'स्वामिन् ! अल्पकार्ये युष्माकं खेदो न योग्यः, यतः—युष्मदीयैकैकेन सेवकेन सम्यक्त्वव्रतश्रुतपूर्णा गुणेभ्यः पातितास्तेऽद्यापि स्वामिपादपुरः धूलिवद्धुलंति, तेषां संख्यामपि न कोऽपि जानाति। यतः जीवानुशासनवृत्तौ—चतुर्दशपूर्वधराः श्रुतकेवलिनश्चानंतकाये पतिता निवसंति तिष्ठंति पूर्वगतसूत्राभावे मृत्वेति शेषः । तस्मात् हे नृप ! कियन्मात्रेयं वराकिका रोहिणी ? इति प्रोच्य मोहेन दत्तामाशिषं गृहीत्वा विकथा एत्य तन्मुखे चित्ते चावसत्, तेन सा रोहिणी सर्वत्र धर्मकार्ये विकथामकरोदकारयच्च । एकदा साधुभिः साध्वीभिश्च सा शिक्षिता—'हे श्राविके ! त्वं सुज्ञा तवेदं नार्ह, यतः—

"यदीच्छसि वशीकर्त्तुं, जगदेकेन कर्मणा । परापवादसस्येभ्य—श्चरन्तीं गां निवारय ॥ १ ॥

तदाकर्ण्य क्रोधं प्राप्ता शनैः शनैः सर्वं मोहसैन्यं समायातं विकथां प्राशंसत् । अथ सा विकथा-

न्विता सर्वं पठनादिकं मुमोच । एकदा राजपथे स्थिता रोहिणी नृपस्त्रीदोषं प्राह, राज्ञीदास्याः तच्छ्रुत्वा नृपं प्रत्यवोचत् । ततः नृपेण सुभद्रश्रेष्ठिनमाकार्य पृष्टं—'मद्भार्यायाः कुशीलत्वं त्वत्पुत्र्या कुत्र दृष्टं ज्ञातं च कथं ?' स प्राह—'स्वामिन्नस्याः स्वभावो दुष्टोऽस्ति' । ततः कुपितेन नृपेण सा नगराद् बहिर्विसर्जिता, अरण्ये दुःखमनुभूय मृता व्यंतरदेवी अपरिगृहीता जाता । तत्रान्यदेवकृतदुःखमनुभूयैकेंद्रियादिष्व-नंतकालं भ्रांत्वा तज्जीवो भुवनभानुकेवलित्वं प्रापेति ।

एवं ज्ञात्वा दुःकथाव्यापृतानां, दुःखानंत्यं दुस्तरं देहभाजाम् ।
वैराग्याद्यैर्बंधमुक्त्याऽभियुक्ता, नित्यं वाच्याः सत्कथा एव भव्यैः ॥ १ ॥

॥ इत्यब्ददिनपरिमितहितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थस्य वृत्तौ नवमस्तंभे त्रयस्त्रिंशदुत्तरशततमं व्याख्यानम् ॥ १३३

॥ चतुस्त्रिंशदुत्तरशततमं व्याख्यानम् ॥ १३४ ॥

अथ सामान्यतः प्रमादाचरणमेव चतुर्थभेदो विशिष्यते

जीवाकुलेषु स्थानेषु, मज्जनादिविधापनम् । रसदीपादिपात्राण्यालस्यात् स्थगयते न हि ॥ १ ॥
उल्लोचं नैव बध्नाति, स्थाने महानसादिके । सर्वमेतत्प्रमादस्या-चरणमभिधीयते ॥ २ ॥

जीवाकुलस्थानानि—यत्र लीलफूलपिपीलिकामत्कोटककुंथुप्रमुखानां पण्णां जीवानां हिंसा स्यात्तानि, तेषु न्रूमिपटलकादिषु मज्जनं स्नानकरणं न योग्यं, यतः एकादशीपुराणे—

"गृहे चैवोत्तमं स्नानं, जलाच्चैव सुशोधितात् । ततस्त्वं पांरूवश्रेष्ठ ! गृहे स्नानं समाचर" ॥ १ ॥

"कूपे ह्रदेऽधमं स्नानं, नद्यामेव च मध्यमम् । वाप्यां च वर्जयेत्स्नानं, तटाके नैव कारयेत्" ॥ २ ॥

"पीड्यंते जंतवो यत्र, जलमध्ये व्यवस्थिताः । स्नाने कृते ततः पार्थ, पुण्यं पापं समं न्रवेत्" ॥ ३ ॥

तथा ब्रह्मांरूपुराणे—

"ज्ञानं तीर्थं धृतिस्तीर्थं, दानं तीर्थमुदाहृतम् । तीर्थानामपि तत्तीर्थं, विशुद्धिर्मनसः परा" ॥ १ ॥

तथा विष्णुपुराणे—

"आपः स्वन्रावतो मेध्याः, किं पुनर्वह्नितापिताः । ऋषयस्तत्प्रशंसंति, शुद्धिमुष्णेन वारिणा" ॥ १ ॥

तथा मनुस्मृतौ—

"चित्तमंतर्गतं दुष्टं, तीर्थस्नानैर्न शुध्यति । शतशोऽपि जलैर्धौतं, सुरान्रांरूमिवाशुचि" ॥ १ ॥

"सत्यं शौचं तपः शौचं, शौचमिंद्रियनिग्रहः । सर्वन्रूतदया शौचं, जलशौचं च पंचमम्" ॥ २ ॥

तथा नागरखंरू—

"दृष्टिपूतं न्यसेत्पादं, वस्त्रपूतं पिबेज्जलम् । सत्यपूतं वदेद्वाक्यं, मनःपूतं समाचरेत्" ॥ १ ॥

गृही यदि स्नानं करोति तदा दिवसे यतनयैव, न तु रात्रौ । आदिशब्दाल्लघुनीतिवडीनीतिकरणं, तदपि निर्जीवभूमिकायामेवेत्यादि स्वधिया ज्ञेयं चेति ।

तथा आलस्याद्रसाः—घृततैलतक्रदुग्धजलादयो रसाश्च, दीपः आदिशब्दाद्भूपभोजनादयस्तेषां पात्राणि भाजनानि न स्थगयति न पिधत्ते, स्थगितान्येव रक्षणीयानीत्यर्थः । १ ।

तथा महानसादिके स्थाने उल्लोचो वितानश्चंद्रोदय इति पर्यायाः, तं नैव बध्नाति एतत्सर्वं प्रमादाचरणं, यतः—'गृहिणा शयनस्थाने भोजनपाकस्थले जलरक्षणस्थाने देवगुरुधर्मस्थाने चावश्यं उल्लोचो बध्यः सद्यो जीववधादिबहुदोषहेतुत्वात् । अत्र निदर्शनं यथा—

श्रीपुरे श्रीषेणो राजा तस्य पुत्रो देवराजो देवराज इवापरः । स यौवने दैववशात्कुष्ठी जातः । ससवर्षावधि विविधप्रतिकारैरपि नं गतो रोगः, चिकित्सकैस्त्यक्तः । ततो 'यो मत्तनयं नीरुजं करोति तस्यार्द्धं राज्यं ददामि' इति नृपः पटहमवादयत् । तत्र यशोदत्तेभ्यपुत्री शीलादिव्रतरक्ता, तया पटहं निवार्य स्वकरस्पर्शेन कुष्ठः स्फोटितः । ततस्तयोः पाणिग्रहणमहं कृत्वा पुत्रं राज्ये निवेश्य च दीक्षामाददे राजा । तत्रैकदा पोट्टिलाचार्याः समेयुः । गुरुवंदनार्थं नृपराज्ञ्यौ जग्मतुः, देशनांते प्राग्भवं पप्रच्छतुः । गुरुराह—

"वसंतपुरे व्यवहारिणो देवदत्तस्य धनेश्वरादयश्चत्वारः पुत्रा माहेश्वराः । इतश्च मृगपुरे जिनदत्तसुता मृगसुंदरी, तस्या अभिग्रहत्रयं—जिनानर्चित्वा मुनीनां दानं दत्वा च भोक्ष्येऽहं,

रात्रौ च न भोदये । अन्यदा व्यवसायार्थं धनेश्वरो मृगपुरे ययौ । तत्र सा श्राद्धसुता दृष्टा, तस्यानुरागो जज्ञे, 'मिथ्यात्विने मेऽस्याः पिता न प्रयच्छति' इति विचार्य कपटश्रावकीभूय कथमपि तां परिणीय च स्वगृहे आनयत् । धर्मेर्ष्यया जिनपूजादौ निषिद्धा, तेन तस्या उपवासत्रयं बभूव । तया गुरवः पृष्टाः, गुरुभिर्लाभालाभं विचार्योक्तं—'त्वं चुल्लकोपरि चन्द्रोदयं बंधय, तथा भावतः पंचतीर्थस्तुत्या पंचसाधुदानेन च नित्यं पूर्वनियमसदृशं फलं जायते' तया तथा कृतं । श्वशुरादिभिः किमपि कार्मणमनया कृतमिति विचार्योक्तं धनेश्वराय, तेन स उल्लोचो ज्वालितः, तया द्वितीयो बद्धः सोऽपि ज्वालितः, एवं सप्त दग्धाः । ततः श्वशुरेणोक्तं—'भद्रे ! किमर्थमयं प्रयासः' तयोक्तं—'जीवदयार्थं' पुनस्तेन सरोषमुक्तं—'तर्हि पितृगृहे गच्छ' । तयोक्तं—'सकुटुंबेन त्वयाऽहं पितृगृहे मोच्या' । ततः सर्वेऽपि चलिताः । क्वापि मार्गग्रामे श्वशुरपक्षीयैः प्राघूर्णकार्थं रात्रौ पाकः कृतः । सा वधूर्बहु कथनेनापि न भुंक्ते । ततो यस्य गृहे जातं तस्यैव कुटुंबेन भुक्तं मृतं च । प्रातर्यावद्विलोकते तावदन्नस्थाल्यां सर्पो दृष्टः, सर्वैराचिंति—'रात्रौ पाके धूमाकुलः सर्पोऽन्नभाजने पपातेति' पश्चाद्वधूः क्षमिता, तयोक्तं—'अत एव चुल्लकोपरि चंद्रोदयं ददे, रात्रौ च न भुंजेऽहं' ततस्ते प्रतिबुद्धाः सर्वेऽपि जीवितप्रदानात्तां कुलदेवीमिव मन्वानाः पश्चादाययुः । तौ दंपती धर्ममाराध्य स्वर्गं गतौ । ततश्च्युत्वा युवां जातौ । त्वया प्राग्भवे सप्त चंद्रोदया दग्धास्तेनात्र सप्तवार्षिको व्याधिस्तेऽभूत्"। तत उभयोर्जातिस्मृतिर्जाता। पुत्रे राज्यं न्यस्य प्रव्रज्य च स्वर्गं गतौ॥

निद्रापयःस्थानमहानसादिके, चंद्रोदयं साधुजिनेंद्रभूमिषु ।
बध्नाति यो भाववशेन धार्मिकः प्राप्नोति सत्कष्टपवितानमन्तिमम् ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थस्य वृत्तौ नवमस्तंभे चतुस्त्रिंशदुत्तरशततमं व्याख्यानम् ॥ १३४ ॥

## ॥ पंचत्रिंशदुत्तरशततमं व्याख्यानम् ॥ १३५ ॥

अथ पुनः प्रमादाचरणमेव दर्शयति—

अव्रतप्रत्ययिबंधं, प्रत्याख्यानेन वारयेत् । सर्वमयत्नतोऽकार्यं, तथा द्यूतादिसेवनम् ॥ १ ॥
कुतूहलान्नृत्यप्रेक्षां, कामग्रंथस्य शिक्षणम् । सुधीः प्रमादाचरण—मेवमादि परित्यजेत् ॥ २ ॥

अविरत्या यो बंधः कर्मणां, तं प्रत्याख्यानं कृत्वा वारयेदित्यर्थः । यतः—चातुर्गतिकापारसंसारे पर्यटद्भिः सत्वैर्यानि यानि देहायुधेष्टिकाकाष्ठास्थीनि पूर्वमुक्तानि, तैस्तैः शरीरैर्यदाऽन्यजीववधाद्यनर्थं स्यात्तदा तत्पूर्वमुक्तदेहस्वामी भवांतरप्राप्तोऽपि तत्सत्ताद्यपरित्यागात्तत्पापेन लिप्यते, तत्पापं यत्र गतस्तत्र समागच्छत्यविरत्या चेति तत्त्वं । यदुक्तं पंचमांगपंचमशतकषष्ठोद्देशके—'पुरिसेणं धणू परामुसति उसु परामुसति उड्ढं उविहति उड्ढं उविहिते समाणे जाई तत्थ पाणा अभिहणति तएणं भंते से पुरिसे कति किरिए? गोयमा ! पंचहिं किरिआहिं पुढे, तेसिंपिअ जीवाणं सरीरेहिंतो धणू निवत्तिए तेविअ जीवा पंचहिं

किरिआहिं पुण इत्यादि ज्ञेयं । यो नरः धनुः इषुं च गृहीत्वा मुंचति तेन स पंचभिः क्रियाभिः स्पृष्टः, परं यैर्जीवदेहैर्धनुरादि जातं ते जीवा अपि पंचभिः क्रियाभिः स्पृष्टाः अत्राह—ननु मुंचतो नरस्य तद्युक्तं, परं अन्येषां कथं ताः कायमात्रस्यापि तदानीमचेतनत्वात् गुरुराह—तज्जीवानामपि ताः क्रियाः स्युः, तेषामविरतत्वात् । एवं चेत्तर्हि सिद्धानामपि बलात्तद्बंधः, सिद्धदेहानामपि जीवघातहेतुत्वात्कुत्रचित् । यद्वा यथा धनुरादीनि पापकारणानि स्युस्तद्देहकर्तृकजीवानां तथा पात्रदंडादीनि जीवरक्षाहेतुत्वेन पुण्यनिमित्तानि स्युर्न्यायस्य समानत्वात् । अत्रोच्यते—अविरतिभावाद्बंधस्तस्य, तेषां च सिद्धानां सर्वसंवरत्वान्नास्ति बंधः । पात्रादिसत्त्वानां विवेकाद्यभावान्न पुण्यबन्धः । अथवा परमेश्वरवाक्यात्सर्वं तथ्यमिति । तस्मादनंतरभवांतरे देहशस्त्रादीन्यप्यधिकरणत्वात्प्रत्याख्येयानि इति भावार्थः । तथा यत्नतः सर्वक्रियां परिहरेत् स्वकार्यार्थं विहितमपि ज्वलदिंधनादिकं विध्यापयेत् । 'नन्वग्निविध्यापनेऽपि दोष एव' सत्यं, परं दिग्मुखशस्त्रत्वादन्येषां त्रसादीनां जीवानां वधो न स्यादतः विध्यापनीयः । तथा अशोधितेंधनभगणधान्यजलव्यापारणं, मार्गे सति हरितकाद्युपरि अशोधितमार्गगमनं, वृथा पत्रपुष्पत्रोटनं, भित्तिमध्यार्गलाकरणं, अयत्नेन कपाटार्गलादानं, अप्रासुकलवणग्रहणं, मुधा वृक्षशाखामृत्तिकादिमर्दनं, वस्त्रस्थितयूकादिजीवाननवेक्ष्य धापकायार्पणं, श्लेष्मादीनामुत्सर्गास्थगनमित्यादिकां सर्वामयत्नेन क्रियां न कुर्यात् । श्लेष्मादिषु मुहूर्त्तानंतरं बहुजीवोत्पत्तिः, यतः लोकप्रकाशे—

पुरिषे च प्रश्रवणे, श्लेष्मसिंघाणयोरपि । वांते पित्ते शोणिते च, शुक्रे मृतकलेवरे ॥ १ ॥
पूये स्त्रीपुंससंयोगे, शुक्रपुद्गलविच्युतौ । पुरनिर्द्धमने सर्वे—ष्वपवित्रस्थलेषु च ॥ २ ॥

गर्भजनरसंबंधिषु एषु वस्तुषु संमूर्छिममनुजा अंतर्मुहूर्त्तायुष्का अंगुलासंख्येयतमभागदेहाश्च सप्ताष्टौ वा प्राणभृतः समुत्पद्यंते । नव प्राणाः संग्रहिण्या अवचूर्णौ इति, तथा प्रज्ञापनायां आर्यश्यामास्तथैवाहुः। अतः श्लेष्मादीनां यतनया स्थगनमिति । तथा द्यूतादिसेवनं आदिशब्दात्सारिपाशिकगंजीफकसेत्रंजकक्रीडादि सप्तव्यसनानि वा, यतः—

"द्यूतं च मांसं च सुरा च वेश्या, पापर्द्धिचौर्यं परदारसेवा ।
एतानि सप्त व्यसनानि लोके, घोरातिघोरं नरकं नयंति" ॥ १ ॥

द्यूतादि कृतं हि पदे पदे विपत्स्यात् । अत्रार्थे प्रबंधोऽयं—

सिद्धपुरे पुरंदरनृपः । स चान्यदा सुंदरेण दुरोदरक्रीडां कुर्वन् राज्ञ्याऽमृतवाण्या वारितः—"हे नाथ! द्यूतान्नलपांडवादयो नृपाः पदे पदे निंदां प्रापुस्तेन निर्मोकं भुजंगममिव मुंचेदं दुरोदरं" इत्यादिना निषिद्धोऽपि कितवं न जहौ । अन्यदा जितराज्येन तस्यानुजेन पुरान्निष्काशितो देव्या पुत्रेण च युतः स राजा पथि व्रजन् काप्यरण्ये स्वशिरः अन्यस्य च प्रियां पणीकृत्य द्यूते जिगाय । कज्जलैर्जनितामिव श्यामलां दौर्भाग्यैर्निर्मितामिव कुरूपां भिल्लस्वामिनीमादाय पुरः प्रस्थितः । अथ सा 'सपत्नी वैरिणी'ति विचिंत्य जलग्रहणमिषेण तां राज्ञीं कूपांतः प्रक्षिप्य 'केनाप्यन्येन सह सा गता' इति भिल्ली पुरंदराय जगौ

स तत्खेदेन भिल्ल्या पुत्रेण च सहितोऽध्वनि गच्छन्नेकां महतीमापगां प्राप्य तां भिल्लीं सुतं च युगपदुत्तारयितुमशक्तो भिल्लीमादाय प्रविष्टो महामकरेण गिलितः । भिल्ली तु मृता । तद्भाराक्रांतः स मकरस्तटे लग्नो धीवरैश्च विदारितः, तस्योदरान्निर्गतः शीतवातैश्च लब्धसंज्ञो राजा धीवरैर्दासीकृत्य गृहे रक्षितः । अन्यदा स मीनग्रहणार्थं नदीं प्रविष्टो नदीपूरेण मृतः ।

इतश्च पथिकैः सा कूपान्निष्काशिता । सार्थेशेन पृष्टा यथाजातमवादीत् । भगिनीकृत्य समीपे रक्षिता । स राजपुत्रः कयाचिद्विद्याधर्या वैताढ्ये नीतः, बहुविद्यानां पात्रीकृत्य क्रमेण पितृराज्ये न्यधायि । अथैकदा सार्थेशस्तत्र समेतः । स्वपुरं ज्ञात्वा सार्थेशेन सह सा राज्ञी नरवेषं धृत्वा सभायां गता, स्वसुतमुपलक्ष्य मुदा स्थिता । राज्ञापि तां प्रेक्ष्य सार्थेशः पृष्टः पूर्वं वृत्तं प्राह । ततो मुदितेन राज्ञा पार्षद्यानां पुरः तत्पादौ प्रणम्य सा सुखविलासमयी कृता । ततो नगरमध्ये द्यूतादिनिवारणपटहो दापितः । स्वयमप्यनर्थदंडाद्विनिवृत्य स्वर्गतः ।

सर्पक्रीडामिवाक्रीडा—द्यूतक्रीडां करोति कः । यद्वशात्पार्थिवः प्राप्तो, विपदो हि पदे पदे ॥ १ ॥

तथा द्यूतादिकरणेन हास्यमौखर्यनिष्ठुरभाषणादिकं तु भवत्येव तेन वैरवृद्ध्यादि जायते । यथा पूर्वमत्रैव वर्णितकुमारपालभगिनीं प्रति भर्त्ता द्यूतक्रीडायां 'मारय मुंडकान्' इति हास्योक्त्या महानर्थं प्रापेति।

तथा कुतूहलान्नृत्यप्रेक्षणमुपलक्षणाद्गीतं वेश्यादीनां तथा भांडजालिकादीनां प्रेक्षणं मुधा पापनि-

बंधनं, तथा कामग्रंथस्य कोकशास्त्रगतासनमंत्रौषधकामोद्दीपनादिकस्य शिक्षणं । एवमादिप्रमादाचरणं सुधीर्धर्मज्ञः परित्यजेदिति द्वितीयश्लोकार्थः ।

अनर्थदंडोऽप ( शुन्न ) चिंतनादिकश्चतुर्विधोऽत्र ग्रथितः सदागमे ।
ततः प्रमादो गुणहानिहेतुको, विशेषमुच्यश्चरमे गुणव्रते ॥ १ ॥

॥ इत्यब्ददिनपरिमितहितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थस्य वृत्तौ नवमे स्तंभे पंचत्रिंशदुत्तरशततमं व्याख्यानम् ॥ १३५ ॥

॥ इति नवमः स्तंभः समाप्तः ॥

## ॥ दशमस्तंभे ॥

### ॥ षट्त्रिंशदुत्तरशततमं व्याख्यानम् ॥ १३६ ॥

अथैतद्व्रते पंचातिचारास्त्याज्याः, तानाह—

संयुक्ताधिकरणत्व-मुपभोगातिरिक्तता । मौखर्यमथ कौकुच्यं, कंदर्पोऽनर्थदंडगाः ॥ १ ॥

इत्यनर्थदंडव्रतगामिन एते पंचातिचाराः । संयुक्ताधिकरणत्वं—अधिक्रियते पृथ्व्यादिष्वात्माऽनेनेत्यधिकरणं अधिकरणांतरेण यथा खलेन मुशलं, हलेन फालः, धनुषा बाणः, शकटेन धूसरं, घरट्टिकापुटं द्वितीयपुटेन, कुठारेण दंडः, इत्यादिसंयुक्तमनर्थक्रियाकरणयोग्यं सज्जीकृतं तच्च तदधिकरणं च तस्य भावस्तत्त्वं । यतः आवश्यकबृहद्वृत्तौ—'सावगेण संजुत्ताणि चेव सगडादिणि न धरेयव्वाणि' एवं वासीपरश्वादि विन्यासते । असंपृक्ताधिकरणतायां सुखेन परः प्रतिषेधितुं शक्यते । तथाग्निरपि यदाऽन्यगृहेष्वन्यैः प्रज्वालितस्तदा ग्राह्यः । गृहापणारंभग्रामांतरगमनचतुष्पथाद्यस्त्रांचलेनास्थगितसर्वदृष्टिसमक्षं व्यंजनाद्यानयनमपि प्रथमं न कुर्यात्, परंपरापापवृद्धिः स्यात् । यतः—

कार्ये शुभेऽशुभे वापि, प्रवृत्तिर्यैः कृतादितः । ज्ञेयास्ते तस्य कर्त्तारः, पश्चादप्युपचारतः ॥ १ ॥

एतच्च हिंस्रप्रदानरूपस्यानर्थदंरुस्यातिचारः ॥ १ ॥ तथा उपन्नोगोपलक्षणत्वाङ्नोगवस्तूनां स्नानन्नोजनवसनाद्यतिरेकः तथा तैलान्यंगनादि चेत्यादिकः प्रमादाचरितवृत्तेरतिचारः । २ ।

तथा मुखरो वाचाटस्तङ्नावो मौखर्यमसन्यमसंबंधं बहुप्रलापित्वं, अयं च पापोपदेशस्यातिचारः, मौखर्ये सति तङुपदेशसंन्नवादिति । ३ ।

तथा कौकुच्यं—न्रूनेत्रौष्ठनासाकरचरणवदनादिविकारगर्न्नहास्यजनकं विडूचेष्टितं, येन परो हसति, आत्मनश्च लाघवं न्नवति ।न च तादृशं वक्तुं चेष्टितुं वा कल्पते प्रमादात्, तथाचरणाच्चातिचारश्चतुर्थः।४।

तथा कंदर्पः कामस्तङुत्पत्तिहेतुवाक्प्रयोगोऽपि कंदर्पः । इह च सामाचारिश्रावकेण न तादृशं वक्तव्यं, येन स्वस्य परस्य वा मोहोङेको न्नवतीति पंचमः । ५ । एतौ द्वावपि प्रमादस्यातिचारौ । अत्र निरतिचारव्रते निदर्शनमिदं—

बंधुरापुर्यां सूरसेनमहीसेनाख्यौ राजपुत्रौ सदाचारौ प्रीतिन्नाजौ सुखं तिष्ठतः । अन्यदा महीसेनजिह्वायां डुःसाध्यो गदः समुत्पन्नः, वैद्यास्तमसाध्यं मत्वा मुमुचुः । तस्य जिह्वागदडुर्गंधेनान्यर्णे कोऽपि स्थातुं न शक्नोति, सूरसेनः स्नेहात्सकाशे तिष्ठति । यदा गदार्त्त्या अरे अरे इति शब्दं करोति तदा न्राता प्राह—'हे बंधो ! सकलजगत्तारणसमर्थानेककर्मजालध्यानाग्निन्नस्मीकृतन्नवप्रपंचश्रीमत्सर्वज्ञस्मरणं कुरु'। तदनु स पंचनमस्कारं मनसा ध्यायति । मुक्तबंधुजीविताशः सूरसेनः अनेकपापनियमान् कारयित्वा प्रासुकजलेन तस्य जिह्वां सिषेच, मंदं मंदं सिंचनात्तद्गदो गतः। ततः यत्प्रत्याख्यानं कृतं, तदपालयत् ।

अन्यदा भद्रबाहुगुरोरागमनं श्रुत्वा तौ द्वौ वंदनाय गतौ । देशनां श्रुत्वा रोगकारणं पृष्टो मुनिरेवं जगौ—"मणिपुरे मदनाख्यसुभटस्य वीरधीराख्यौ तनयावभूतां, कदाऽपि तौ वने गतौ । वीरः स्वमातुलं वसंताख्यं मुनिं भूमौ पतितं वीक्ष्य जनानपृच्छत् । कश्चिदवोचत्—'एकः सर्पः कायोत्सर्गस्थमेनं मुनिं दष्ट्वा विले प्रविष्टः' मातुलस्नेहेन लघुना धीरेणोक्तं—'रे रंकाः ! किमयं नश्यन्नेव न हतः ?' । वीरस्तमुवाच—'भ्रातः ! किं मुधा कर्म बध्नासि ?' स प्राह—'मुनिदंशके सर्पे हते धर्म एव स्यात्' । यतः—

"दुष्टस्य दंडः स्वजनस्य पूजा, न्यायेन कोशस्य च संप्रवृद्धिः ।
अपक्षपातो रिपुराष्ट्रचिंता, पंचैव यज्ञा नृपपुंगवानाम्" ॥ १ ॥

क्षत्रियाणां न दोषः' द्वितीयः प्राह—'वंधो ! जैनानां तु यष्टिका न भंजंति पयःपात्रमपि, पयोऽपि न विशीर्यते, जीववधोऽपि न स्यात्तथा कार्यं । जीवानंदवैद्येनेव वाक्यमपि विचार्य वाच्यं । ततस्तद्वाक्यं सत्यं मत्वा उपचारेण मुनिः सज्जीकृतः । क्रमात्तौ मृत्वा युवां जातौ । अनालोचिततादृगनर्थदंडो महीसेनो धीरजीवो जिह्वारोगेण व्याप्तः कृपिसंजीवनात्त्वद्बन्धितोऽयं असामजोऽभूत् । इति श्रुत्वा जातिस्मृत्या मूलतोऽर्थानर्थदंडनिवारणाय मुनित्वं जगृहतुः ।

सूरसेनमहीसेन—दृष्टांतेनामुना जनाः ! । अनर्थदंडमागोनि—मित्तं त्यजत दूरतः ॥ १ ॥

॥ इत्यब्ददिनपरिमितहितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थस्य वृत्तौ दशमस्तंभे
षट्त्रिंशदुत्तरशततमं व्याख्यानम् ॥ १३६ ॥

## ॥ सप्तत्रिंशदुत्तरशततमं व्याख्यानम् ॥ १३७ ॥

अथानर्थदंडमेव वर्णयति—

अज्ञानमन्युदंभेभ्योऽ—नर्थदंडः प्रजायते । स चूर्ण्यो व्रतवज्रेण, चित्रगुप्तकुमारवत् ॥ १ ॥

स्पष्टार्थः, भावार्थस्तु श्लोकसूचितसंबंधाद्वद्यते स चायं—

कोशलेशो जयशेखरो नृपः, तस्य पुरुषदत्तपुरुषसिंहाख्यौ पुत्रावभूतां। तुल्यशीलगुणयोस्तयोः सख्य-मक्षिण्यां शिक्षितमिव ऐक्यप्रख्यमभूत् । यतः अर्थदीपिकायां—

“पाण्योरुपकृतिं सत्त्वं, स्त्रिया भ्रमगुनो बलम् । जिह्वाया दक्षतामक्ष्णोः, सखितां शिक्षयेत्सुधीः” ॥ १ ॥

तस्य नृपस्य वसुनामा गुरुः, तस्य चित्रगुप्तः पुत्रः कुतूहलप्रियोऽस्ति । अन्यदा नृपः सहसा विपन्नः, तदा राजन्यैर्ज्येष्ठराजसू राजा कृतः, कनिष्ठस्तु कनिष्ठराज्ये स्थापितः कथमपि । अथ राजा सभास्थ उवाच—‘यदियं सर्वार्द्धिर्मत्पित्रे शरणदा नाभूत्, तदा ममापि कथं भविष्यति’ ? । श्रुत्वाह तद्गुरुः—‘स्वपितुः श्रेयसे स्वर्णादिपुत्तलकानां गवां भुवां शय्योपानत्तिलकन्यादीनां च दानं भूदेवेभ्यो देयं, पुत्र-दत्तं फलं पिता प्राप्नोति इति श्रुतौ, अतो जनैः सुतः प्रार्थ्यते’ । ततः सर्वदर्शनिन आहूय नृपस्तेभ्योऽदात् । साधवो निमंत्रितास्ते प्राहुः—‘हे नृप ! जीवघातकृद्दातुं मुनीनां न योग्यं । यतो वंदारुवृत्तौ—

“तथाहि येन जायंते, क्रोधलोभादयो भृशम् । स्वर्णरूप्यं न तद्देयं, चारित्रिभ्यश्चरित्रहृत्” ॥ १ ॥

अन्यच्च—

"विभवो वीतसंगानां, वैदग्ध्यं कुब्रयोपिताम् । दाक्षिण्यं वणिजां प्रेमा, वेश्यानाममृतं विषम्" ॥ १ ॥

तथा हे नृप ! अमेध्यमत्ति, शृंगखुराद्यैर्जंतूनपि च हंति, तत्पश्वादिदानं कथं श्रेयसे इत्यादि ज्ञेयं, दानं त्वेकमभयदानमेव श्रेष्ठं, यतः—

"कपिलानां सहस्रं तु, यो द्विजेभ्यः प्रयच्छति । एकस्य जीवितं दद्यात्, कलां नार्हति षोडशीम्" ॥ १ ॥

परमन्यकृतधर्मकर्मफलमन्यः कथं प्राप्नोति, यतः—

"एकस्मिन् भुक्तवत्यन्यः, साक्षादपि न तृप्यते । मृतस्य कल्पते यत्तु, तद्भस्मनि हुतोपमम्" ॥ १ ॥

तत्कर्मकर्त्तारमेवानुवर्त्तते, अन्यथा कृतनाशाकृतागमनदूषणं स्यात्" । इत्याकर्ण्य नृपः प्राह—'तर्हि वः किं किं प्रदीयते ?' ततो मुनिना सर्वमेषणीयाहारादिस्वरूपं प्रोक्तं । ततो मुनिधर्मे निर्दोषत्वं विज्ञाय कनिष्ठभ्रातरं राज्ये न्यस्य स्वयं दीक्षामाददे, राजपुत्रशतान्वितश्च क्रमादवधिज्ञानं प्राप्य ज्ञातिजनं प्रतिबोधयितुं तत्राययौ । नृपेण सह पुरोहितसुतश्चित्रगुप्तो वंदितुं समागात् । तत्र देशनासमये एकः काष्ठवाहकः प्रबुद्धः, तदा धर्माज्ञानतः मिथ्यात्वेन धर्मसमन्युतश्च नृपभीत्या दंभतश्चित्रगुप्तः प्राह—'अहो अयं धन्यः, येन सर्वस्वं मुक्त्वा चारित्रं गृहीतं, अप्रयासेनान्नादि लप्स्यते, राजवेष्ट्याद्यैर्निश्चिंतः, अहो वेषमहिमा !' । इति तद्वाक्याकूतं ज्ञात्वा गुरुरूचे—'अद्याप्यनर्थदंडस्त्वां ताडयति' । स पप्रच्छ—'किं

नामानर्थदंडत्वं ?' तदा ज्ञानिनोक्तं—'अज्ञानमन्युदंभेभ्योऽनर्थदंडः प्रजायते, एतत्फलं भवे भवे कुयोनिप्रापणं । अथवा शृणु विडंबनां—

पुरा भद्दिलपुरे जिनदत्तपुत्रः सेनाख्यः बाल्येऽपि वैराग्यवान् । पित्रा ज्ञात्वा विटगोष्ठ्यां मुक्तः । तत्र भूपसुवा समं मैत्रीं व्यधात् । विटादिसंगेन पापपरो राजपुत्रं प्राह—'हे मित्र ! जरंतं पितरं हत्वा राज्यं कथमाशु न गृह्यते ?' तन्मंत्रं विज्ञाय मंत्रीनृपायावोचत् । नृपेण वणिक्सुतं कुबुद्धिदं ज्ञात्वा 'वध्योऽयं' इत्यादिष्टं । नृपभटैर्बद्ध्वा स मारितः । मृत्वा नरके नारकोऽभवत् । असंख्यकालं भ्रांत्वा पुरोधसः पुत्रस्त्वमभूः । इति श्रुत्वा जातिस्मृत्या प्रबुद्धस्तं काष्ठवाहिनं मुनिं ननाम, तदा गुरुः पुनः प्राह—'हे चित्रगुप्त ! शृणु संबंधमेकं—

"श्रीवीरपार्श्वे केनचिद् द्रमकेण प्रव्रज्या प्रपन्ना । स प्रभुं व्यजिज्ञपत्—'स्वामिन्नहं ज्ञानभानूदयं विना चारित्रमार्गं कथं पश्यामि ?" प्रभुणा चतुर्दशपूर्वरहस्यं 'त्वं सर्वत्र मनो वश्यं कुरु' इत्युक्तं । ततः स मासक्षपणादिके पारणे पर्यटन्नाहारमप्राप्याक्रोशादिकं च श्रुत्वा भगवद्वाक्यं स्मृत्वा शुभध्यानं दधाति।

एकदाऽश्रैर्जनैर्हसितं—'अहो अनेन किं धनादिकं मुक्त्वा संयमं गृहीतं ? पाखंडमेतत्कृत्वाऽयं लोकान् दमयति' तद्वाक्यमभयेन चतुष्पथे श्रुतं । ततोऽभयो लोकान् प्राह—'यः कोऽपि चक्षुरिंद्रियविषयं त्यजति, तस्येदं रत्नं बहुमूल्यं ददामि,' तदा कोऽपि न वक्ति । 'पुनः स्पर्शविषयं । एवं पंचेंद्रियाणि यो वश्यानि कुरुते, तस्य पंचैव रत्नानि ददामि' । कोऽपि प्रत्युत्तरं न ददाति, ततोऽभिमुखमागच्छंतं तं मुनिं

नत्वा प्राह—'हे स्वामिन्! यूयं पंच रत्नानीमानि गृह्णीत पंचेंद्रियजयनशीलाः' । ततो मुनिराह—'अनर्थद एवार्थः, श्रीवीरसाद्यं मम प्रत्याख्यानं यावज्जीवमस्ति । ततोऽन्वयः प्राह—'भो लोकाः! अस्याकिंचनत्वं पश्यत, युष्माभिः कथं हास्यं कृतं?' ततः सर्वे मुनिं प्रणम्य क्षमयामासुः । स मुनिर्वीरवाक्यतत्परः केवलं मुक्तिं च प्राप । इति प्रबंधेन गतदर्पश्चित्रगुप्तः सर्वानर्थदंडनिवारणाय साधुत्वं संगृह्य तत्पापं दुस्तपतपोभिर्दूरीकृत्य भवप्रपंचं न्यवारयत् ।

प्रमादमन्युकपटाज्ञताभिस्तथा कुचिंतादिभिरस्ति हेयः ।
अनर्थदंडो निजधर्महर्त्ता, लघुं च हित्वा भज जैनधर्मम् ॥ १ ॥

॥ इत्यब्ददिनपरिमितहितोपदेशसङ्ग्रहाख्यायामुपदेशप्रासादग्रन्थस्य वृत्तौ दशमस्तंभे
सप्तत्रिंशदुत्तरशततमं व्याख्यानम् ॥ १३७ ॥

---

## ॥ अष्टात्रिंशदुत्तरशततमं व्याख्यानम् ॥ १३८ ॥

अथ चत्वारि शिक्षाव्रतानि पुनः पुनरासेवार्हाण्युच्यंते—तत्र प्रथमं सामायिकाख्यं शिक्षाव्रतमाह—

मुहूर्त्तावधि सावद्य—व्यापारपरिवर्जनम् । आद्यं शिक्षाव्रतं सामा—यिकं स्यात्समताजुषाम् ॥ १ ॥

मुहूर्त्तावधि द्विघटिकां यावत् सावद्यः पापान्वितः स चासौ व्यापारः—मनोवाक्कायकुचेष्टारूपस्तस्य परिवर्जनं प्रथमं शिक्षाव्रतं पुनः पुनः शिक्षितुं योग्यं, समता रागद्वेषहेतुमध्यस्थता, यतः—

"इतो रागमहांभोधि—रितो द्वेषदवानलः । यस्तयोर्मध्यगः पंथा—स्तत्साम्यमिति गीयते" ॥ १ ॥

तन्नाजां जीवानां सामायिकं स्यात् । समस्य रागद्वेषरहितस्य सतः आयो ज्ञानादीनां लाभः, समो हि प्रतिक्षणमपूर्वैर्ज्ञानादिपर्यायैरधःकृतचिन्तामणिकल्पद्रुमादिप्रभावैर्निरुपमसुखहेतुभिर्युज्यते, समायः प्रयोजनमस्येति सामायिकं, तच्च सावद्यकर्मपरिहारं विना न स्यात्, यतः परमर्षिभिरुक्तं—

"सावज्जजोगं परिवज्जियाए, सामाइयं केवलिइं पसत्थं ।
गिहत्थधम्मं परमं ति नच्चा, कुज्जा वुहो आयहियं परत्था" ॥ १ ॥

तस्य फलं महत्केनापि गणयितुं न शक्यं, यतः—

"दिवसे दिवसे लक्खं, देइ सुवन्नस्स खंडियं एगो ।
इयरो पुण सामाइयं करेइ न पहूप्पए तस्स ॥ १ ॥

अत्र दृष्टांतोऽयं—

एकत्र नगरे कश्चिदिभ्यः प्रत्यहं पात्रापात्रविचारं विना दानशौण्डत्वाल्लक्षं लक्षं हेम दत्त्वा खट्वायाः समुत्तरति । एका वृद्धा तत्प्रातिवेश्मिकी प्रत्यहं सामायिकं करोति । एकदा द्वयोरपि केनचित्कारणेन दानसामायिकविषयेऽन्तरायोऽभूत् । द्वयोरपि खेदः समभूत् । श्रेष्ठी वृद्धायाः खेदं श्रुत्वा प्राह—"अहो वस्त्रखंडं गृहीत्वा हस्तादिप्रमार्जनं न कृतं तेन किं पुण्यं गतं ? तत्र धनव्ययस्तु कश्चिदपि न दृश्यते, इत्थं यदि धर्मः समेति तदा सर्वैः सदा क्रियते, लक्षखंडिसुवर्णदानं न कोऽपि विदधाति' । तयोक्तं—

'मैवं वद' यतः—'कंचणमणिसोवाण०' इत्यादि । ततः श्रेष्ठी अंते आर्त्तध्यानान्मृत्वा करी जातः, वृद्धा च सामायिकध्यानेन मृत्वा राजसुता जाता । क्रमात्स करी तेनैव राज्ञा धृत्वा पट्टहस्ती कृतः । स एकदा राजमार्गे स्वगृहादि वीक्ष्य जातिस्मृतिमूर्छया भूमौ पतितः, तद्द्रष्टुं राजसुताऽऽयाता । सापि स्वस्थानादि वीक्ष्य जातिस्मृत्या पूर्वभववृत्तांतं दृष्टवती । करी कराभ्यामुत्थापितोऽपि नोत्तिष्ठति । ततो राजसुतयोक्तं—

"जइ सिढि मम भंत कर, करी हूउं दाणवसेण । हुं सामाइय रायधुअ, बहुगुण समहिय तेण" ॥ १ ॥

इति तद्वचः श्रुत्वा शीघ्रं करी उत्थितः । ततो नृपादीनां महदाश्चर्यं जातं । पृष्टा सती सा सर्वं प्राग्भववृत्तांतमकथयत् । स करी तद्वचसा प्रबुद्धः । कालद्वये सामायिककरणाय भूमिं चक्षुर्भ्यां निरीक्ष्य स्वगुरूणयभ्यर्णे समतया मुहूर्त्तं यावत्तिष्ठति भावसामायिकेन । ग्रहणपूर्णसमये च गुरुं नत्वा तिष्ठत्युत्तिष्ठति । भक्ष्याभक्ष्यपेयापेयादिज्ञानपरः समाधिना पूर्णायुषा च मृत्वा सहस्रारे देवत्वं प्राप्तः ।

दानं सदा यच्छति मार्गणेभ्यः, सुवर्णभूमेः स्वपतिश्च कश्चित् ॥
ततोऽप्यधिकं गदितं मुनीन्द्रैः सामायिके पुण्यमतो विधेयम् ॥ १ ॥

॥ इत्यब्ददिनपरिमितहितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थस्य वृत्तौ नवमस्तंभे अष्टत्रिंशदुत्तरशततमं व्याख्यानम् ॥ १३८ ॥

## ॥ एकोनचत्वारिंशदुत्तरशततमं व्याख्यानम् ॥ १३ए ॥

अत्रापि पंचातिचारा हेयाः, तानाह—

कायवाङ्मनसा दुष्ट–प्रणिधानमनादरः । स्मृत्यनुपस्थापनं च, स्मृताः सामायिकव्रते ॥ १ ॥

सामायिकव्रते कायस्य वाचो मनसश्च दुष्टं च तत्प्रणिधानमनाभोगादिना सावद्यप्रवर्त्तनं । तत्र शरीरावयवानां हस्तचरणादीनां पुनः पुनश्चालनं, अप्रमृज्य कायकंडूयनं, भित्त्याद्यालंबनं, अप्रमार्जितभूमौ निषदनादिकं च कायदुःप्रणिधानं । १ ।

वचनेन कर्कशभाषणं, अथवा 'जहि, पच, आगच्छ, गच्छ, इमां हट्टादिकुंचिकां गृहाण' इत्यादिकं वचनदुःप्रणिधानं । २ । यतः—

"करूसामाइअं पुव्विं, बुद्धीए पेहिऊण भासिज्जा । सइनिरवज्जं वयणं, अन्नहा सामाइयं न भवे" ॥ १ ॥

मनसा—गृहहट्टादिसावद्यचिंतनं मनोदुःप्रणिधानं । ३ । यतः—

"सामाइयं तु काउं, गिहकम्मं जो य चिंतए सड्ढो । अट्टवसट्टोवगओ, निरत्थयं तस्स सामइयं" ॥ १ ॥

यः श्राद्धः सामायिकं तु कृत्वा आर्त्तवशार्त्तमुपगतः, गृहव्यापारं—

"अज्ज घरे नत्थि घयं, हिंग लोणं च इंधणं नत्थि । जाया य अज्ज तरुणी, कल्ले कहवो होहिय कुटंबं" ॥ १ ॥

इत्यादि चिंतयति तस्य सामायिकं निरर्थकं, इति तृतीयं दुःप्रणिधानं । ३ ।

अनादरोऽनुत्साहः, प्रतिनियतवेलायां सामायिकस्याकरणं तत्क्षणमेव पारणं, यतः—

"काऊण तक्खणं चिय, पारेइ करेइ जहिच्छाए। अणवट्ठिअ सामइयं, अणायराओ न तं सुद्धं" ॥ १ ॥

इति ।४।

स्मृतौ स्मरणे सामायिकस्याऽनुपस्थापनं 'सामायिकं मया कृतं न वा? प्रवलप्रमादाद्यदा न स्मरति तदातिचारः पंचमः ।५। अत्राह—'ननु सामायिके द्विविधत्रिविधेन प्रत्याख्याने कृते मनसो रोद्धुमशक्यत्वात्तद्दुःप्रणिधानसंभवे व्रतभंग एव, अकृतेन तेन तु प्रायश्चित्तं जायते, अतस्तदकरणमेव श्रेयः इति चेन्नैवं; अत्र च मनसा न करोमि इत्यादि षट्प्रत्याख्यानानि । तत्रानाभोगादिनैकतरभंगेऽपि शेषसद्भावान्न सर्वथा भंगः । मनोदुःप्रणिधाने च मिथ्यादुष्कृतेनैव तस्य शुद्धिभणनान्न सामायिकाकरणं श्रेयस्करं । अन्यथा सर्वविरतेरप्यस्वीकार्यप्रसंगः स्यात्, यच्चाविधिकृतादनुष्ठानाद्वरमकृतमिति केचिद्वदंति तदप्यशोभनं, उक्तं च—

"अविहिकया वरमकयं, उस्सूअवयणं भणंति गीयत्था ।
पायच्छित्तं जम्हा, अकए गुरूअं कए लहुयं" ॥ १ ॥

किंचित्सातिचारादपि अनुष्ठानादभ्यासतः कालेन निरतिचारमनुष्ठानं भवति । न हि प्रथमत एव धनुर्धरादीनां सकलकलापारीणत्वं, अभ्यासे सत्येव प्रायः कुशलतामावहति । न हि सकृदुदबिंदुपतनेनैव सरः पूर्णतां याति । अतः सम्यग् मनःशुद्ध्यादिना पुनः पुनः कर्त्तव्यं । तथा चागमः—

"जीवो पमायवहुलो, वहुसो वि वहुविहेसु अत्थेसु । एएण कारणेणं, वहुसो समाइयं कुज्जा" ॥ १ ॥

सामायिकस्थश्रावकोऽपि यतिरिव जवति । यदाहावश्यकनिर्युक्तौ—
"सामाइयंमि उ कए, समणो इव सावर्ज हवइ जम्हा । एएण कारणेणं, बहुसो सामाइयं कुज्जा" ॥ १ ॥
इदमजस्रं महणसिंहवदाराध्यं । तथाहि—

दिल्ल्यां पुरि पीरोजसुरत्राण आसीत्, स एकदाऽन्यपुरं प्रति चचाल, तदा तेन महणसिंहसाधुः सार्थे आकारितः । मार्गे सूर्यास्तमनसमये स तुरंगमाडुत्तीर्य प्रतिक्रमणं कर्त्तुं जूमिं प्रमृज्य स्थितः । उपकरणानि सदैव सार्द्धं रक्षति । नृपस्त्वग्रेतने ग्रामे गतः, तं श्रेष्ठिनं पार्श्वस्थमदृष्ट्वा आकारयितुं जनं प्रैषीत् । ततः पूर्णसामायिकं पारयित्वा राज्ञः पार्श्वे समेतः । राज्ञा पाश्चात्यस्थितिस्वरूपं पृष्टं । महणसिंहेनोक्तं—'रवावस्ता(स्तोदया)चलमालंबिते सति ग्रामेऽरण्ये च नद्यां स्थले नगे वाऽवश्यमुजयोः कालयोः प्रतिक्रमणं मया क्रियते' । राजाऽवक्—'अनेकवैरिणः संति, कदाचित्तैर्मारितः स्यात्तदा का गतिः ?' । स प्राह—'धर्मं कुर्वतो यदि मे मरणं, तदा स्वर्ग एव स्यात्, तेन मया तत्रैव कृतं' । ततो राजा हृष्टः । यत्रारण्ये वने वा श्रेष्ठी धर्मं कर्त्तुं तिष्ठति, तत्र सुरत्राणस्यादेशात्सहस्रमितजटप्रमाणं सैन्यं तं रक्षति । अन्यदा दिल्ल्यां सुरत्राणेन कंचिद्दोषमुद्भाव्य सर्वांगनिगमितः स कारागृहे क्षिप्तः । लंघने जातेऽपि सायं प्रतिक्रमणार्थं रक्षकेज्यः स्वर्णटंककमर्पयित्वा घटीद्वयावधि हस्तनिगरूकर्षणपूर्वं प्रतिक्रमणं चक्रे । एवं मासेन षष्टिं सौवर्णटंकान् प्रतिक्रमणार्थमेव प्रददे । तन्नियमदार्ढ्यस्वरूपं ज्ञात्वा तुष्टेन नृपेण मुक्तः, परिधापितः, प्राग्वद्विशिष्य संमानितश्च ॥

धर्मेषु दार्ढ्यान्महणादिसिंहः, स्वर्णादिकोशाधिपतां समाप ।
पीरोजनृपेन प्रशंसितश्च, तत्सर्वतेजो नवमव्रतस्य ॥ १ ॥

॥ इत्यब्ददिनपरिमितहितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थस्य वृत्तौ नवमे स्तंभे एकोनचत्वारिंशदुत्तरशततमं व्याख्यानम् ॥ १३९ ॥



## ॥ चत्वारिंशदुत्तरशततमं व्याख्यानम् ॥ १४० ॥

अथ सामायिकभेदान् आह—

सामायिकं स्यात्त्रैविध्यं (त्रिविधं) सम्यक्त्वं च श्रुतं तथा । चारित्रं तृतीयं तच्च, गृहिकमनगारिकम् ॥१॥

आद्यं सम्यक्त्वसामायिकं औपशमिकादिभेदैः पंचधा । १ । श्रुतसामायिकं द्वादशांगीरूपं सम्यक्श्रुतं । २ । तृतीयं चारित्रसामायिकं, तच्च द्विधा—गृहिकं देशविरतिरूपं द्वादशव्रताराधनात्मकं, अनगारिकं च सर्वसावद्यवर्जनरूपं पंचमहाव्रतं । सर्वविरतिचारित्रसामायिकं सर्वद्रव्यविषयिकं, यतः—

"पढमंमि सव्व जीवा, बीए चरमे य सव्वदव्वाइं । सेसा महव्वया खलु, तदिक्कदेसेण दव्वाणं" ॥ १ ॥

प्रथमे व्रते सूक्ष्मबादराः सर्वे जीवास्तेषां पालनमित्येकद्रव्यविषयं आद्यं । द्वितीये पंचमे व्रते च सर्वद्रव्याणि, यतो 'लोकः पंचास्तिकायात्मकः केन दृष्टः ? अलिकमिदं' इत्युक्त्या षड्द्रव्यसंबंधि द्वितीयं, तथा मूर्छाद्वारेण चिंत्यते 'सर्वलोकस्वामी भवामि' इति सर्वद्रव्यविषयं पंचमं परिग्रहविरमणव्रतं । शेषाणि

महाव्रतानि द्रव्याणामेकदेशेन, यथा द्रव्यं ग्रहणीयं धारणीयं इत्यदत्तादानविरमणवैषयिकं तृतीयं व्रतं । रूपं रूपसहगतद्रव्यसंबंधिकं अब्रह्मविरतिरूपं चतुर्थं । आहारद्रव्यवैषयिकं षष्ठं व्रतं इत्येवं चारित्रसामायिकं सर्वद्रव्यवैषयिकं । एवं श्रुतसामायिकं ज्ञानरूपत्वात्सर्वद्रव्यवैषयिकं । एवं सम्यक्त्वसामायिकं सर्वद्रव्यश्रद्धात्मकत्वात्सर्वद्रव्यविषयि । एतत्सामायिकान्येको जीवः संसारे पर्यटन् संख्येयासंख्येयवाराणि प्राप्नोति । यतः—

"सम्मत्तदेसविरया, पलियस्स असंखभागमित्ताउं । अठभवाउ चरित्ते, अणंतकालं य सुअसमए" ॥१॥

सम्यक्त्वं देशविरतिसामायिकं च क्षेत्रपल्योपमासंख्येयभागे यावंतः प्रदेशास्तावन्मितेषु भवेष्वेकत्र जीवः उत्कृष्टतो द्विसामायिकं लभते जघन्यतश्चैकभवे । चारित्रसामायिकं तु उत्कृष्टमष्टसु भवेष्वेव भवति पश्चात् सिध्यति, जघन्यतस्तु एकभवेऽपि मरुदेव्यादिवत् । सामान्यश्रुतसामायिकं चानंतभवेषु प्रतिपद्यते, जघन्यतस्त्वेकभवेऽपि ऋषभमातृवत् । किंचिच्छ्रुतसामायिकलाभोऽभव्यानामपि भवति ग्रैवेयकसुरपदं यावदिति । तथा अंतरद्वारेऽप्युक्तं, यतः—

"कालमणंतं च सुए, अद्धापरिअट्टउ अ देसूणो । आसायणबहुलाणं, उक्कोसं अंतरं होइ" ॥ १ ॥

कश्चिदेकजीवोऽक्षरात्मकं श्रुतं प्राप्य पतितः, पुनरनंतकाले गते प्राप्नोति इत्युत्कृष्टमंतरं ज्ञेयं । सम्यक्त्वादिके सामायिके जघन्यमंतर्मुहूर्त्तमंतरं, उत्कृष्टं तु देशोनार्द्धपुद्गलपरावर्त्तमंतरं आशातनाबहुलानां जीवानां । यतः—

"तित्थयरपवयणसुअं, आयरिअं गणहरं च महड्ढियं । आसायंतो बहुसो, अणंतसंसारिअ होइ" ॥ १ ॥

ततोऽवश्यं सम्यक्सामायिकमहिम्ना सिद्ध्यत्येव । तत्र चतुर्णां चौराणां निदर्शनं, तथाहि—

क्षितिप्रतिष्ठितपुरवासी कश्चिच्छ्राद्धो भिल्लपल्ल्यां लाभार्थं तत्र गत्वोष्टः । पुण्यात्कोटिधनेशोऽभूत्, तदा किराताश्चत्वारः स्वकुलेशाः श्राद्धस्य विभूतिं वीक्ष्य दध्युः—'अहो अनेन गृहिणाऽस्मान् प्रलोभ्य मुषित्वा च बहुद्रव्यं गृहीतं, अतो रात्रौ क्षात्राणि दत्त्वा पश्चाद् गृह्णीमः, अन्यथाऽयं दांभिकत्वात्सर्वस्वं लात्वा स्वपुर्यां व्रजिष्यति, यतः—

"पासा वेसा अग्गि जल, ठग ठक्कुर सोनार । ए दस न होय अप्पणा, मंकरू वणिक बिलारू" ॥ १ ॥

इति तैर्विचारितं । अथ स गृही प्रतिदिनं सप्ताष्टौ च संख्यया सामायिकानि करोति । मध्यरात्रानंतरं स गृही भार्यया सह सामायिकमुच्चार्य्य स्थितः । ते चौरा अपि क्षात्रं दातुं समेयुः, तं जाग्रतं दृष्ट्वा दध्युः—'कथं धनं गृह्यते ?' स श्राद्धो दध्यौ—'बहुभवेषु धनं मिलिष्यति । अत्रैव भवे धनं गतमागतं च, परं ज्ञानादिभावधनं क्रोधचिंतादिचौरा हरिष्यंति तदा किं कर्तव्यं ? अस्य रक्षणेन सर्वं सुलभं" इति निर्धार्य सामायिके संलग्नः पुनः पुनर्नमस्कारादिकमपठत् । चौरैस्तच्छ्रुत्वा ऊहापोहवशाज्जातजातिस्मृत्या पूर्वमसंख्यभवोपरि यत्कृतमनुष्ठानं भणितं च तत्सर्वं स्मृतं, ततः सर्वे दध्युः—'अहो ! धिगस्मान् परद्रव्याभिलाषुकान् । चौर्यकरणात् बाह्यतो धनादिकं समेति भावतश्चात्मधनं ज्ञानादिकं गच्छति, तज्जीवो न पश्यति । अहो धन्योऽयं श्राद्धः पश्यन्सन्नपि स्वलक्ष्यं नात्येति । इति तत्प्रशंसया तैर्दर्शनं प्राप्तं, ततः

चौर्यादिप्रत्याख्यानं कृतं, तेन देशविरतित्वं जातं। ततो वैराग्यपूरेण खड्गादिकं मुक्त्वा नवविधभावलोचपरिणामो जातः, तेन सर्वविरतिसामायिकं प्राप्तं, इत्थं क्रमाच्छुक्लध्यानं क्षपकश्रेणिं च प्राप्य ते चत्वारोऽपि सयोगिकेवलिगुणस्थानकं प्रापुः। सूर्योदये जाते द्रव्यलोचं चक्रुः, आसन्नदेवैर्दत्तं वेषं जगृहुः। स श्राद्धस्तान्सर्वदर्शिनो नत्वा पुनः पुनः स्तुतिं चकार। ते मुनयोऽन्यत्र विजह्रुः, क्रमाच्च मुक्तिं प्रापुः।

गृहस्थसामायिकचिह्नवीक्षणान्मुमुक्षुसामायिकभावमन्वगुः।
मलिम्लुचा ज्ञानधनस्य पोटिकां, समाप्य जग्मुः पुरमव्ययं ततः ॥ १ ॥

॥ इत्यब्ददिनपरिमितहितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थस्य वृत्तौ दशमस्तंभे चत्वारिंशदुत्तरशततमं व्याख्यानम् ॥ १४० ॥

## ॥ एकचत्वारिंशदुत्तरशततमं व्याख्यानम् ॥ १४१ ॥

अथ सामायिकं सर्वगुणानां भाजनमशुभकर्महान्या प्राप्यते इत्याह—

तदेव सर्वगुणस्थानं, पदार्थानां नभ इव। दुष्टकर्मविघातेन, सुध्यानतस्तथा भवेत् ॥ १ ॥

तत्सामायिकं सर्वे ज्ञानदर्शनचारित्रादयस्ते च ते गुणाश्च तेषामाधारो भाजनं स्थानं, किमिव ? खमिव सर्ववस्तूनि घटपटलकुटपुटादीनि, तेषां, यथाकाशाधारेण सर्वाधेयवस्तूनि स्थितिं कुर्वंति, तथा सामा-

यिकं विना चरणादिगुणा अपि न भवंति इति । तत्सामायिकं कथं लभ्यते ? अशुभकर्मविघातेन । यथा तद्भावो जिनागमे एवं निवेदितोऽस्ति—सामायिकोपघातिज्ञानावरणीयदर्शनावरणीयमिथ्यात्वमोहनीयकर्मणां सर्वघातिषु स्पर्द्धकेषु उद्घाटितेषु सत्सु देशघातिषु ( च ) स्पर्द्धकेषु अनंतेषु उद्घाटितेषु अनंतगुणवृद्ध्या प्रतिसमयं विशुद्ध्यमानः शुभशुभतरपरिणामवान् प्राणी भावतः सामायिकपूर्वाक्षरं ककारं लभते । एवं अनंतगुणवृद्ध्यैव प्रतिसमयं विशुध्यमानः सन् रेफादिवर्णावलिं प्राप्नोति । एवं भावतः सामायिकस्य लाभो भव्यस्य स्यात् । एवं 'करेमि भंते सामाइयं' इत्यादि सर्व लभ्यते, यतः—

"कह सामाइयलम्भो, तस्सुवघाई देसवाघाई । देसविघाइफड्डुग, अनंतवुड्ढि विसुद्धस्स" ॥ १ ॥

अत्र बहु वक्तव्यं तद्विशेषावश्यकतो ज्ञेयमिति । तथा तत्सामायिकं सुध्यानतो भवेत् । सुध्यानं धर्मध्यानं शुक्लध्यानं च, अत्र धर्मध्यानस्य विशेषप्रचारत्वात् धर्मध्यानं चतुर्विधं—तत्राद्यमाज्ञाविचयं—श्रीवीतरागवचनं यथास्थितं श्रद्धाति, निश्चयव्यवहारनित्यानित्यस्याद्वादप्रकारेण जिनवचनं सर्वोत्तमत्वादमूल्यं, यतः—ध्यानशतकवृत्तौ—

"कल्पद्रुमः कल्पितमात्रदायी, चिंतामणिश्चिंतितमेव दत्ते ।
जिनेन्द्रधर्मातिशयं विचिंत्य, द्वयेऽपि ( यं हि ) लोके लघुतामुपैति" ॥ १ ॥

तथोक्तं च—

"स्वरूपपररूपाभ्यां, सदसद्रूपशालिषु । यः स्थिरप्रत्ययो ध्यानं, तदाज्ञाविचयाह्वयम्" ॥ १ ॥

अथापायविचयो द्वितीयो नेदः—अनेन जीवेन संसारे भ्रमता जरूसंगाद्बहवोऽपाया लब्धाः, आत्मायत्तं मुक्तिमार्गं प्रविहाय हे आत्मन्! त्वयैवैष स्वात्मा सहस्रेष्वपायेषु पातितः, परमयमात्मा तत्त्वतोऽज्ञानादिरहितोऽस्ति, अनंतज्ञानदर्शनचारित्रवीर्यानंतचतुष्टयान्वितः, अनाद्यनंताक्षरानक्षरामलारूप्यकर्माबंधकानुदयानुदीरकायोग्यनेद्यछेद्यकपाय्यदेहात्मकातींद्रियानाश्रवलोकालोकज्ञायकः सर्वप्रदेशेषु कर्मपरमाण्वतिरिक्तः शुद्धचिदानंदचिन्मयचिन्मूर्त्तिचित्पिंरू इत्याद्यनेकगुणयुक्तोऽपि हे चेतन! त्वया मोहांधतमसा विवशीकृतचेतसा कः कोऽपायो नावापि?' यतः—

"इत्यात्मनः परेषां च, ध्यात्वा पापपरंपराम्। अपायविचयं ध्यान—मधिकुर्वीत योगवित्" ॥ १ ॥

इति द्वितीयो नेदः।

अथविपाकविचयस्तृतीयो नेदो निरूप्यते—अनंतज्ञानादिगुणयुक्तोऽपि जीवः विपाकं—कर्मकृतशुनाशुनफलं ऋव्यक्षेत्रादिसामग्र्याऽनुनवति। तत्र(ऋव्ये)अङ्गनामाल्यसुखाद्यादिषु नव्यनोगेन्यः शुनविपाकः, अशुनस्त्वहिशस्त्राग्निविषादिन्यो ज्ञेयः, क्षेत्रे—सौधादौ वसनाच्छुनः, श्मशानादावशुनश्च। काले शीतादौ रतेः शुनः, अरत्यादेरशुनश्च। नावे मनःप्रसन्ननावेषु शुनः, रौद्रादिनावेष्वशुनश्च। नवे—देवनोगनूमिषु शुनः, नरकादावशुनश्च, इति ऋव्यादिसामग्रीयोगात् कर्माणि देहिनां स्वस्वफलं प्रयच्छंति, अतः सुखदुःखे प्राप्य न खेदहर्षौ (हर्षखेदौ) धार्यौ। यतः—

"सर्वकर्मप्रकृतीनां, विपाकास्तान्विचिन्वतः । विपाकविचयं नाम, धर्मध्यानं प्रवर्त्तते" ॥ १ ॥

इति विपाकविचयस्तृतीयो भेदः ॥

अथ संस्थानविचयश्चतुर्थः—तच्चतुर्दशरज्ज्वात्मकसंस्थानचिंतनं—ऊर्द्ध्वाधस्तिर्यग्लोकस्वरूपचिंतनं, तत्स्वरूपं विशेषेण लोकभावनातो वाच्यं । तथा सर्वलोकस्थानेषु जीवेनासंस्पृष्टं जन्मादिभिस्तन्नास्ति इति चिंतनं संस्थानविचयश्चतुर्थभेदः । ४ । एतद्धर्मध्यानं चतुर्थगुणस्थानादारभ्य सप्तमगुणस्थानं यावज्ज्ञेयं । तथा कष्टे प्राप्तेऽपि यो धर्मध्यानं चंद्रावतंसकवन्न मुंचति, तस्यैव सामायिकं भवति । तथाहि—

विशालापुर्यां चंद्रावतंसकनृपो राज्यं परमधर्मनैष्ठिकः करोति । सोऽन्यदा चतुर्दशीदिने स्वसौधमध्ये कायोत्सर्गेण तस्थौ, मनस्येवमभिग्रहं जग्राह—'यावदयं प्रदीपः प्रज्वलिष्यति, तावत्कायोत्सर्गं न पारयिष्यामि' । स्वामिभक्त्या दास्या पुनः पुनरपि तैलेन सिक्तो दीपो न विध्यातः । राजा रात्रौ चतुरोऽपि यामान् धर्मध्यानं दध्यौ किदृशं ? यतः—

"सूत्रार्थसाधनमहाव्रतधारणैश्च, बंधप्रमोक्षगमनागमहेतुचिंता ।
पंचेंद्रियव्यपगमश्च दया च भूते, ध्यानं तु धर्म्यमिति तत्प्रवदंति तज्ज्ञाः" ॥ १ ॥

इति शुभध्यानपरः 'जावनियमं पज्जुवासामि' इति पाठे यच्चिंतितं, तत्पर्यंतं कायोत्सर्गं न पारयामास । रवावुद्गते दीपे विध्याते च स पारितः । ततो रुधिरेण भृतचरणो गिरिशृंगमिव त्रुटित्वा भूमौ पपात । शुभध्यानेन सुगतिं प्राप । यतः—

"सामायिकं द्विघटिकं चिरकर्मभेदि, चंद्रावतंसकवदुच्चधियोऽत्र किं नु ।
स्पर्शोऽपि सत्यमुदकं मलिनत्वनाशि, घोरं तमो हरति वा कृत एव दीपः" ॥ १ ॥

॥ इत्यब्ददिनपरिमितहितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रंथस्य वृत्तौ दशमे स्तंभे एकचत्वारिंशदुत्तरशततमं व्याख्यानम् ॥ १४१ ॥

---

## ॥ द्विचत्वारिंशदुत्तरशततमं व्याख्यानम् ॥ १४२ ॥

अथैतत्सामायिकं दोषरहितं विधेयमित्याह—

द्वात्रिंशद्दोषनिर्मुक्तं, सामायिकमुपासकैः । विधिपूर्वमनुष्ठेयं, तेनैव फलमश्नुते ॥ १ ॥

द्वात्रिंशद्दोषा इमे—तत्र कायदोषा द्वादश—वस्त्रकरादिभिः पर्यस्तिकां बध्नाति । १ । आसनमितस्ततश्चालयति । २ । दृष्टिं काकाक्षिगोलकमिव भ्रामयति । ३ । कायेन सावद्यं करोति । ४ । अप्रमृज्य स्तंभभित्त्यादिकमवष्टंभयति । ५ । अंगोपांगान्याकुंचति पुनः पुनः दंवं प्रसारयति । ६ । आलस्यं मोटयति । ७ । करपदांगुलीर्वक्रीकृत्य शब्दयति । ८ । अप्रत्युपेक्ष्य शरीरं कंडूयते । ए । देहमलं समुत्तारयति । १० । शरीरविश्रामणं वांछति । ११ । निद्रादिकं सेवते । १२ ।

अथ वचनदोषा दश—सामायिके मकाराद्यसंबंधं वदति । १ । सहसाकारेणोच्चरति । २ । सावद्याज्ञां

ददाति । ३ । यथाछंदेन जल्पति । ४ । सूत्रालापकं संक्षिपति । ५ । कलहं विकथां हास्यं च वचोभिः करोति । ८ । उद्घाटितेन मुखेन जल्पति । ९ । अविरतिजनानागच्छ गच्छेति संलपति । १० ।

अथ मनसो दोषा दश—अविवेकमनसा सामायिकं करोति । १ । यशःकीर्त्तिं वांछति । २ । धनाःशनवसनादिकमभिलपति । ३ । मनसा गर्वं वहति । ४ । पराभवं दृष्ट्वा निदानं चिंतयति । ५ । आजीविकादिभयेन मनसा बिभेति । ६ । तद्धर्मफलं प्रति संशयति । ७ । रौद्रचिंतया लोकरीत्या च कालमानपूर्त्तिं नयति । ८ । इतः कारागारात्कदाछुट्टिष्यामीति विचारयति । ९ । गुर्वादिकमंधकारादौ मनसाऽलक्ष्यीकृत्यौद्धत्येन च सामायिकं शून्यचित्तेन करोति । १० ।

एतद्दोषनिर्मुक्तं विधिपूर्वकं श्राद्धैः सामायिकमनुष्ठेयं, अनुष्ठानं कार्यमित्यर्थः । अनुष्ठानं क्रिया, तत्पंचविधं । तथाहि—इह लोकार्थं तपः क्रियां वा यत् करोति, तद्विषानुष्ठानं । मागधि(का)गणिकादिवत् । १ । परलोकसुखार्थं तपःक्रियादि वा यत्करोति, तद्गरलानुष्ठानं, वसुदेवजीवनंदिषेणर्षिवत् । २ । उपयोगशून्यं यत्तपः सामायिकं वा, अथवा अन्येषां क्रियां दृष्ट्वा तत्समाचरति समूर्छिमवत् तदन्योन्यानुष्ठानं, यतो लोकशास्त्रेऽपि—

"विना गुरूपदेशं यो, यथादृष्टं तथाचरेत् । स एव हसनीयः स्या—ज्जटिनो जडशिष्यवत्" ॥ १ ॥

वर्द्धमानपुरे कश्चिज्जटकशिष्यः । स एकदा पुरमध्ये भिक्षार्थं गतः । तत्र कस्यचित्सूत्रधारस्य गृहे वंशं तैलाभ्यंगपूर्वकं वह्नितापेन सरलीक्रियमाणं ददर्श । तं तथास्थितं दृष्ट्वा स धीजडः सूत्रधारं पप्रच्छ—

'किमिदं क्रियमाणमस्ति ?' ततस्तेनोक्तं—'वक्रवंशस्य सरलत्वं' स दध्यौ—'वातविकारेण वक्रीभूतस्य मद्गुरोरपीदमेवौषधमस्तु, सर्वत्राप्ययमेव सरलीकरणत्वप्रकारः' । ततः स स्वगुरुं तैलाभ्यंगपूर्वकं वह्नि-वत्यर्थं तापयति स्म । तापदूनो वराको गुरुः पूत्करोति स्म । तस्याक्रंदं श्रुत्वा भूयांसो लोका मिलिताः, महता कष्टेन गुरुं मोचयित्वा सर्वैर्निर्भर्त्सितः। एतदुपनयं स्वयमभ्यूह्य धीमद्भिरन्योन्यानुष्ठानं न कार्यं इति।३। सोपयोगित्वेनाभ्यासानुकूलं यत्क्रियादिकं तत्तद्धेत्वनुष्ठानं, आनंदादिवत् । ४ । मोक्षार्थं यथाविधि तपःक्रियादिकं तदमृतानुष्ठानं वीतरागसंयममिवार्जुनारामिकवत् । ५ । एषु त्रीणि आद्यानि हेयानि द्वे अंत्ये स्वीकार्ये इति । तथाऽन्यान्यपि चत्वारि संति तथाहि—यत्कुर्वतः प्रीतिरसोऽतिरुचिरूपो वर्धते तत्प्रीत्यनुष्ठानं ऋजुस्वभावानामनवरतं क्रियायामिति । १ । बहुमानेन भव्यजीवानां पूज्येषु प्रीत्य-नुष्ठानसममपि करणं भक्त्यनुष्ठानं, प्रीत्या वल्लभायाः पालनादिकं क्रियते, जनन्यास्तु सेवनादिकं भक्त्येति द्वयोर्विशेषः । २ । या क्रिया सूत्रवचसा क्रियते तद्वचनानुष्ठानं, सर्वत्रागमानुसारप्रवृत्तिरूपं चारित्रिणः साधोर्नान्यस्य पार्श्वस्थादेः । ३ । यत्पुनरभ्यासबलाद्भुतापेक्षां विनैव यथास्थितं क्रियते फलनिराशंसया जिनकल्पिकादिवत्, तदसंगानुष्ठानं । ४ । यथा कुलालचक्रभ्रमणं प्रथमं दंडसंबंधाज्जायते, एवं वच-नानुष्ठानमप्यागमात्प्रवर्त्तते पश्चाद्यच्चक्रस्य भ्रमणं तद्दंडसंयोगं विनापि केवलं संस्कारमात्रेणैव स्यात्, एवं श्रुतसंस्कारेण क्रियाकाले यद्वचननिरपेक्षं तदसंगानुष्ठानमिति युक्त्या द्वयोर्भेदः, तथा चत्वार्यपि क्रमेण विशुद्धानि । यतो बृहद्भाष्ये—

"पढमं जावलवाउं, पायं वालादिआण संजवइ । तत्तोवि उत्तरुत्तर-संपत्ती निअमउं होइ" ॥ १ ॥

एतदनुष्ठानस्वरूपं श्रुत्वा विधिपूर्वकमनुष्ठेयं, तेनैव फलं वक्ष्यमाणं प्राप्नुते, नान्यथेति तात्पर्यम् ।

शरीरवाङ्मानसदोषमुक्तं, त्रिकं त्वनुष्ठानमिहाद्यमेतत् ।
मुक्त्वा विधेयं विधिना च सर्वं, सामायिकं तेन फलत्यजस्रम् ॥ १ ॥

॥ इत्यब्ददिनपरिमितहितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थस्य वृत्तौ दशमस्तंभे
द्विचत्वारिंशदुत्तरशततमं व्याख्यानम् ॥ १४२ ॥

---

## ॥ त्रिचत्वारिंशदुत्तरशततमं व्याख्यानम् ॥ १४३ ॥

अथ सामायिके धर्मोपकरणानि घटंते, तद्विलिख्यते—

धर्मोपकरणान्यत्र, पंचोक्तानि श्रुतोदधौ । तदालंब्य विधातव्यं, सामायिकं शुभास्तिकैः ॥ १ ॥

अत्र सामायिकक्रियायां धर्मोपष्टंभदानि धर्मकार्योपकारकाणि पंचसंख्यानि श्रुतसमुद्रे निगदितानी-त्यर्थः । यतोऽनुयोगद्वारचूर्णौ—सामाइअकरुस्स समणोसावगस्स कइविहे धम्मोवगरणे पन्नत्ते ? ठव-णायरिअत्ति । १ । मुहपत्ति । २ । जपमालिअत्ति । ३ । दंडं ( रजोहरणं ) । ४ । पाउंछणत्ति ( कट्या-सनं ) । ५ । प्रथमं स्थापनागुरुं स्थापयित्वा सामायिकं कार्यं, स्थापना तु दशधा, यतः—

"अरके वराडए वा, कठे पुत्थे अ चित्तकम्मे अ । सब्भावमसब्भावं, गुरुठवणा इत्तरावकहा" ॥ १ ॥

इति आवश्यकनिर्युक्तौ वंदनकाध्ययने । अनया गाथया गुरोरभावे स्थापनाचार्याग्रे वंदनादिकर्त्ता मुख्यवृत्त्या साधुरेवोक्तः, यथा—

"पंचमहव्वयजुत्तो, अणालसमाणपरिवज्जिअमइओ । संविग्गनिज्जरट्ठि, किइकम्मकरो हवइ साहू" ॥ १ ॥

परं साधुवच्छ्रावकेणापि वंदनकं दीयते । 'ननु किं श्रावकस्यापि क्वाप्यागमे स्थापनाचार्यस्थापनाऽस्ति ?' उच्यते—

"दिवड्ढिकुसुमसेहर–उज्झइ दव्वाहिगारमझंमि । ठवणायरिअं ठविउं, पोसहसालाइ गिइउ सीहो" ॥ १ ॥

"उम्मुक्कभूसणो सो, इरिआइपुरस्सरं य मुहपत्ती । पडिलेहिंतो पच्छा, चउव्विहं पोसहं कुणइ" ॥ २ ॥

इति व्यवहारचूलिकायां सिंहश्रावकेण सा प्रकटमेव गृहीता । तथा विशेषावश्यकेऽपि—

"गुरुविरहंमि ठवणा, गुरूवएसोवदंसणत्थं च । जिणविरहंमि जिणबिंब–सेवणामंतणं करणं" ॥ १ ॥

अथ यतिसामायिकप्रस्तावे 'भंते' इति शब्दव्याख्यानयता 'गुरुविरहंमि' इत्यादि भाष्यकृता साधुमाश्रित्योक्तं न श्रावकमिति चेत् तर्हि प्रष्टव्योऽत्र भवान्—किं श्रावकः सामायिकमुच्चरन् भदंतशब्दं भणति न वा ?' यदा भणति तदा साधुवत्साक्षाद्गुरोरभावे तां स्थापयति उभयत्रापि न्यायस्य समानत्वात् । द्वितीयपक्षस्तु दीक्षासमये जिनानामेव घटते, किं च यदि सर्वज्ञानक्रियाप्रवीणः साधुस्तां स्थापयति तर्हि गृहकार्यव्यग्रमनस्केन सुतरामेतद्विधेयमित्यागमप्रमाणमुपदर्श्य युक्तिमपि दर्शयामः, तथाहि—

यदि स्थापनागुरुं विनाऽनुष्ठानं विधीयते, तदा वंदनकनिर्युक्तौ—'आयप्पमाणमित्तो चउदिसि होइ उग्गहो गुरुणो' इति कथं घटते ? नहि गुर्वभावेऽवग्रहो युज्यते, ग्रामाभावे तत्सीम्नो व्यवस्थावत्। तथा समवायांगे पंचविंशत्यावश्यकानि प्रोक्तानि वंदनार्हाणि, तत्र दुपवेसं एग निक्खमणं इत्यादि गुरुं विना कथं कार्य ?। अत्राह परः—'ननु वयं हृदये गुरुं स्थापयामः' हंत अहो तदपि खरविषाणलावण्यवर्णनमिव, हृदयमध्यवर्त्तित्वाद् गुरोर्वंदनकं दात्रा सहैव संचरणान्न कथंचिदपि तदाननिर्गमप्रवेशौ स्यातां, तदसत्त्वे च न पंचविंशत्यावश्यकसंपूर्त्तिः, तदसंपूर्त्तौ वंदनकाशुद्धिः, अतः स्थापनागुरुं संस्थाप्य क्रिया कार्येति स्थितं।

अथ मुखवस्त्रिकया सह सामायिकं कार्यं, यतो व्यवहारसूत्रे—"जो मुहपत्तिं अप्पडिलेहित्ता वंदणं देइ गोअमा ! तस्स गुरुअं पच्छित्तं, तथा पावरणं मुत्तूणं, गिण्हित्ता मुहपत्तिअं वत्थकायविसुद्धिए करेइ पोसहाइअं" इति व्यवहारचूर्णौ। तथा च 'सो अ किरइ सामाइयं करित्तो मउडं अवणेइ कुंडले नाममुद्दं पुप्फतंबोलपावरणमाई वोसिरइ" इत्यावश्यकचूर्णौ। उत्तरिअं नाम पाउरणं श्रीनिशीथचूर्णौ १४ उद्देशे, अत्र चोत्तरीयमोचनेनार्थापत्त्या श्राद्धानां मुखपट्टी(वस्त्रिका)ग्रहणं ज्ञापयति। 'तएणं से कुंडकोलिए समणोवासए अन्नया कयाए पुव्वावरण्हकालसमयंमि जेणेव असोकवणिया जेणेव पुढविसिलावट्टए, तेणेव उवागच्छइ२त्ता नाममुद्दगं च उत्तरिज्जगं च पुढविसिलावट्टए ठवेइ २ त्ता समणस्स भगवओ महावीरस्स अंतिअं धम्मं पन्नत्तिं उवसंपज्जित्ताणं विहरइ" इति उपासकदशांगे षष्ठेऽध्ययने। अत्रैव देवपरीक्षानंतरं—'तेणं कालेणं तेणं समएणं सामी समोसढे तएणं से कुंडकोलिए इमिसे कहाए लद्धट्ठे जह काम-

देवो तहा निगच्छइ जावपज्जुवासइ' इति । तथा -कामदेवश्च गृहीतपौषध एव निर्गतः । यथा तं सेअं खलु मम समणे जगवं महावीरं वंदित्ता, तर्ज पम्मिनियत्तस्स पोसहं पारए त्ति कट्टु, एवं संपेहेइ इत्यादि । इह कुंरूकोलिकेन परिमुक्तोत्तरीयेणास्यपट्टयादिना धर्मानुष्ठानं कृतं, अन्यथा कामदेवोपमानेन तत्पारणाजिप्रायो न घटते इति। तथाऽपरः कृष्णवासुदेववंदनकवृत्तं जणति, तत्रापि मुखवस्त्रिकया वंदनं न जणितं तथा वस्त्रप्रांतेनापि नोक्तं । तथा चोक्तमनुयोगद्वारे—'से किं तं लोउत्तरिअंजावावस्सयं ? जं णं समणो वा समणी वा सावर्ज वा साविया वा तच्चित्ते तम्मणे तल्लेसे तदज्जवसाए तदट्ठोवउत्ते तदप्पिअकरणे अन्नत्थकइ मणं अकुव्वमाणे उज्जर्जकालं आवस्सयं करंति । अत्र 'तदप्पिअकरणे' इति पदस्य चूर्णिः—'यथा तस्साहणे जाणि सरीररर्जहरणमुहणंतगाइआणि दव्वाणि ताणि किरिअकरणत्तणर्ज अप्पिआणि । तस्यैव पदस्य वृत्तिः—तदर्पितकरणः—रजोहरणमुखवस्त्रिकादीनि तस्मिन्नावश्यके यथोचितव्यापारनियोगेनार्पितानि करणानि येन स तथाविधो ऽव्यतः स्वस्थानन्यस्तोपकरण इत्यर्थः, एतद्हरिजद्रकृतानुयोगद्वारवृत्तौ । तथा मलधारीहेमचन्द्रसूरिवृत्तावपि चैवं चूर्णौ वृत्तिद्वयेऽपि तदर्पितकरण इति विशेषणस्य साधूपासकादिसंबंधिनः सदृशमेव व्याख्यानं कृतं, परं न क्वापि केवलं श्रावकं प्रतीत्य समग्रस्यावश्यकविधेरुपलंजो दृष्टः । तथावश्यकचूर्णौ सामायिकाधिकारे यथा—'साहूणं सगासार्ज रयहरणं निसिज्जं वा मग्गइ, अहवा घरे नो से उवग्गहिय रयहरणं अत्थि, तस्स असइ वत्थस्स अंतेणंति तथा वंदनजाष्येऽपि—"एवं सुसावर्जवि हु, डुवालसावित्तवंदणारित्तो । मुहपत्तिमञ्जजागंमि, ठावणे पुज्जपायजुगं" ॥ १ ॥

इति श्राद्धस्य रजोहरणमुखवस्त्रिकादिग्रहणं, विशेषयुक्तिस्तु कुलमंडनसूरिविरचितग्रंथाज्ज्ञेया इति । तथा सामायिकें जपमालिकापि रक्षणीया । षड्विधावश्यकादूर्ध्वं सामायिके जपकरणार्थमिति । तथा दंडेति शब्दस्य प्रमार्जनार्थं पदजून्यादीनां रजोहरणदंडासण(न)कं चेत्यर्थः । अथवा वहुश्रुताः यत्कुर्वंति तदेवेति । तथा पादप्रोंछनकं कंवलसूकलातमयं चेति । तानि पूर्वोक्तानि धर्मोपकरणानि आलंब्य शुभास्तिकैः सामायिकं विधेयमिति । तदुपकरणदानेनापि महत्पुण्यं । यतः श्रूयते—श्रीकुमारपालनृपः अष्टादशशतसाधर्मिकेभ्यानां धर्मोपकरणानि ददाति स्म । एकदा कश्चिच्चारणः एकवर्णान् पंचशततुरंगान् दृष्ट्वा कंचन पप्रच्छ—'कस्यैते तुरंगाः ?' इति, तेनोक्तं—'श्रीकुमारपालपौषधशालायां मुखवस्त्रिकादिकां योऽर्पयति सारां च करोति तस्यैते, द्वादश ग्रामाश्च राज्ञा दत्ताः । तत्संवंधि सर्वद्रव्यं धर्मोपकरणवृद्ध्यर्थं सारार्थं च मुक्तं" इति श्रुत्वा विरुदं पपाठ—

"रूमो पारसनत्थ, जइ एहवो जाइसिइं । सहसिइंसे वडसत्थ, कुमरनरिंदहवाहिरो" ॥ १ ॥

इति धर्मवर्णनं श्रुत्वा नृपस्तस्य लक्षद्रव्यं ददौ इति ।

एवं साम्यसुधास्वाद–सुहितात्मा महीपतिः । धर्मोपकरणवृद्ध्यर्थं ग्रामाश्वान् वहुशो ददौ ॥ १ ॥

॥ इत्यब्ददिनपरिमितहितोपदेशसङ्ग्रहाख्यायामुपदेशप्रासादग्रन्थस्य वृत्तौ दशमस्तंभे
त्रिचत्वारिंशदुत्तरशततमं व्याख्यानम् ॥ १४३ ॥

## ॥ चतुश्चत्वारिंशदुत्तरशततमं व्याख्यानम् ॥ १४४ ॥

अथैतत्सामायिकफलमाह—

देशसामायिकं श्राद्धो, वितन्वन्घटिकाद्वयम् ।
द्रव्यादीनां व्ययाभावा—दहो पुण्यं महद्भवेत् ( समर्जयेत् ) ॥ १ ॥

श्राद्धो घटिकाद्वयं मुहूर्त्तं यावत् तद्देशसामायिकं वितन्वन् सन् महत्पुण्यमुपार्जयेत् । तत्कथं विधेयं ?—पूर्वोक्तयुक्त्या गृहीतरजोहरणमुखपोतिकः श्राद्धः—'गोयमा इरियावहिआए अप्पडिक्कंताए न कप्पइ चेव । किंचि चेइवंदण सज्झाणाइयं काउं' इत्यादिमहानिशीथवचनात् । ईर्यापथिकीमप्रतिक्रम्य न किंचिदन्यत्कुर्यात्, तदशुद्धापत्तेरिति हारिभद्रदशवैकालिकवृत्तिवचनाच्च । ईर्यापथिकीमप्रतिक्रम्य न सामायिकं कार्यमिति । तथा पंचाशकवृत्तौ च नवपदप्रकरणे चावश्यकनिर्युक्तिद्वितीयखंडप्रांते च दिनकृत्यसूत्रे च प्रथमं 'करेमि भंते' इत्यादिसूत्रमुच्चार्य तत ईर्यापथिकीं प्रतिक्रामति इत्येवमुक्तमस्ति, तद्वीक्ष्य श्रीमद्धर्मे न व्यामोहः कार्यः । यतः श्रीगणधरसामाचार्योऽपि भिन्ना भिन्नाः श्रूयंते तत्त्वं तु बहुश्रुतेभ्यो ज्ञेयमिति, परं बुद्धिमद्भिः पूर्वाचार्यपरंपराऽनागतस्वमतिकल्पितपक्षो न स्वीकार्यः । तथा सामायिकग्रहणविशेषविधिस्तु धर्मसंग्रहादिभ्योऽभ्यूह्यः । एवं विधिना तत्कुर्वन् द्रव्यवस्त्रादीनां व्ययाभावान्महत्पुण्यमर्जयेत् । यतः पूज्यैरुक्तं च—

"सामाइयं कुणंतो, समभावं सावगो घडिअदुगं । आउं सुरेसु बंधइ, इत्तिअमित्ताइं पलिआइं ॥ १ ॥
"बाणवई कोडीओ, लक्खा गुणसट्ठी सहस्स पणवीसं । नवसय पणवीसाए, सत्तिहा अडभागपलिअस्स ॥२॥

अंकतोऽपि–९२५९२५९२५ । तथा च—

"जे केवि गया मोक्खं, जेवि अ गच्छंति जे गमिस्संति । ते सव्वे सामाइअ–पहावेण य नायव्वा" ॥ १ ॥

अपरं च—

"हूयते तप्यते नैव, दीयते वा न किंचन । अहो अमूल्यक्रियेयं, साम्यमात्रेण सिद्धयति" ॥ १ ॥

अत्रार्थे दृष्टांतः प्रोच्यते—

श्रीपुरे पद्मश्रेष्ठिपुत्रः केशरिनामा नटविटाधर्मिणां संगत्या चौर्यं करोति । ततो लोकरावं श्रुत्वा राज्ञा धृतः शिक्षां दत्त्वा मोचितः, तथापि तद्व्यसनासक्तं तं मत्वा तत्पितृवचसा निष्कासितः । मार्गे गच्छन् दध्यौ—"अद्य कस्य गृहे चौर्यं करिष्ये" इति विचिंत्य सरःपालीवृक्षे चटित्वा दिक्षु दृष्टिं दत्ते तावत्कोप्यकस्मात्सरस्यां नभसः सिद्धपुरुष उत्तीर्य पादुके उत्तार्य च स्नानं कुर्वन् ददृशे । ततः स उत्तीर्य ते पादुके परिधाय व्योम्न्युत्पपात । नागरिकाणां सर्वस्वं चोरयति नृपांतःपुरेऽपि भ्रमति च । स्वयं खिन्नो राजा खड्गं करे कृत्वा सर्वत्र चौरं विलोकयन् क्वापि वने दिव्यपूजायुक्तं चंडिकाप्रासादं वीक्ष्य तत्र चौरागमनं निर्धार्य च छन्नं स्थितः । तदा स स्तेनोऽभ्येत्य पादुके उत्तार्य च देवीं नत्वा जगाद—"यदि मम बहु धनमद्य चटिष्यति, तदा तव विशिष्टपूजां करिष्येऽहं" एवमुक्त्वा यावत्ते पादुके

परिधत्ते, तावदेका पादुका राज्ञा गृहीता । चौरस्तं दुःशासनं वीक्ष्य नष्टः । तत्रस्थापितराजयोधा अपि राज्ञा सह तत्पृष्ठे लग्नाः । स्तेनो नयविकलो दध्यौ—'अद्याहो मत्पापं फलितं' । अग्रे मुनिं दृष्ट्वा स तत्र-पापत्यागोपायं पप्रच्छ । मुनिराह—

"तप्येद्वर्षशतैर्यश्च, एकपादस्थितो नरः । एकेन ध्यानयोगेन, कलां नार्हति षोडशीम्" ॥ १ ॥

ततो गुरुमुखात्सामायिकफलं श्रुत्वा तद्गृहीत्वा च स्थितः सन् दध्यौ—'अहो नास्तिकमत्या मया महद्दुष्कृतं विहितं, धिग् धिग्मां इत्यादिशुक्लध्यानारूढः क्षपकावल्या केवलज्ञानं प्राप । देवै रजोहरणादिकं दत्त्वा महश्चक्रे । राजापि शमिनं दमिनं वीक्ष्य जाताश्चर्योऽनिमेषदृष्ट्या पश्यति तदा ज्ञानी प्राह—'हे नृप ! त्वं किं विचारयसि ? अन्यायिनश्वरमं ज्ञानं कथं ? परमिदं सामायिकतारुवारुंवरं ज्ञेयं, यतः—

"प्रणिहंति क्षणार्द्धेन, साम्यमालंब्य कर्म तत् । यन्न हन्यान्नरस्तीव्र–तपसा जन्मकोटिभिः" ॥ १ ॥

तदाकर्ण्य नृपोऽपि दिनं प्रति सामायिकसप्ताष्टककरणाभिग्रहं लात्वा गृहमाजगाम । मुनिर्ज्ञानेन क्रमान्मुक्तिं प्राप ।

सप्तव्यसनमासक्ते, सर्वसंतापकारिणि । चौरेऽपि दत्तं निर्वाणं, सेव्यं सामायिकं बुधैः ॥ १ ॥

॥ इत्यब्ददिनपरिमितहितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थस्य वृत्तौ दशमस्तंभे चतुश्चत्वारिंशदुत्तरशततमं व्याख्यानम् ॥ १४४ ॥

## ॥ पंचचत्वारिंशदुत्तरशततमं व्याख्यानम् ॥ १४५ ॥

अथ नवमसामायिकव्रतकथनानंतरं देशावकाशिकव्रतमुच्यते—

दिग्व्रते परिमाणं यत्, तस्य संक्षेपणं पुनः। दिने रात्रौ च देशाव-काशिकव्रतमुच्यते ॥ १ ॥

स्पष्टः। प्रथमगुणव्रते यद्दशस्वपि दिक्षु गमनपरिमाणं, तस्य दिवारात्रौ चोपलक्षणत्वात्प्रहरादौ यत्संक्षेपणं तद्देशावकाशोऽवस्थानमत्रास्तीति देशावकाशिकं। पूर्वं दिग्व्रते यावज्जीवं संवत्सरादिकं वा योजनशतादीनि मुत्कलीकृतानि, अत्र पुनस्तन्मध्यादपसारयति मुहूर्त्तदिवसप्रहराद्यन्नीष्टकालं यावत् गृहहट्टशय्यादिसारंन्नैकदेशावस्थानं, तेन निर्वृत्तं देशावकाशिकं। दृग्विषाहेर्वादशयोजनानि दृग्विषयः विद्यावता न्यूनीकृतो योजनमात्रं स्थितः, यथा वा शरीरस्थं विषमगदबलेनांगुल्यां स्थाप्यते। एवं विवेकिना यावत्कथिकदिग्व्रताद्दिने दिनेऽपसारयितव्यं। अनेन व्रतेन सर्वव्रतनियमानां प्रतिदिनं संक्षेपः कार्यः। अत एव पूर्वोक्त 'सच्चित्तदव्वेति' गाथोक्तनियमान् संप्रति प्रातः श्राद्धा गृह्णंति सायं च संकोचयंति। प्रत्याख्यानप्रांते 'देसावगासियं पच्चक्खामि' इत्यादिना गुरुसमक्षं प्रतिपद्यंते। उक्तं च—

"देसावगासियं पुण, दिसिपरिमाणस्स निच्च संखेवो। अहवा सव्ववयाणं, संखेवो पइदिणं जाउ" ॥ १ ॥

आद्यव्रतसंक्षेपप्रकारस्त्वयं—यतः—

"पुढविदगगणिमारुय, वणस्सइतसेसु पाणेसु। आरंभमेगसो सव्व सो य सत्तीए वज्जिज्जा" ॥ १ ॥

एवं सर्वव्रतेष्वपि यथार्हं ज्ञाव्यं । स्वापाद्यवसरे तु विशेषेण सर्वहिंसामृषादिसंक्षेपः कार्यः । एतद्व्रतपालनात् सुमित्रस्येव शुभश्रियो जायन्ते । तथाहि—

चंद्रिकापुर्यां प्रजापालनृपः । तन्मंत्री जैनः सुमित्राख्यः । द्वयोः सदा वादः संजायते । राजा धर्मं न श्रद्धत्ते, मंत्रिणं प्राह—'भोः त्वं देवार्चनादिषु किं मुधा मोहितोऽसि ?' मंत्री प्राह—'राजन् ! धर्मकृत्यं विना यूयं राजानो वयं च सेवकाः कथं? सर्वेषां तुल्यत्वं कस्मान्न ?' नृप एवं जगौ—'एकस्या अश्मशिलाया द्वौ खंडौ क्रियेते । एकेन प्रतिबिंबं कृतं, द्वितीयेन च सोपानानि कृतानि, अनयोर्मध्ये केन धर्मः पापं च कृतं ? स्थानविशेषत्वं' । मंत्री प्राह—'अयोग्योऽयं पक्षः, तत्र त्रसजीवानामभावाद्युक्तिविकलः । ननु जीवस्तु स्वात्मशक्त्या पूज्यापूज्यकर्म समुपार्जयति । अथवैकखंडगतजीवैः पूर्वं महत्पुण्यं कृतं, तेन प्रतिबिंबं जातं, तदर्पमहस्रादिकं यावत् किमपि तारुनघर्षणपाकादिषु चूर्णकभवनादिदुःखं ते नाप्नुवंति । अन्यखंडगतजीवास्तु महद्दुःखं तत्पूर्वकृतपापेनैवानुभवन्ति इति प्रधानोक्त्या नृपो मंत्रिणं जगाद—'प्रत्यक्षदृष्टफलं विना पुण्यं न श्रद्दधामि' इति तयोर्नित्यं संवादो जायते ।

एकदा मंत्री पाक्षिकरात्रौ गृहाद्बहिर्गमनं प्रत्याचख्यौ । तदा राज्ञा किंचित्कार्योत्पत्तौ सत्यां तमाह्वातुं प्रतिहारः प्रेषितः, तं प्रति मंत्री स्वनियममज्ञापयत् । प्रतिहारेण तद् राज्ञे निवेदितं । राज्ञाऽतीवरुष्टेन वेत्रिमुखान्मुद्रारत्नं याचितं । मंत्री प्रतिहाराय तां सद्यः समार्पयत् । प्रतिहारः कौतुकेन तां मुद्रिकां परिधाय स्वपदातिषु हसन्नेवं जगौ—'भो भृत्याः ! राज्ञा मम मंत्रिपदं दत्तं' । सेवकैः 'हे मंत्रिवर !

पादमवधारय इति प्रजल्पनपरैर्यावन्मार्गमतिक्रामति, तावद्दैववशात्कैश्चिद्भटैः स विनाशितः । तदाकर्ण्य नृपेण चिंतितं—'नूनं मंत्रिणैव स हतः, अत एनं हन्मि' इति जल्पन् राजा तत्रागतः । दीपकोद्योतेन नश्यंतस्तद्धंतारो राजजटैर्बद्धाः पृष्टाश्च—'जोः ! के यूयं ? कुतः समेताः ?' । तैरुक्तं—'राजन्नस्मानुदरभृत्यान् किं पृच्छसि ? । वयं त्वद्वैरिसूरराजेन मंत्रिवधार्थं प्रेषिताः । एष मंत्रिसदृशो दृष्टो हतोऽस्माभिः' । ततो नृपो मंत्रिगृहे एत्य तं प्रति मिथ्या दुष्कृतं दत्त्वा तत्स्वरूपं प्राह । मंत्रिभिस्ते जीवंतो मुक्ताः । नृपः प्राह—'हे मंत्रिन् ! अद्य पुण्यफलं प्रत्यक्षं दृष्टं' इति प्रशस्य गृहिधर्मं जग्राह । तौ द्वावपि पुण्यमुपार्ज्य महाविदेहे सिद्धौ ॥

सुमित्रमंत्री दशमव्रतोद्यतः, अत्रापि पूर्णं फलमाप धर्मतः ।
नास्तिक्यभावं प्रविहाय भूमिपस्तद्वीक्ष्य बुद्धः शुचिधर्ममातनोत् ॥ १ ॥

॥ इत्यब्ददिनपरिमितहितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रंथस्य वृत्तौ दशमस्तंभे
पंचचत्वारिंशदुत्तरशततमं व्याख्यानम् ॥ १४५ ॥

―――

## ॥ षट्चत्वारिंशदुत्तरशततमं व्याख्यानम् ॥ १४६ ॥

अथैतद्व्रतस्य पंचातिचारास्त्याज्याः, तानाह—

प्रेष्यप्रयोगानयनं, पुद्गलक्षेपणं तथा । शब्दरूपानुपातौ च, व्रते देशावकाशिके ॥ १ ॥

दिग्व्रतविशेष एव देशावकाशिकव्रतं । इयांस्तु विशेषः—दिग्व्रतं यावज्जीवं संवत्सरं चातुर्मासिकपरिमाणं वा, इदं तु दिवसप्रहरमुहूर्त्तादिमानं । तस्य पंचातिचाराः । तथाहि—

प्रेष्यस्यादेश्यस्य प्रयोगो विवक्षितक्षेत्राद्बहिःप्रयोजनाय कर्मकरादीनां व्यापारणे स्वयं गमने हि व्रतभंगः स्यादिति प्रेष्यप्रयोगः । १ ।

आनयनं—नियमितक्षेत्राद्बहिःस्थितस्य सचेतनादिद्रव्यप्रस्थि(प्रेषि)तकर्मकरादिपार्श्वादानाययति तदानीमानयनप्रयोगः । २ ।

तथा पुद्गलानां लोष्टुकाष्ठादीनां नियमितगृहादेर्बहिःक्षेपणेन स्वकार्यं स्मारयतः पुद्गलक्षेपः । ३ ।

शब्दरूपानुपातौ—तत्र नियंत्रितक्षेत्राद्बहिःस्थस्य स्वकार्यकरणार्थं व्रतभिया साक्षादाह्वातुमशक्यतया दंभादुच्चैः काशितादिरवेणात्मानं ज्ञापयतः शब्दानुपातोऽतिचारः । ४ ।

एवं निजरूपं दर्शयतो रूपानुपातः, निश्रेण्यट्टालकादौ क्वाप्यारुह्य पररूपाणि प्रेक्षमाणस्य रूपानुपातः । ५ ।

एतद्व्रतं हि 'गमनादिना मा भूज्जीववधः' इति बुद्ध्या गृह्यते, स तु स्वयंकृतोऽन्येन कारित इति न कश्चित्फले विशेषः, प्रत्युत स्वयं गमने ईर्यापथविशुद्ध्यादयो गुणाः, भृत्यादेः पुनरनिपुणत्वनिःशूकत्वादीर्यासमित्यभावादिदोषाः । इत्यानयनप्रयोगादयो न कल्पंते । इह चाद्यद्वयातिचारौ व्रतभंगो मे मा भूदिति व्रतसापेक्षत्वेनानाभोगादिना प्रवर्त्तितौ, अंत्यत्रयं तु मायावितयाऽतिचारतां याति इत्यर्थः । अत्र निरति-

चारव्रतपालने नृपकोशाध्यक्षधनदसंबंधः श्राद्धप्रतिक्रमणसूत्रार्थदीपिकातो ज्ञेयश्च, पवनंजयोदंतो दिनकृत्यवृत्तितश्चेति । तथैतद्व्रतं यो न गृह्णाति सर्वत्र गमनं मुत्कलं रक्षति, स महद्दुःखमाप्नोति । यतः—

"गुरुवचननियोगाज्ज्ञातदेशावकाशो, विपदि तरति पुण्याच्चेद्यथा लोहजंघः ।
हयमयवृषजा वा स्वामिना वाह्यमानाः, सततममितगत्या किं हतं स्वस्य कुर्युः ॥ १ ॥

लोहजंघस्य दृष्टांतस्त्वयं—

उज्जयिन्यां चंडप्रद्योतेन राज्ञा 'कोऽप्यत्रयधीसखं वध्ध्वाऽऽनयति तस्येप्सितं दास्ये' इति पटहो वादितः । तद्वारस्त्रीभिः स्वीकृत्य कपटश्राविकावेषेण राजगृहपुरमेत्य मंत्रिणं प्रलोभ्य चंद्रहाससुरया घूर्णितः कथमपि बहुदिनैरवंतीशस्याग्रे नीतः । राज्ञा च बंदिस्थाने क्षिप्तः । वेश्यामुखात्तदानयनवृत्तं ज्ञात्वा राज्ञोक्तं—'न युष्माभिः साधु कृतं, यदयं धर्मछद्मनाऽऽनीतः' ।

अथ तस्य अग्निभीरुरथः । १ । शिवादेवी पद्मिनी । २ । अनिलवेगो हस्ती । ३ । लोहजंघो दूतः । ४ । अमूनि रत्नानि संति । तत्र लोहजंघः प्रतिदिनं पंचविंशतियोजनानि गच्छति, अनेकजनपदेशगुह्यं प्रकाशयति च । ततः सर्वैरुद्विग्नैः सामंतैस्तन्मारणार्थं विषमिश्रशंबलं तस्मै दत्तं तेन गृहीतं च । अग्रे गत्वा भोक्तुमस्थात्, अपशकुनैः पुनः पुनर्वारितः । प्रद्योतनाग्रे तेन स वृत्तांतो न्यवेदि । नृपेणाभयः पृष्टः प्राह—'एतच्छंबलमध्ये गंधेन निश्चीयते दृष्टिविषसर्पः समुत्पन्नोऽस्ति । विषज्ञानप्रकारस्त्वयं—यतः—

विषान्नदर्शनान्नेत्रे, चकोरस्य विरज्यतः । म्रियते कोकिलो मत्तः क्रौंचो माद्यति तत्क्षणात् ॥ १ ॥

नकुलो हृष्टलोमा स्या–न्मयूरश्च प्रमोदते । अस्य चालोकमात्रेण, विषं मंदायते क्षणात् ॥ २ ॥
उद्वेगं याति मार्जारः, पुरीषं कुरुते कपिः । गतिः स्खलति हंसस्य, ताम्रचूडो विरौति च ॥ ३ ॥
अन्नं सविषमाघ्राय, भृंगः कूजति चाधिकम् । सारिका सविषेऽन्ने तु, विक्रोशति तथा शुकः ॥ ४ ॥

इति श्रुत्वा प्रद्योतेन शाड्वले वने शंबलं मोचितं । तन्मध्यान्निर्गतं सर्पं दृष्ट्वा वनं शुष्कं । इत्याद्यनेकाभयबुद्ध्या प्रसन्नीभूतादभूपादात्मा वरमार्गणेन मोचितः । विनयेन सोऽवक्—'त्वां धर्मछलं विना दिवा पुरमध्ये रटंतं नेष्यामि ततोऽहमभयः' । क्रमात्स्वपुरे गतः । कियद्दिनानंतरं वेश्यापुत्र्यौ लात्वा कृतवणिग्वेषोऽवंत्यां राजसौधसमीपे हट्टमग्रहीत् । अथ राजा ते दृष्ट्वा विकलः स्वाप्तजनमुखेन तत्संगमयाचत । ताभ्यां प्रोक्तं—"अस्मद्भ्रूभ्राता प्रेताविष्टदेहलघुबांधवसमाध्यर्थं मांत्रिकगृहे गच्छति, तदा प्रच्छन्नं यदि नृपः समेति ततः संगो भावीति" । अथाभयेनैको निजनर उन्मत्तीकृतः, तस्य प्रद्योतनामेति । 'ईदृग्मे भ्राता भ्राम्यतीतस्ततो हा कथं मया रक्ष्योऽयं' इति स जनेऽवक् । तं मांत्रिकालयनयनछलात्प्रत्यहं बद्धी रटंतं मंचारूढं निनाय, स आर्त्त इवोह्यमानश्चतुष्पथे उच्चैरारटीति 'प्रद्योतोऽहं ह्रियेऽभयेन बंधनान्मोचयत' । लोकैर्विकलोऽयमिति मत्वोपेक्षितः । अथ नृपश्छन्नमेक एव तत्रागात् । अभयनरैः कामांधकरीव बद्ध्वा पर्यंकस्थो मार्यमाणो दिवा रटन् लोकसमक्षं राजगृहे नीतः । तं स्वपितुरार्पयत् । मगधेशस्तं सन्मान्य मुदा व्यसृजत् । ततोऽवंतीशः स्वराज्ये स्थितः तं लोहजंघमेवमशिक्षयत्—'त्वया सर्वत्र दिक्षु

स्वेच्छया गमनं न कार्यं, येनारिकृतदुःखं न स्यादिति' । अत्रायमुपनयः—यथा स दिग्गमनसंक्षेपादैरिकृतवधादिकं नाप, तथा श्राद्धोऽप्येतद्व्रतेन कर्मकृतोपद्रवं नाप्नोतीति ।

एतद्व्रतेनार्जितपापकर्म, संक्षिप्यते स्याद् बहूनामघानाम् ।
संक्षेपणं तेन ततः क्रमेण, सौभाग्यलक्ष्मीमचिराद्भजेत्सः ॥ १ ॥

॥ इत्यब्ददिनपरिमितहितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रंथस्य वृत्तौ दशमस्तंभे षट्चत्वारिंशदुत्तरशततमं व्याख्यानम् ॥ १४६ ॥

---

## ॥ सप्तचत्वारिंशदुत्तरशततमं व्याख्यानम् ॥ १४७ ॥

अथ सामायिकप्रमुखशिक्षाव्रतभृद्भिर्नूनं षडष्टाह्निकपर्वाण्यासेव्यानि इत्याह—

अष्टाह्निकाः षडेवोक्ताः, स्याद्वादाब्जयदोत्तमैः । तत्स्वरूपं समाकर्ण्य, आसेव्याः परमार्हतैः ॥ १ ॥

स्पष्टः । नवरमष्टाह्निकाः षड्, ताश्चेमाः, तत्स्वरूपं चेदं—एका चैत्रमाससत्काऽष्टाह्निका । १ । द्वितीयाऽऽपाढमासोद्भवा । २ । तृतीया पर्यूषणावासरजा । ३ । चतुर्थ्याश्विनमासजाता । ४ । पंचमी कार्त्तिकमासप्रसूता । ५ । षष्ठी फाल्गुनमासस्य । ६ । अत्राष्टाह्निकासूत्तराध्ययनबृहद्वृत्तौ द्वे शाश्वत्यावभिहिते । यदाहुः—

"दो सासयजत्ताओ, तत्थेगा होइ चित्तमासंमि । अट्ठाहिआइ महिमा, बीया पुण अस्सिणे मासे ॥ १ ॥"

"एआओ दोन्नि सासय, जत्ताओ करंति सव्वदेवा वि । नंदीसरंमि खयरा, नरा य निअएसु ठाणेसु ॥ २ ॥"

"तह चउमासिअतिअगं, पज्जोसवणा य तहय इय छक्कं। जिणजम्म दिक्खकेवल-निवाणाइसु असाइआ॥३॥"

जीवाभिगमे चोक्तं—"तत्थणं बहवे भवणवइवाणमंतरजोइसवेमाणिआ देवा तिहिं चउमासीहिं पज्जोसवणाए अ अट्ठाहिआउ महामहिमाउ करंतीत्ति"। अत्र चैत्राश्विनाष्टाहिकायां श्रीपालमयणादिवत् श्रीसिद्धचक्रयंत्राराधनं। बाह्यतो यंत्रस्वरूपं निर्धार्य मनसा ललाटादिदशस्थानेषु यंत्राकृतिं संस्थाप्य ध्यानं चिंत्यं भावतः। सामान्यतः सर्वास्वष्टाहिकासु अमार्युद्घोषणं, विस्तरतो जिनमंदिरेषु अष्टाहिकामहोत्सवः कार्यः। खंडनदलनपेषणगूथननवस्त्रधापनस्त्रीसेवनादिकं करणं कारापणादि च निषेध्यं, पर्यूषणाष्टाहिका तु वक्ष्यमाणैः पंचसाधनैः साध्या इति। तत्राद्यं—सर्वत्रामारिप्रवर्त्तनं विधेयं। १। द्वितीयकृत्यं—साधर्मिकवात्सल्यं। २। तृतीयं परस्परक्षामणं। ३। चतुर्थं—अष्टमतप आराध्यं। ४। पंचमं—चैत्यपरिपाटीकरणं। ५। तत्राद्यवर्णनमग्रे लिखिष्याम्यहं। साधर्मिकार्चनं सर्वेषां कियतां वा यथाशक्ति कार्यं, साम्यधर्माणो हि प्रायेण दुष्प्रापाः। यतः—

"सर्वैः सर्वे मिथः सर्व—संबंधा लब्धपूर्विणः। साधर्मिकादिसंबध—लब्धारस्तु मिताः क्वचित्॥ १॥"

तेषां संगमो हि महते पुण्याय, किं पुनस्तदनुरूपा सेवा। यतः—

"एगत्थ सव्वधम्मा, साहम्मिअवच्छलं तु एगत्थ। बुद्धितुलाए तुलिया, दोवि अ तुल्लाइं भणिआई॥ १॥"

अत्र भरतनरदेवदंडवीर्यकुमारपालादिभूभृतामवदाताः स्वयमभ्यूह्याः। तथा पर्यूषणायां परस्परक्षामणं

कार्यं, श्रीचंद्रप्रद्योतं प्रति श्रीमदुदायिनृपवदिति । अथ द्वयोर्मध्ये यद्येकः क्षमयति नापरः, तदा य उपशाम्यति तस्याराधकत्वं नान्यस्य । तस्मादात्मनोपशमितव्यं । क्वचिद् द्वयोरप्याराधकत्वं, तथाहि—

अन्यदा कौशांब्यां सूर्याचंद्रमसौ स्वविमानेन श्रीवीरं वंदितुं समागच्छतः स्म । चंदना दक्षाऽस्तसमयं विज्ञाय भीतोपाश्रयमागत्येर्यापथिकीं प्रतिक्रम्य च निद्राणाऽभूत् । ततः सूर्याचंद्रमसोर्गतयोः सहसा तमस्ततिर्व्याप्ता । तदा रजनीमवगम्य भयभीता मृगावती साध्वी सत्वरमुपाश्रयमागत्येर्यापथिकीं प्रतिक्राम्यंती निद्राणां चंदनां 'क्षम्यतां ममापराधः' इत्युक्तवती । चंदनापि—'भद्रे ! कुलीनायास्तवेदृशं न युक्तं' इत्युवाच । साप्यूचे—'भूयो नेदृशं करिष्ये' इति प्रोच्य पादयोः पतिता तावत्प्रवर्त्तिन्या निद्रागात्, तया च तथैव क्षामणेन केवलं प्राप्तं । ततः समीपागतं सर्पं वीक्ष्य तया करापसारेण बोधिता यथाजातं च विज्ञपिता, प्रवर्त्तिन्यपि 'कथं महातमसि सर्पोऽज्ञायि ?' इति पृच्छंती, तस्याः केवलं ज्ञात्वा मृगावतीं क्षमयंती केवलमाप । तत ईदृशं मिथ्यादुष्कृतं देयं न पुनः कुंभकारक्षुल्लकवत् ज्ञातेन तद्दर्शयति । तथाहि—

कश्चित् क्षुल्लको भांडानि काणीकुर्वन् कुंभकृता निषिद्धो मिथ्यादुष्कृतं दत्ते, न पुनस्ततो निवर्त्तते । ततः सोऽपि कर्करैः क्षुल्लककर्णमोटनं कुर्वन् 'पीड्येऽहं' इति क्षुल्लकेन पुनः पुनरुक्तोऽपि मुधा मिथ्यादुष्कृतं ददौ इति ।

तथा पर्युषणायामवश्यमष्टमतपो विधेयं । यतः—पाक्षिकतपस्तु एकोपवासमितं, चतुर्मासिकोचिततपस्तु षष्ठमितं, वार्षिकपर्वणि तु अष्टमतपोऽभिहितं जिनैः । अष्टमतपोविधानाक्षमैस्तत्तपःपूर्त्यर्थं पञ्चा-

चाम्लानि विधेयानि, तदशक्तौ सत्यां च नव निर्विकृतिकानि वा द्वादशैकाशनानि वा चतुर्विंशतिछ्यश-नानि, अथवा षट्सहस्रमितः स्वाध्यायो विधेयः, षष्टिप्रमाणा नवकारवालिका गण्या। अनया रीत्यापि तपःपूर्त्तिः कार्या, अन्यथा जिनाज्ञोल्लंघनदोषः स्यात्। अत्र प्रसंगात् नवकारसिकादितपःफलानि प्रदर्श्यंते—एकशतवर्षाणि यावन्नारकजीवोऽकामनिर्जरया कर्माणि क्षिपति, तावन्मितकर्माणि पापजनि-तानि नवकारसीप्रत्याख्यानेनापनयति। १। पौरुषीप्रत्याख्यानेनैकसहस्रवर्षदुरितमपनयति। २। सार्द्ध-पौरुषीप्रत्याख्यानेन तु दशसहस्रवर्षमितं पापमपनयति। ३। एवं पुरीमार्द्धेनैकलक्षवर्षमितं पापमपनयति। ४। अचित्तजलसत्कैकाशनेन दशलक्षवर्षमितं पातकं हंति। ५। नीवितपसैककोटिवर्षमितं पापमपन-यति। ६। एकलठाणप्रत्याख्यानेन दशकोटिवर्षमितं पापं हंति। ७। एकलदत्तेन शतकोटिवर्षमितं पापं हंति। ८। आचाम्लतपसैकसहस्रकोटिवर्षमितं कर्म हंति। ९। उपवासतपसा च दशसहस्रकोटिवर्ष-मितं पापमपनयति। १०। षष्ठतपसैकलक्षकोटिवर्षमितं पापमपाकरोति। ११। अष्टमाख्यतपसा च दशलक्षकोटिवर्षमितं दुरितं हंति। १२। सर्वत्र श्रावक इति शेषः, तदनु सर्वत्रैकैकोपवासवृद्ध्या क्रमेण दशगुणोऽकः प्रवर्द्धनीयः। अष्टमतपसा नागकेतुरत्रैव जन्मे प्रत्यक्षं फलं प्राप इति। सर्वमपि तपो गत-शल्यं कार्यं, सशल्यं तु दुष्करमपि तपो निरर्थकं। तथाहि—

इतोऽशीतितमचतुर्विंशतौ वहुसुतस्य नृपस्योपयाचितशतैर्जाता पुत्री वहुमान्या। स्वयंवरमंरूपे वृतवरा, दुष्कर्मतश्चतुरिकांतर्मृतपतिका, सुशीला, सतीषु प्राप्तरेखा, सुश्राद्धधर्मनिष्ठा। अन्यदाऽत्यार्हता दीक्षिता

लक्ष्मणार्या कदाचिच्चटकयुग्मसुरतं वीक्ष्य दध्यौ—"अर्हता किमेतन्नानुमतं ? अवेदोऽसौ वा न वेत्ति सवेददुःखं" इत्यादि । क्षणांतरे जातपश्चात्तापया तया ध्यातं—'कथमालोचयिष्यामि ?' इति प्रोद्भूतत्रपापि 'सशल्यत्वे सर्वथा न शुद्धिः' इत्यालोचितुं स्वं प्रोत्साह्य यावद्याति, तावदचिंतिते कंटके जग्नेऽपशकुनेन क्षुब्धा 'य ईदृग् दुर्ध्यायति, तस्य किं प्रायश्चित्तं ?' इति परव्यपदेशेन पंचाशद्वर्षी तीव्रं तपस्तेपे । उक्तं च—

"छट्ठमदसमदुवालसेहिं, निव्विगइएहिं दसवरिसेहिं । तहय खवणेहिं दुन्नि दोचेव य जुजिएहिं च ॥१॥
मासखमणेहिं सोलस, वीसं वासाइं अंबिलेहिं च । लक्खमणा अज्जा एवं, कुणइ तवं वरिसपन्नासं ॥२॥"

एवं सक्रियदुस्तपोविधानेऽपि सा न शुद्धा । प्रत्युतार्त्तध्यानान्मृता । दास्याद्यसंख्यभवेष्वनुभूततीव्रतरदुःखा श्रीपद्मनाभतीर्थकृत्तीर्थे सेत्स्यति । तदुक्तं—

"ससल्लो जइवि कट्ठुग्गं, घोरं वीरं तवं चरे । दिव्वं वाससहस्सं तु, तओ तं तस्स निप्फलं ॥ १ ॥"

इति । तथा वार्षिकप्रतिक्रमणेऽष्टोत्तरसहस्रश्वासोच्छ्वासमितः कायोत्सर्गो ज्ञेयः । प्रतिचतुर्विंशतिस्तवं—'चंदेसु निम्मलयरा' इति यावता पंचविंशतिश्वासोच्छ्वासा गण्याः, ४० लोगस्सध्यानैकनमस्काराधिके १००८ पयसमा ऊसासा इत्यत्र ज्ञेयं । चातुर्मासिकप्रतिक्रमणे ५०० श्वासोच्छ्वासाः, पाक्षिकप्रतिक्रमणे ३०० श्वासोच्छ्वासाः । अत्रैकैकश्वासोच्छ्वासमध्ये कियत्परिमितं देवायुर्बध्नाति ? तदुच्यते—"इगलक्खपञ्चचत्वारिंशत्स-

हस्रचतुःशताष्टमितपल्योपमानि ( २४५४०८ ), एकपल्योपमस्य नव भागाः क्रियंते, तन्मध्यगताश्चत्वारो भागा ग्राह्याः । यतः—

"लक्खगुणसहस्सपणचत्त, चउ सया अड चेव पलियाइं। किंचूणा चउभागा, सुराउबंधो इगूसासे ॥१॥"

समस्तनमस्काराष्टश्वासोच्छ्वासमध्ये १९६३२६७ तावंति सुरायूंषि बध्यंते । एकोनविंशतिलक्षत्रिषष्टिसहस्रद्विशतसप्तषष्ठीमितपल्योपमानि तोपरि दशेति संख्यया पल्यानि, देवलोकेषु येषां देवानामायुरेतावत्पल्यमितं स्यात् तत्रोत्पद्यते । तथैकोद्योतकरश्वासोच्छ्वास २५ मध्ये ६१ लक्ष ३५ सहस्रद्विश-

तथा पर्यूषणापर्वणि चैत्यपरिपाटी कार्या, चैत्यार्चादिभिः शासनोन्नतिर्विधेया । यथैकदा वज्रस्वामी दुर्भिक्षे प्रसृते संघं पटे संस्थाप्य सुभिक्षां पुरीं नीतवान् । तत्र बौद्धनृपेण जिनचैत्येषु पुष्पनिषेधः कृतः । तदनु पर्यूषणायां श्राद्धैर्विज्ञप्तः स व्योमविद्यया माहेश्वरीपुर्यां पितृमित्रमारामिकं पुष्पप्रगुणीकरणार्थमादिश्य स्वयं हिमवदद्रौ श्रीदेवीगृहे गतः । ततश्च श्रिया दत्तं महापद्मं हुताशनवनाद्विंशतिलक्षपुष्पाणि च लात्वा जृंभकामरविकुर्वितविमानस्थः समहोत्सवमागत्य श्रीजैनशासनं प्राभावयत्, नृपमपि श्रावकं चक्रे इति ।

तथाऽष्टाह्निकपर्वसु अमारिप्रवर्त्तनं कार्यं । श्रीकुमारनृपसंप्रतिनृपादिभिरिव संप्रतिकालेऽपि श्रीहीरगुरूपदेशादकब्बरसाहिना स्वकीयाखिलदेशेषु षाण्मासिकामारिप्रवर्त्तनं कृतं । तथाहि समासतः—

एकदा स्वप्रधानादिभ्यो हीरसूरेर्वर्णनं श्रुत्वा श्रीअकब्बरेण स्वनामांकितफुरमानं प्रेष्यातिबहुमानेन

गंधारतः आहूताः सं—१६३ए ज्येष्ठवहुलत्रयोदशीदिने गुरवस्तत्र संप्राप्ताः । श्रीसाहिना समं मिलिताः, साहिना सादरं पृष्टः सूरिस्तथा धर्मोपदेशं ददौ यथा आगराङ्गतोऽजमेरपुरं यावदध्वनि प्रतिक्रोशं कूपिकोपेतमनारादीन् विधाय स्वकीयाखेटकलाकुशलताप्रकटनकृते प्रतिमनारं शतशो हरिणविषाणारोपणविधानादिना प्राग् हिंसाकरणरतिरपि स नृपो दयामतिः संजातः । ततः श्रीसाहिरवदत्—"यत्श्रीमंतो मया दर्शनोत्कंठितेन दूरदेशादाकारिताः । अस्मदीयं च न किमपि गृह्यते, तेनास्मत्सकाशात्श्रीमद्भिरुचितं याच्यं" । ततो विचार्य सूरिभिस्तदीयाखिलदेशेषु पर्यूषणापर्वसत्काष्टाह्निकायाममारिप्रवर्त्तनं बंदिजनमोचनं चायाचि । तद्गुणचमत्कृतमनसा श्रीसाहिनास्मदीयान्यपि चत्वारि दिनानि समधिकानि भवंतु' इति कथयित्वा स्ववशीकृतदेशेषु श्रावणवहुलदशमीतः प्रारभ्य भाद्रपदशुक्लषष्ठीं यावदमारिप्रवर्त्तनाय द्वादशदिनामारिसत्कानि कांचनरत्नांचितानि स्वनामांकितानि षट्फुरमानानि त्वरितमेव गुरूणां समर्पितानि । प्रथमं श्रीगुर्जरदेशीयं, द्वितीयं मालवदेशसत्कं, तृतीयमजमेरदेशीयं, चतुर्थं दिल्लीफत्तेपुरसत्कं, पंचमं लाहुरमुलतानसत्कं, श्रीगुरुपार्श्वे रक्षणाय षष्ठं पंचदेशसंवंधिसाधारणं चेति । तेन तत्तद्देशेष्वमारिपटहो विस्तृतः, तथा श्रीगुरूणां पार्श्वादुत्थाय तद्वानेकगव्यूतिमिते डावरनाम्नि महासरसि गत्वा साधुसमक्षं स्वहस्तेन नानाजातीयानां देशांतरीयजनप्राभृतीकृतानां पक्षिणां मोचनं चक्रे, तथा कारागारस्थवहुजनानां वंधनभंजनमपि कारितं । ततः श्रीसूरिणा साहिप्रार्थनया श्रीजंवूद्वीपपन्नत्तिवृत्तिविधा-

यकवाचकश्रीशांतिचंद्राः स्वपरशास्त्रज्ञाः पश्चिमाधीशवरुणसुरदत्तवरास्तत्र धर्मश्रावणार्थं निहिताः । तैः स्वोपज्ञकृपारसकोशाख्यशास्त्रजलेन सिक्ता सती श्रीसाहेर्हृदये कृपालता वृद्धिमती बभूव ।

अथैकदा साहेः पुरः आमलकप्रमाणे द्वे मुक्ताफले केनचिदिभ्येन प्राभृतीकृते । तं सन्मान्य स्वकोशाधिपं वाद्यजनकारकं १२ हजारिमनसबं बिभ्रतं च तं प्रति ते मुक्ताफले रक्षणाय प्रदत्ते । सोऽपि स्वगृहे गत्वा भार्यायै ददौ । सापि स्नानोत्सुका स्ववस्त्रे बध्ध्वा स्नानं चकार । तदनु सुरत्राणसत्के ते ज्ञात्वा स्वेष्टस्थले मुमोच । क्रमादामयार्दिता सा पंचत्वं प्राप । अन्यदा नृपेण ते मार्गिते, स स्माह—'हे स्वामिन् । मद्गृहात्समानयामि' । ततस्तेन स्वमंदिरं सर्वत्रान्वेषितं, परं कापि ते अप्राप्य चिंतार्दितो निस्तेजा व्यावृत्त्यायाति नृपान्त्यर्णे, तदांतराले पुण्योदयेन वाचकेंद्रा मिलिताः । तैश्चिंतास्वरूपं पृष्टं । जीवितमुक्तस्पृहेण तेन यथाजातं विज्ञप्तं, तदा ते प्राहुः—'त्वया गृहे गत्वा पूर्वं यत्र यस्यै दत्ते, तत्रैव तस्याः समीपे मार्गणीये फले' । सोऽपि गृहे गतः । तत्रैव स्नानोद्यतां तां वीक्ष्य ते मार्गिते, तयापि स्वशाटिकांचलग्रंथीमुन्मुच्य दत्ते । सोपि प्राप्ताश्चर्यः साहिपार्श्वे समेतस्तत्पुरस्ते संस्थाप्य भूयश्चामरविंजनोद्यतोऽभूत्, परं तदाश्चर्यमग्नो भूयोभूयः स्तिमितजडत्वं प्राप्नोति । तदा साहिना पृष्टः—'किमद्य चित्रलिखित इव त्वं भवसि ?' इति निर्बंधेन पृष्टः सर्वं ज्ञातं स्माह । तदा साहिनोदितं—'किमत्र चित्रं, स तु द्वितीयो विश्वेशोऽस्ति' । अथ प्रगे धर्मश्रावणार्थं सभामध्ये वाचकेंद्रः कांचनपादपीठोपरि समेत्य स्थितः । ततो भूपः प्रणम्येति व्यजिज्ञपत्—'हे पूज्य ! किमप्याश्चर्यमस्माकं दर्शय' । सोऽप्याह—'कल्ये गुलाबपुष्पारामे

त्वया गंतव्यं'। प्रगे साहिस्तत्र गतः, वाचकेंद्रोऽपि तत्रागात्। द्वौ परस्परं धर्मगोष्ठीं तनुतः, तावत्साहिनो-
वतगर्जारवो जातः, सहसा तदाकर्ण्य चकितः स्वसेवकान् पप्रच्छ—'अस्मदाज्ञां विना कस्यापि ढक्कारवो
द्वादशगव्यूतिमध्ये न जायते, पश्यत यूयं'। ततस्ते विलोक्य साधिपं प्राहुः—'हे साधिप ! युष्मत्पिता
हुमायुः स सचमूस्तव मिलनाय समेति' इति कथनानंतरमेव समेत्य पुत्रं परिरभ्य च स्थितः सर्वेषामक-
बरसैनिकानां मेवामिष्टान्नरूतरजतपात्राणि ददौ। साहिं प्रति महत्सन्मानं दत्वा यथागतस्तथा ययौ,
क्षणेनादृश्योऽभूच्च। साहिः साश्चर्यं दध्यौ—'नेदं तांत्रिकं, यतोऽस्मदादिसमर्पितवस्तूनीमानि प्रत्यक्षं
दृश्यंते, अतोनूनमिदं चेष्टितं गुरुणा निर्मितं'। ततो गुरवे नत्वा स्तुतिं चकार। अथैकदा साहिरटक-
देशेशजयनार्थं ३२ क्रोशमितप्रयाणमकरोत्। तदा साहिना स्वभृत्येन समागतजनान्वेषणं नामग्राहपूर्वं
कारितं, तन्मध्ये वाचकचंद्रस्यापि नाम श्रुत्वा दध्यौ 'अहो वाहनोपानदादि विनाऽमी महद्दुःखं प्राप्ता
अत्राविष्यन्'। ततस्तदाकारणाय स्वोपजीविनः प्राहिणोत्। ते तं प्राहुः—'त्वां साहिराकारयति'। तदा
वाचकेंद्रावस्थेदृशी जातास्ति—सोफयुक्तचरणत्वात्पदमात्रमप्यग्रे चलनाक्षमाः, टौप्परकस्थितप्रासुकजलेन
वस्त्रांचलमार्द्रीकृत्य स्वोरसि स्थापितमस्ति, द्वौ शिष्यौ वैयावृत्यं कुरुतः। ततः सेवकैरेतत्स्वरूपं सर्वं
नृपाय निवेदितं। तदा साहिः सुखासनं प्रैषयत्, तदा स एकां काष्ठवल्लिकामानाय्य तदुपर्यारुरोह, स्व-
शिष्यौ काष्ठप्रांतौ स्कंधे न्यस्य चलितौ। साहिस्तथावस्थं तमागच्छंतं वीक्ष्य दध्यौ—'अहो गुरुवाक्य-
रक्ता धन्या इमे ये मदनुयायिनः संति, अन्यथा मदभ्यर्णे न काप्येषां प्राप्तिः, अहो क्षमाश्रमणानां

क्षमा'। ततः साहिरभिमुखीभूय तत्पादयुग्मं चक्षुर्भ्यां पस्पर्श प्रोवाच च—'स्वामिन्! अतःपरं मत्कृते मह-त्प्रयाणं युष्माभिर्न विधेयं, शनैः शनैः पश्चात्समेतव्यं'। ततः क्रमेण साहिरटकदेशाधिपपुरं परिवेष्ट्य स्थितः, द्वादश वर्षाणि जातानि, परं तद्वप्रो न स्वायत्तोऽभूत्। एकदा साहिपुरो म्लेच्छा अन्ये च प्राहुः—'त्वं प्रत्यहं कापुरुषश्वेतपटसंगं करोषि, तेनायं दुर्गो दुर्ग्रहोऽनुमीयते'। तद्वृत्तं भूपेन तस्मै वाचकेंद्राय ज्ञापितं। गुरुः प्राह—'यद्दिवसे दुर्गग्रहणेच्छा तव स्यात्, तत्समये गृह्यते, परं त्वत्सैन्यं सर्वं स्कंधावारेऽवस्थाप्यं, आवां द्वावेव व्रजावः, परं पुरांतर्बहिश्च कस्यापि केनापि हिंसा न विधेया'। ततः पटहोद्घोषेण हिंसां सर्वत्र निवार्य प्रभाते द्वावेव दुर्गसमीपमीयतुः। सर्वे निंदका ऊचुः—'असौ कापुरुषोऽकब्बरं शत्रुहस्ते समर्पयिष्यति'। ततो वाचकेनैकया फूत्कृत्या सर्ववप्रखातिका रजःपूर्णीकृता, द्वितीयया शत्रुसैन्यं स्तंभितं, तृतीयया च गोपुराणि फुल्लिका इव स्फुटितानि। ततः साहिः सोत्साहं साश्चर्यं च पुरे स्वाज्ञामखंडां चकारेति। 'हे पूज्य! मम किंचिदनुग्रहं विधाय समादिश' तदा वाचकेंद्रेण १४ कोटीद्रव्यस्थानकं राज्ञः प्रतिवर्षं जीजीयाकरमोचनं याचितं, सपादसेरचटकजिह्वाभक्षणं त्वया न कार्यं, सुवर्णटंकैकशत्रुंजयकरमोचनं याचितं, षाण्मासिकामारिप्रवर्त्तनं च, तथा हि—श्रीमत्साहिजन्मसंबंधिमासः, श्रीपर्यूषणापर्वसत्कानि १२ दिनानि, सर्वे रविवाराः, सर्वसंक्रांतितिथयः, नवरोजसत्को मासः, सर्वे इदवासराः, सर्वे मिहरवासराः, सोफिआनवासराश्चेति षाण्मासिकामारिसत्कं फुरमानं' इत्यादिफुरमानानि च श्रीसाहिपार्श्वात्समानीय श्रीगुरूणां प्राभृतीकृतानि वाचकेंद्रेणेति।

अष्टाह्निकापर्वसु शासनोन्नतिं, नानाविधां धर्मविवृद्धिहेतवे ।
पूर्वोक्तयुक्त्या विदधातु भावुकः, सौभाग्यलक्ष्म्यादिसुप्रेमसस्पृहः ॥ १ ॥

॥ इत्यब्ददिनपरिमितहितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थस्य वृत्तौ दशमस्तंभे सप्तचत्वारिंशदुत्तरशततमं व्याख्यानम् ॥ १४७ ॥

## ॥ अष्टचत्वारिंशदुत्तरशततमं व्याख्यानम् ॥ १४८ ॥

अथाष्टाह्निकपर्वाराधकैर्वर्षकृत्यानि विधेयानीत्याह—

संघार्चादिसुकृत्यानि, प्रतिवर्षं विवेकिना । यथाविधि विधेयानि, ह्येकादशमितानि च ॥ १ ॥

स्पष्टः । नवरमेकादशसुकृत्यानि पूर्वसूरिप्रणीतगाथाभ्यां प्रदर्श्यंते—

"पइवरिसं संघच्चणं, साहम्मिअभत्ति जत्ततिगं । जिणगिहिएन्हवणं, जिणधणवुड्ढि अ महपूआ ॥ १ ॥
धम्मजागरिआ सुअपूआ, उज्जवणं तह तित्थपभावणा ।
( गुरुजोगे आलोयण कुणंताणं तब्भवे ) सोहि" ॥ २ ॥

व्याख्या—प्रतिवर्षं वर्षे वर्षे जघन्यतोऽप्येकैकवारं संघार्चनं, प्रतिवर्षं श्रीसंघपूजा—तत्र साध्वीसाधुभ्यो निर्दोषाहारपुस्तकादिकं दत्ते, श्राविकाश्राद्धेभ्यो यथाशक्ति सद्भक्तिपरिधापनादिकं विधत्ते । संघार्चा त्रिविधा—उत्कृष्टा मध्यमा जघन्या च, सर्वदर्शनसर्वसंघपरिधापने उत्कृष्टा, सूत्रमात्रादिना

जघन्या, शेषा मध्यमा। तत्राधिकं व्ययितुमशक्तो गुरुभ्यः सूत्रमुखवस्त्रादिकं, द्वित्रश्राविकाश्राद्धेभ्यः पूगादिकं च दत्त्वा प्रतिवर्षं संघार्चाकृत्यं भक्त्या सत्यापयति, निःस्वस्य तावदपि महाफलदं पुणिया-श्राद्धस्येव। यतः—

"संपत्तौ नियमः शक्तौ, सहनं यौवने व्रतम्। दारिद्र्ये दानमप्यल्पं, महालाभाय जायते" ॥ १ ॥

इति साधर्मिकाणां निमंत्रणं विशिष्टाशनवसनादिदानं,आपन्निमग्नानां स्वधनव्ययेनाप्युद्धरणं। उक्तं च—

"न कयं दीणुद्धरणं, न कयं साहम्मिआण वच्छल्लं। हिअयंमि वीयराओ, न धारिओ हारिओ जम्मो" ॥१॥

श्राविकास्वपि वात्सल्यं श्रावकवदन्यूनाधिकं विस्तार्यं, ता अपि रत्नत्रयीवत्यः सुशीलाः सधवा विधवाः साधर्मिकत्वेन ध्येयाः। अत्र शिष्यप्रश्नः—'स्वामिन्! स्त्रियो लोके लोकोत्तरे च दोषान्विताः प्रसिद्धा यतः—

"अनृतं साहसं माया, मूर्खत्वमतिलोभता। अशौचं निर्दयत्वं च, स्त्रीणां दोषाः स्वभावजाः" ॥ १ ॥

सुकुमालिकासुरीकांताकपिलाऽभयानूपुरपंक्तिनागश्रीप्रमुखा अवदाताः स्वयमभ्यूह्याः। आगमेऽपि—

"अणंताओ पावरासीओ, जया उदयमागया। तया इत्थित्तणं पत्तं, सम्मं जाणाहि गोयमा" ॥ १ ॥

अत्र रक्तार्यादय उदंताः, सर्वत्र तासां निंदा दृश्यते। अतस्तासु दानसन्मानवात्सल्यं कथं युक्तं?'

गुरुराह—'नायमेकांतः, यद्वनिता एव दोषबहुलाः, पुरुषा अपि केचित्। अखाड्रागोरूसदृशा महाक्रूराशया नास्तिका देवगुरुवंचकाश्च भूयांसोऽपि दृश्यंते, एवं स्त्रीणामपि कासांचिद्दोषबहुलत्वमुपलभ्यते,

तथापि कासांचिद्गुणबहुलत्वमप्यस्ति । अत्र सुलसारेवतीकलावतीमदनरेखादयः श्राविकाः श्रीतीर्थनाथैरप्यनेकधा स्तुताः । अतस्तासां जननीनामिव भगिनीनामिव स्वपुत्रीणामिव वात्सल्यं युक्तियुक्तमेवेत्यलं' । १-२ । तथा प्रतिवर्षं जघन्यतोऽप्येकैकयात्रा कार्या, ( एवं च ) यात्रात्रिकं, यतः—

"अष्टाह्निकाभिधा चैका, रथयात्रा तथाऽपरा । तृतीया तीर्थयात्रा चे–त्याहुर्यात्रास्त्रिधा बुधाः" ॥ १ ॥

अष्टाह्निकासु सर्वचैत्यपूजादिमहामहो विधेयः । रथयात्रा तु कुमारपालेनैवं कृता । यतः—

चित्तस्स अट्ठमिदिणे, चउत्थ पहरे महाविभूईए । सहरिसमिलंत नायर,–जणकयमंगलजयसद्दो ॥ १ ॥
सोवन्नजिणवररहो, नीहरंत चलंतसुरगिरिसमाणो । कणगोरुदंडधयछत्त–चमरराईहिं दिप्पंतो ॥ २ ॥
एहविअ विलित्त कुसुमोहिं, पूइअं तत्थ पासजिणपडिमं । कुमरविहारदुवारे, महयणो ठवइ रिद्धीए ॥ ३ ॥
तूररवभरिअभुवणो, सरसनच्चंतचारुतरुणिगणो । सामंतमंतिसहिउं, वच्चइ निवमंदिरंमि रहो ॥ ४ ॥
राया रहत्थपडिमं, पट्टसुअकणयभूसणाईहिं । सयमेव अच्चिउं कारवेइ विविहाइं नट्टाइं ॥ ५ ॥
तत्थ गमिऊण रयणिं, नीहरिउं सीहवारबाहिंमि । ठाइ एवं चिअ धय,–तंडवंमि पडमंडवंमि रहो ॥ ६ ॥
तत्थ पहाए राया, रहजिणपडिमाइ विरइउं पूअं । चउविहसंघसमक्खं, सयमेवारत्तिअं कुणइ ॥ ७ ॥
तत्तो नयरंमि रहो, परिसक्कइ कुंजरेहिं जुत्तेहिं । ठाणेठाणे पडमंडवेसु विउलेसु दिप्पंतो ॥ ८ ॥

इत्यादि । अथ तीर्थानि—श्रीशत्रुंजयरैवतादीनि, तथा तीर्थकृज्जन्मदीक्षाज्ञाननिर्वाणविहारभूमयोऽपि प्रभूतभव्यसत्त्वशुभभावसंपादकत्वेन भवोदधितारणात्तीर्थानि कथ्यंते, तेषु दर्शनादिविशुद्ध्यर्थं विधि-

वद्यात्राकरणं । यथा श्रीसिद्धसेनार्कप्रतिबोधितविक्रमार्कस्य श्रीशत्रुंजययात्रासंघे एकोनसप्तत्यधिकशतं सौवर्णदेवालयाः, पंचशतीदंतचंदनादिमयाः, श्रीसिद्धसेनाद्याः पंचसहस्रसूरयः, चतुर्दश नृपा मुकुटबद्धाः, सप्ततिलक्षाणि श्राद्धकुटुंबानि, एका कोटिर्दश लक्षाणि नवसहस्री च शकटानि, अष्टादशलक्षाणि तुरंगमाः, षट्सप्ततिशतानि गजाः, एवं करभवृषभाद्यपि ज्ञेयं । श्रीकुमारपालस्य स्वर्णरत्नादिमयाश्चतुस्सप्तत्यधिकाष्टादशशतदेवालयाः, आभूसंघपतेस्तु सप्तशतानि, तद्यात्रायां द्वादशकोटिस्वर्णव्ययः, साधुपेथड-स्यैकादशरूपटंकलक्षव्ययस्तीर्थदर्शने संघे च देवमंदिराणि द्विपंचाशत् मनुष्याश्च सप्तलक्षाः, मंत्रिवस्तुपालस्य सार्द्धा द्वादशयात्राः प्रसिद्धाः इति । ३ ।

तथा चैत्ये स्नात्रमहोऽपि विस्तारेण सर्वपर्वसु कर्तुमशक्तेनापि प्रतिवर्षमेकैकः कार्यः । श्रूयते हि— साधुपेथडेन श्रीरैवतस्नात्रमहामहे षट्पंचाशद्घटीस्वर्णेनेंद्रमाला परिदधे । श्रीशत्रुंजयरैवतयोश्चैक एव कांचनमयो ध्वजः प्रददे, तत्सुतेन साधु झांझणेन तु दुकूलमयः इति । ४ । तथा देवद्रव्यवृद्ध्यर्थं प्रतिवर्षं मालोद्घटनं कार्यं, तत्र चैंद्री अन्या वा माला ग्राह्या । श्रीरैवते श्रीश्वेतांबरदिगंबरसंघयोस्तीर्थविवादे सति 'य इंद्रमालां परिधत्ते तस्येदं तीर्थं' इति वृद्धोक्तौ साधुपेथडेन षट्पंचाशद्घटीस्वर्णेनेंद्रमाला परिदधे, चतुर्घटीस्वर्णं मार्गणेभ्यो ददे तीर्थं च स्वीचक्रे, इत्यादिशुभविधिना देवस्ववृद्धिः कार्या इति ।५। तथा प्रतिवर्षं पर्वसु चैत्ये महापूजा विधेयेति । ६ । तथा रात्रिजागरणं तीर्थदर्शने कल्याणकदिनेषु गुरुनिर्वाणादौ च कार्यं श्रीवीतरागगुणगीतनृत्यादिमहैरिति । ७ । तथा श्रुतज्ञानभक्तिः प्रत्यहं कर्तुमशक्तेन

प्रतिवर्षं प्रतिमासं च कार्या इति । ७ । तथा नवपदसिद्धचक्रैकादशीपंचमीरोहिणीज्ञानदर्शनचारित्रादिविविधतपःसंबंधिपूद्यापनेषु जघन्यतोऽपि एकैकमुद्यापनं वर्षे वर्षे यथाविधि कार्यं । यतः—

"उद्यापनं यत्तपसः समर्थने, तच्चैत्यमौलौ कलशाधिरोपणम् ।
फलोपरोपोऽक्षयपात्रमस्तके, तांबूलदानं कृतभोजनोपरि" ॥ १ ॥

सर्वत्र शुक्लपंचम्यादिविधितपसामपि तत्तदुपवासादिसंख्यानाणकवर्तुलिकानालीकेरमोदकादिनानाविधवस्तुढौकनादिना यथाश्रुतसंप्रदायमुद्यापनानि विधेयानीति ॥ ए ॥

तथा तीर्थप्रभावनानिमित्तं श्रीगुरुप्रवेशोत्सवप्रभावनादि जघन्यतोऽपि प्रतिवर्षमेकैकवारं कार्यं, तत्र श्रीगुरुप्रवेशोत्सवः सर्वांगीणप्रौढाडंबरचतुर्विधश्रीसंघसंमुखगमनेन श्रीगुर्वादिसंघसत्कारादिना च यथाशक्ति कार्यः । श्रीवीरवंदनमहोत्सवे श्रीऔपपातिकसूत्रवर्णितकौणिकनृपवत्, प्रदेशिनृपवत्, उदायिभूपवत्, दशार्णभद्रमहीनाथवद्वा विधेयः । तथा साधुपेथडेन श्रीधर्मघोषसूरीणां प्रवेशोत्सवे द्विसप्त-(२७) सहस्रटंकव्ययश्चक्रे । ननु संविग्नसाधूनां प्रवेशोत्सवोऽनुचितः, इति न वाच्यं, यतो व्यवहारभाष्ये प्रतिमाधिकारे—

"तीरिआ उब्भामनिउंगोअ, दरिसणं सन्निसाहुमप्पाहे । दंडिअभोईअसई, सावगसंघोवसक्कारं" ॥ १ ॥

तीरितायां समाप्तप्रतिमायामुत्प्राबल्येन भ्रमंत्युद्भ्रामा भिक्षवः, तेषां नियोगो व्यापारो यत्र स उद-

ग्रामकनियोगो ग्रामः, तत्रागत्य स्वात्मानं दर्शयति, ततः संयतः संज्ञिनं वा श्राविकां वा संदेशयति— यथा समापिता मया प्रतिमा ततोऽहमागतः' । ततो दंकिको राजा जोजिको ग्रामाध्यक्षश्च तदभावे श्रावकवर्गः संघश्च सत्कारं प्रवेशोत्सवादिकं करोति, शासनोन्नतेस्तीर्थकृत्त्वादिफलत्वात् । १० । तथा गुरुयोगे जघन्यतोऽपि प्रतिवर्षमालोचना गुरुभ्य आदेया । यतः—

"जंबूदीवे जइ हुज्जा, वालुया ते चेव हुंति रयणाइं । दिज्जंति सत्तखित्ते, न छुट्टए दिवसपच्छित्तं" ॥ १ ॥

"जंबूदीवे जे हुंति, पव्वया ते चेव हुंति हेमस्स । दिज्जंति सत्तखित्ते, न छुट्टए दिवसपच्छित्तं" ॥ २ ॥

आलोचनां विना बहुवासरोपार्जितपापहानिः कथं स्यात् ? विधिवदालोच्य गुरुदत्तं प्रायश्चित्तं विधत्ते, तदा तद्भवेऽपि शुध्यति, कथमन्यथा दृढप्रहारिप्रमुखाणां तद्भवेऽपि सिद्धिरिति । ११ ।

कृत्यान्यमूनि प्रतिवत्सरं मुदा, श्राद्धा वितन्वंति विवेकसंभृताः ।
तत्पुण्यपुष्ट्या कृतिनः कृतार्थिनः, सिद्धिं लभंते प्रभुधर्मकर्मगाः ॥ १ ॥

॥ इत्यब्ददिनपरिमितहितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थस्य वृत्तौ दशमस्तंभे अष्टचत्वारिंशदुत्तरशततमं व्याख्यानम् ॥ १४८ ॥

---

१ श्रावकम्.

## ॥ एकोनपंचाशदुत्तरशततमं व्याख्यानम् ॥ १४९ ॥

अथ पर्वदिनेषु पौषधो न हेय इत्याह—

ये पौषधोपवासेन, तिष्ठंति पर्ववासरे । अंतिम इव राजर्षि–र्धन्यास्ते गृहिणोऽपि हि ॥ १ ॥

स्पष्टः । श्लोकसूचितसंबंधोऽयं

सिंधुसौवीरदेशे वीतभयादित्रिषष्ठ्यधिकत्रिशती ३६३ नगराधीश उदायिनृपः, तस्य प्रभावती पट्टदेव्यस्ति । तयोरभीचिनामा पुत्रः, केशीति नाम्ना च भागिनेयोऽप्यस्ति । इतश्च चंपायामाजन्मस्त्रीलंपटः कुमारनंदिस्वर्णकृद्यां यां सुरूपां कन्यां शृणोति तां स्वर्णपंचशतीं दत्त्वा गृह्णाति । एवं पंचशतानि स्त्रियो जाताः, ताभिः सहैकस्तंभसौधेऽरंस्त । तस्य नागिलश्राद्धो मित्रमस्ति । एकदा पंचशैलाधिपव्यंतरदेव्यौ शक्राज्ञया नंदीश्वरं प्रस्थिते, तदानीं तत्पतिर्विद्युन्माली च्युतः । ततस्ते हासाप्रहासानाम्न्यौ कामुकं तत्स्वर्णकृतं तत्रावातरतां । ते दृष्ट्वा परिरब्धुकामः प्रोवाच—'के युवां ? किमर्थमागते ?' ते प्रोचतुः—'भव दर्थे' । प्राप्तसंज्ञः स हेमकृत्प्रार्थनां चक्रे । ते ऊचतुः—'त्वं पंचशैले समागच्छेः, तत्रावयोः संगो भावी' इत्युक्त्वा ते उत्पतिते । स भूभुजे स्वर्णं दत्त्वा इति पटहमवादयत्—'यो मां पंचशैले द्वीपे नेता, स द्रव्यकोटीं लब्धा' । तत एकेन निर्यामकस्थविरेण पटहो धृतः, कोटीधनं चाददे । यानपात्रं सज्जीकृत्य स्वर्णकृता साकं पोतस्थो वृद्धोऽब्धिवर्त्मनि सुदूरमागत्येत्यूचे—'भोः कुमार ! अब्धिकूले तद्बैलपादजातोऽयं वटो

दृश्यते, यदा पोतमधो याति तदाऽस्य शाखायां त्वं विलगेः, निश्यत्र जारंरुा एष्यंति, तेषु सुप्तेषु कस्य-चिदंघ्रौ पटेन स्वयं स्वं बद्धा दृढमुष्टिना विलगेः । प्रातरुड्डीनास्ते त्वां पंचशैले नेष्यंति । यदि वटेऽविलग्नस्त्वमेतद्यानपात्रमिव महावर्त्ते पतित्वा विनंक्ष्यसि । तथा कृते स पक्षिणा तत्र निन्ये । स क्रमेण हासाप्रहासाभ्यां दृष्टः, तेनापि जोगार्थं प्रार्थिते, ताभ्यां प्रोचे—'अनेनांगेनावयोः संगो न जवेत्, किंतु अग्निप्रवेशादिना कृतनिदानेन त्वं पंचशैलेशो जव' स दध्यौ—'उजयतो ज्रष्टोऽहं' इति चिंतार्त्तस्ताभ्यां स्वपुरे मुक्तः । ततः स देवांगनांगमोहितोऽग्निसाधनं प्रारेजे । तदा नागिलश्राद्धेनोक्तं—'मित्र ! बालमरणं नार्हं तव' इत्यादिना वार्यमाणोऽपि निदानेनाग्निशरणं कृत्वा पंचशैलेशो जज्ञे । नागिलस्तद्वैराग्यात्प्रव्रज्याऽच्युते देवो जातः । अन्यदा नंदीश्वरयात्रार्थं प्रस्थितानां देवानां पुरो गातुं तदाज्ञया हासाप्रहासे चलिते स्वपतिमूचतुः—'स्वामिन् ! त्वं पटहं वादय' सोऽहंकारेण नोऽवादयत्, तदा दुष्कर्मणा पटहः कंठे व्यलगत् , तदानीं ताभ्यामुक्तं—'जोः प्राणेश ! त्वं कुलोचितं कुरु मा त्वं लजस्व'। ततो विद्युन्माली देवो गायंतीभ्यां ताभ्यां सह पटहमवादयत्, त्रिदवौकसां पुरतश्चचाल । तदानीं नागिलः स्वर्गी यात्रायां व्रजन् विद्युन्मालिनं निजपूर्वजवमित्रमवधिज्ञानाद्ददर्श । ततः स्वर्गिणा स जाषितः—'जद्र ! त्वं मां जानासि ?' स जगौ—'तेजस्विन्नाहं जाने त्वं कोऽसि' । ततस्तेन श्राद्धरूपं कृत्वा स्वस्य पूर्वजवस्वरूपं येन धर्मेण प्राप्तं देवत्वं तत् स्वरूपं प्रोक्तं । तच्छ्रुत्वैवमवदत्—'जो मित्र ! किमहं करोमि?' अच्युतसुरेणोक्तं—'मित्र ! गार्हस्थ्ये चित्रगृहे कायोत्सर्गेण स्थितस्य जावसाधोर्वीरविजोर्मूर्त्तिं त्वं कारय,

तव बोधिबीजमुत्पत्स्यते' तदुक्तमुररीकृत्य गृहे प्रतिमास्थं श्रीवीरमपश्यत्। ततो देवो हिमवंतशैले गत्वा गोशीर्षचंदनं छित्त्वा यथादृष्टां मूर्तिं सविभूषणां चक्रे, जातिचंदनस्यैकां पेटीं कृत्वा कपिलकेवलिपार्श्वे प्रतिष्ठाप्य तस्यां चिक्षेप, तदानीमेकस्य सांयात्रिकस्यांबुधौ पोतस्योत्पातयोगतो भ्रमतः षण्मासी गता। देवस्तं ददर्श, तस्य पीडां संहृत्य प्रतिमागर्भं समुद्गकमर्पयित्वा प्राह—'त्वं वीतभयपत्तने गत्वा इत्युद्घोषणां कुर्वीथाः—'इयं परमात्मप्रतिमा गृह्यतां गृह्यतां'। ततः स प्रतिमानुभावतस्तन्नगरे गत्वोद्घोषणां चक्रे। तत्र द्विजतापसनृपादयोऽनेके समाजग्मुः, ते स्वेष्टदेवान्स्मृत्वा स्मृत्वोद्घाटयंति परं नोद्घटते। एवं मध्याह्ने राज्ञी भोजनाय चेटीं संप्रेष्य नृपमाह्वयत्, राज्ञापि तथ्ये प्रोक्ते प्रभावती तत्रैत्य देवाधिदेवोऽर्हन् न त्वन्ये ब्रह्मादय इति मत्वा संपुटं चंदनादिभिः संपूज्य प्रोचे—

"प्रातिहार्याष्टकोपेतः, प्रास्तरागादिदूषणः।
देयान्मे दर्शनं देवा-धिदेवोऽर्हंस्त्रिकालवित्" ॥ १ ॥

इत्युक्ते स्वयं संपुटाज्जिनमूर्तिर्निर्गता। अथ सा तां चैत्यगृहे न्यस्य त्रिसंध्यमपूजयत्। अन्यदा द्रव्यपूजानंतरं राज्ञी प्रीता जिनवरस्य पुरो नृत्यति स्म, राजा च वीणामवादयत्, तदा नृपः शिरोहीनं नृत्यंतं प्रभावत्याः कबंधं ददर्श, तदनिष्टं वीक्ष्य क्षुभितनृपकराद्वीणाऽगलत्, तदानीं क्रुद्धा राज्ञी जगौ—'हे प्राणेश! किमेतज्जातं?'। नृपः स्वीकदाग्रहात्तथ्यमाख्यत्। सा प्राह—'अनेनारिष्टेन ममायुरल्पमेव ज्ञायते'। पुनरन्यदा कृतस्नाना राज्ञी देवार्चार्हाणि श्वेतवासांसि दास्या हस्तेनानाययत्, परं भाविविघ्न-

वशाद्राज्ञी रक्तान्युदैक्षत । अनर्हाणि वीक्ष्य कोपादादर्शेन तां जघान । ततस्तानि श्वेतान्येव दृष्ट्वाऽचिंतयत्—'धिग् मया व्रतं खंडितं, एतत्पापक्षयार्थं प्रव्रजामि, वस्त्रवर्णानामन्यथात्वप्रेक्षणेन ममायुरल्पमेव'। ततः स्वाम्याज्ञया व्रतोत्सुका जाता, तदा नृप एवं प्राह—'देवि ! देवत्वाप्तया त्वयाहं धर्मे बोधनीयः'। ततः सम्यक्चारित्रं प्रपद्यानशनं कृत्वा सौधर्मकल्पे सुरोऽभूत् । ततस्तां मूर्त्तिं देवदत्ताख्या चेटी कुब्जिकाऽपूजयत् । अथ स सुरस्तापसरूपधरः संसदि नृपाय दिव्यामृतफलप्राभृतमकरोत्, राजा तत्फलास्वादेन मोहितस्तं मुनिं जगौ—'मुने ! एतत्फलोत्पत्तिस्थानं दर्शय'। मुनिनोक्तं—'त्वं ममाश्रमे एहि'। ततः स राजा तेन सह वेगेन गतः । स सुरो देवमायया तादृक्फलभरोपेतमारामं किंचिद्गत्वा विचक्रे । तं दृष्ट्वा नृपो दध्यौ—'अहमेषां भक्तोऽस्मि, अतः फलादनेच्छां मे पूरयिष्यन्ति' इति विचिंत्य राजा कपिवद्धावे, तावत्तैः क्रोधात्करे दंडं कृत्वा कुट्यमानस्तस्करवदनशत्, नश्यताऽग्रे साधूनवलोक्य तेषां शरणं कृतं, तैः साधुभिराश्वासितः क्ष्मापोऽचिंतयत्—"अहो ! क्रूरैस्तापसैर्वंचितोऽहं"। ततः प्रभावतीदेवः प्रत्यक्षीभूय प्रतिबोधाय स्वकृतस्वरूपमुक्त्वा स्वर्गं जगाम, नृपोऽपि जिनधर्मैकमनाः स्वस्थानं गतः, राजा स्वं सभास्थितमैक्षत ।

इतश्च गांधारश्राद्धो नित्यार्हत्प्रतिमा विवंदिषुर्वैताढ्यमूले तपसा तस्थौ । तुष्टा शासनसुरी तदीप्सितमपूरयत् । प्रसन्ना कामदा अष्टोत्तरशतगुटिकास्तस्मै ददौ । एकां गुटिकामास्ये क्षिप्त्वा स दध्यौ—'अहं वीतभयपत्तने देवाधिदेवमूर्त्तिं वंदितुं यामि' इति चिंतितमात्रेण मूर्त्त्यंतिके देवेन नीतः । तां संपूज्य तत्र

सुखेनास्थात् । अन्यदा स सुवीरासन्नां मृतिं मत्वा साधर्मिकाया देवदत्ताकुब्जायास्ता गुटिका दत्त्वा स्वयं दीक्षां लवौ । सा रूपार्थिनी एकां मुखे क्षिप्त्वा क्षणेन दिव्याकारधरा जाता । अतो राज्ञा तस्याः सुवर्णागुलिका इति नाम दत्तं । पुनः सा एकां गुटिकामास्ये मुक्त्वा दध्यौ—"अनुरूपवराभावे मम रूपं वृथा, अयं नृपस्तु मम पितैव, अतश्चंडप्रद्योतनृपो मम पतिरस्तु" तदा सा सुरी प्रद्योतपुरस्तद्रूपमवर्णयत्, नृपस्तस्याः प्रार्थनाकृते दूतमादिशत्, चरस्तत्र गत्वा तामर्थयामास । सा तं प्रत्याह—'नृपदर्शनानंतरमुभयोः समीहितं भविष्यति' । सोऽपि गत्वा तथैव जगौ । तदाऽनिलवेगगजारूढो निशि तत्रागात् । विपिने उभावपि मिलितौ । नृपेणोक्तं—'हे प्रिये ! त्वं मत्पुरीमेहि' कुब्जाह—'जिनमूर्तिं विना न जीवामि, अतोऽस्याः प्रतिकृतिस्त्वया समानेतव्या, तामिह मुक्त्वा एषा सहैव नीयते" । ओमित्युक्त्वाऽवंतीशः स्वनगरे गत्वा जात्यचंदनमयीं वीरमूर्त्तिमकारयत् । ततोऽवंतीशेन प्रार्थितकपिलर्षिः पंचशतमुनियुतो वासनिक्षेपपूर्वं तां प्रत्यतिष्ठिपत् । ततो विधिना तां मूर्त्तिं संगृह्य करिराजारूढस्तत्रागत्य तां दास्यै समार्पयत् । सा चैत्यगृहे नूतनां प्रतिमां न्यस्य मूलमूर्त्तिं समादाय राज्ञा सह सौख्येनावंतीं प्राप ।

इतश्चोदायिनृपः प्रातर्देवायतनं ययौ, जिनं नत्वा सन्मुखं विलोकयति तदा म्लानमाल्यां मूर्त्तिं दृष्ट्वा दध्यौ—"इयं मूर्त्तिः काप्यन्या म्लानमाल्यत्वात्सा न भवति, पुनः स्तम्भलग्ना पांचालिकेव या देवदत्ता सापि न दृश्यते, ग्रीष्मे मार्वबुवत् करिणो मदोऽत्र निपतितश्च दृश्यते, तन्नूनमनिलवेगेनेह चंडप्रद्योतः

१ मरुदेशसंबन्धिजलवत् ।

समागात् इति ज्ञायते, स द्वयं गृहीत्वा गतः" । ततः कुपितो नृपो दशमुकुटबद्धनृपैः सह सबलोऽवंतीं प्राप । ततो द्वयोर्मिथः समरोऽभूत् । तत उदायनेन शिलीमुखैः प्रद्योतः कुंजरात्पातयित्वा हस्तेन धृत्वा बद्धः, तस्य ललाटपट्टे 'मम दासीपतिः' इत्यक्षरावलीं लिलेख तप्तलोहशलाकया, गुप्तिगृहे चाक्षिपत् । तत उदायनः प्रद्योतस्य गृहजिनालये गतः । श्रीजिनवरं नत्वा स्तुत्वा चोपादातुमुपाक्रंस्त, सा स्थानतो न चचाल । नृपतिर्जगौ—'हे नाथ ! मया कोऽपराधः कृतः, यत्परमेश्वरो मया सह नैति' । तदानीं तदधिष्ठायकः प्राह—'हे नृप ! तव पत्तनं पांशुवृष्ट्या स्थलं भावि, ततो नाहं तत्र समेष्यामि, त्वं मा शोचीः' । ततः स नृपोऽवंतिदेशाद्व्यवर्त्तत । मार्गस्यांतराले चतुर्मासकं समागतं । राजा तत्रैव शिबिरं न्यधात् । तत्र दशपुरं जातं । अन्यदा पर्यूषणापर्वण्युदायने पौषधिके सूदः प्रद्योतनमपृच्छत्—'नृप ! किमद्य भोक्ष्यसे ?' तच्छ्रुत्वाऽवंतीशः क्षोभादिति दध्यौ—'अहो ! अद्य पृष्टं तत्किं कारणं ?' इति मत्वा सूपकारमपृच्छत्—'हे सूद ! अद्य प्रश्नस्य हेतुं वद' । 'नृप ! अद्य पर्यूषणोत्सवः, मम स्वामी उपोषितोऽस्ति, अतस्त्वदर्थं रसवतीं करिष्यामि' । इति श्रुत्वा नृपः स्माह—'त्वया पर्वदिनोक्तेन वरं कृतं, ममाप्युपवासोऽद्यास्तु' । सूदोऽपि उदायनायाख्यत्, स दध्यौ—'अहो ! अस्मिन् कारागारे सति मम पर्यूषणा साध्वी न स्यात्' । एवमवधार्य तं निष्कास्य क्षमयामास । तस्य भालांकगोपनं स्वर्णरत्नमणिपट्टबंधेन विदधे । ततोऽवंतिदेशं ददौ । वर्षाकाले व्यतिक्रांते उदायनः स्वपुरीं प्राप । उदायनो मूलप्रतिमायै द्वादश ग्रामसहस्राणि पूजार्थं प्रददौ । ततः प्रभावतीदेव्याज्ञया तां नूतनां मूर्त्तिमपूजयत् । अन्यदा स्वपौषधागारे

पौषधं जग्राह, मध्यरात्रौ शुभ्रध्यानस्थितस्येदृगध्यवसायोऽभूत्—"ते नृपादयो धन्या वंद्या ये श्रीवीरजिनांतिके दीक्षादिकं प्रपेदिरे। यदि स्वामी मां पुनाति, तर्हि तत्पादमूले प्रव्रज्यामादाय कृती स्याम्" । भगवांस्तन्मनोगतं विज्ञाय तत्रागात् । नृपः कौणिकवत् वंदनाय निर्गतः, विधिना स्वामिदेशनां श्रुत्वा गृहे गतः सन्मतिरेवं दध्यौ—'अहोऽहं नरकांतं राज्यमभीचये सूनवे न ददामि' इति मत्वा केशिभागिनेये राज्यश्रियं चक्रे। ततः केशिकृतमहामहो नृपः प्रव्रज्यामुपात्तवान्। व्रतवासरात्तीव्रतपोभिः स्वात्मानमशोषयत्। एकदा नीरसाहारैर्मुनेर्व्याधिरुत्पन्नः, स मुनिर्वैद्येन दृष्टः कथितश्च 'त्वं देहं दधिभक्षणेन रक्ष'। गतस्पृहोऽपि स मुनिर्दध्यर्थं गोष्ठे विचरति। भुवि विहरन्मुनिर्वीतभये गतः, तदाऽमात्यः केशिनृपं जगौ—'एष तव मातुलस्तपसा निर्विण्णस्तव राज्यं ग्रहीष्यति, त्वमस्य विश्वासं मा कार्षीः'। केशिनोक्तं—'अस्यैवास्ति राज्यं सुखेन गृह्णातु'। मंत्री प्राह—'राज्यं पुण्यैर्लभ्यते, तल्लब्धं कथं दीयते ? अतो राजन्नस्य मुनेर्विषं देयं"। मंत्रिणा प्रेरितः केशी मातुलायैकया पशुपालिकया सविषं दधि दापयामास । तद्विषं देवेन संहृत्योक्तं—'सविषं दधि मा भुंक्ष्व, दधिस्पृहां मा कृथाः'। तेन भक्षणं परिहृतं, रोगो वर्धितः, रोगनिवारणाय पुनर्दधि जग्राह, सा देवता त्रीन् वारान् विषं जहार। एकदा देवप्रमादेन राजर्षिमुनिं सविषं दध्यभोजयत्। विषव्रीचिभिरात्मनः शरीरं व्याप्तं ज्ञात्वाऽनशनं प्रपेदे, त्रिंशद्दिनान्यनशनं पालयित्वोत्पन्नकेवलज्ञानो विपद्य शिवं गतः। ततो मन्युना देवेन तत्पुरं पांशुवृष्ट्या पूरितं।

इतश्च जनके गृहीतव्रतेऽभीचिसुतो दध्यौ—'अहो ! मत्पित्रा मां त्यक्त्वा भागिनेयाय राज्यं दत्तं,

वीरवाण्या बुद्धः पित्रापमानितः कोणिकासन्ने जगाम । ततः केशिनः सेवां त्यक्त्वा धिक् पितुर्विवेकं । ततः केशिनः सेवां त्यक्त्वा

धिक् पितुर्विवेकं । ततः केशिनः सेवां त्यक्त्वा पित्रापमानितः कोणिकासन्ने जगाम । वीरवाण्या बुद्धः श्राद्धधर्ममपालयत्परमुदायने वैरं न तत्याज । प्रांते पाक्षिकानशनेन मृत्वा तदनालोच्य भुवनपतिदेवो जातस्तत्रैकपल्यायुष्कः । ततश्च्युत्वा महाविदेहेऽभीचिजीवः शिवं गमिष्यति । श्रीवीरनिर्वाणतः षोडश-शतनवषष्टिवर्षा यदा यास्यंति,तदा पांशुपूरात्तां प्रतिमां कुमारभूपः कर्षयिष्यति, पूर्ववत्तां पूजयिष्यति चेति ।

उत्सृज्य सावद्यमुदायिराजा(जः), श्रीपर्वघस्रेषु निरीहभक्त्या ।
जग्राह धर्मं शुभयोगसंयुतं, तद्विधेयो व्रतिभिर्गृहस्थैः ॥ १ ॥

॥ इत्यब्ददिनपरिमितहितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रंथस्य वृत्तौ दशमस्तंभे एकोनपंचाशदुत्तरशततमं व्याख्यानम् ॥ १४९ ॥

## एकोनपंचाशदुत्तरशततमं व्याख्यानम् ॥ १५० ॥

## ॥ पंचाशदुत्तरशततमं व्याख्यानम् ॥ १५० ॥

अथ तृतीयं शिक्षाव्रतमाह—

॥ पोषं धर्मस्य धत्ते य—त्तद्भवेत्पौषधव्रतम् । तच्चतुर्धा समाख्यात—माहारपौषधादिकम् ॥ १ ॥

पुष् पुष्टौ—पुष्टिं धर्मस्य धारयति इति पौषधं । अष्टम्यादिपर्वदिनानुष्ठानं नियमं च, तच्चतुःप्रकारेणोक्तं, एकैकमपि द्विधा । यत आवश्यकनिर्युक्तिवृत्तौ तच्चूर्णावपि च तत्पाठोऽयं—"आहारपोसहो दुविहो—देसे य सवे य, देसे अमुगविगइ आयंबिलं एक्कासणं वा, सव्वं चउविहोवि आहारो अहोरत्तं पच्चक्खामि । १ । सरीरसक्कारपोसहो दुविहो—देसे य सवे अ, देसे अमुगं न्हाणाइयं न करेइ, सवे न्हाण-

मद्दणवन्नगविलेवणपुप्फाइ परिच्चाओ । २ । बंनचेरपोसहो देसे य सव्वे अ, देसे य दिवा रत्तिं वा एकसिं वा दोवारेत्ति, सव्वे अहोरत्तं बंनयारि नवइ । ३ । अव्वावारपोसहो डुविहो—देसे य सव्वे अ, देसे अमुगं वावारं न करेमि, सव्वे सव्ववावारे हलसगमघरपरकिंमाइओ न कीरइ" । ४ । अत्र यदा देशतः पौषधं करोति तदा सामायिकं करोति वा न वा? यदा तु सर्वतः करोति तदा सामायिकं नियमात्करोति, अकरणे तु तत्फलेन वंच्यते, सर्वतः पौषधं च चैत्यगृहे वा साधुमूले वा गृहे वा पौषधशालायामानरणादिकं मुक्त्वा पौषधं प्रतिपद्य पुस्तकं वाचयति. सुध्यानं ध्यायति इति । श्रावकप्रज्ञप्तिवृत्तावपि सर्वमेतडुक्तं, तथा पौषधसूत्रेऽपि, यतः—"करेमि नंते पोसहं आहारपोसहं देसओ सव्वओ"—इत्यादिना चतुर्नेद उक्तः, अत्र पौषधशब्देन नियम एवेत्यर्थः क्रियते तदा सम्यगर्थः स्यादिति । एतेषां चाहारादिकानां चतुर्णां देशसर्वविशेषितानामेकद्व्यादिसंयोगजा अशीतिर्नंगा नवंति । एतेषां मध्ये आहारपौषध एव सांप्रतं द्विधाऽपि क्रियते, निरवद्याहारस्य सामायिकेन सहाविरुद्धदर्शनात्, साधुनोपधानतपोवाहिश्राद्धेनाप्याहारस्य ग्रहणात् । शेषास्त्रयः सर्वत एव ग्राह्याः, अन्यथा 'सावज्जजोगं पच्चरकामि' इति पाठः सम्यग् न स्यात् । ननु निरवद्यदेहसत्कारव्यापारयोः कस्माद्दोषः? नण्यते—विनूषालोनादिहेतुत्वेन सामायिके तयोरपि निषिद्धत्वात्, आहारस्तु सामर्थ्यानावे धर्मक्रियानिर्वाहार्थं साधुवत्स्वीकार्यः, यत उक्तं च महानिशीथसूत्रे—'जइ देसओ आहारपोसहो, तओ नत्तपाणे गुरुसरिकअं पारावित्ता, आवस्सिअं करित्ता निस्सरइ, इरिआसमियं घरंमि गंतुं इरियं पडिक्कमइ, गमणागमणं आलोइअ, चेइए वंदइ, तओ संकासं पम-

ज्जित्ता पाउछणे निसइ, नायणं पमज्जित्ता, जहोचिअं नोअणं परिवेसिए पंचमंगलमुच्चरइ, समरइ पच्च-
रकाणं, तउ वयणं संपमज्जित्ता, असुरसुरंअचवचलमछुवमविलंबिअं अपरिसाडिं मणवयणकायगुत्तो
नुंजइ साहुव्वउवउत्तो । १ । जाया मायाए नुच्चा फासुअजलेण मुहसुद्धिं काउं नवकारसमरणेण उठाइ
देवं वंदइ, वंदणयं दाउं संचरणं काऊण पुणोवि पोसहसालाए गंतुं सज्फाइंतो चिछइ" । श्राद्धप्रतिक्रम-
णचूर्णावपीत्थमुक्तं—"इदं सामायिकपौषधापेक्षया न तु मुहूर्त्तमात्रसामायिकेऽशनं, तत्र तस्य सर्वथा
निषिद्धत्वात् । तथा पौषधिनमाश्रित्य निशीथनाष्येऽप्युक्तं—"उद्दिछकडंपि सो नुंजे" इति । निशीथ-
चूर्णौ च—"जं च उद्दिछकडं तं कडसामाइउ नुंजे" इति । निर्विवादवृत्त्या तु सर्वाहारादित्याग एव
पौषधः सर्वोत्कृष्टः, स शंखश्राद्धवत्कार्यः । तथाहि—

श्रावस्त्यां शंखपुस्कलिनौ श्राद्धौ वसतः, तौ वीरं प्रणम्य पश्चान्निवृत्तौ, तदा शंखः पुस्कलिनं जगाद—
"यूयं नव्याहारादिकं सजयत, तद्भुक्त्वानंतरं पाक्षिकं पौषधमनुपालयंतः स्थास्यामः । ततः शंखश्राद्धो
गृहमेत्य दध्यौ—'अद्यानुक्त्वैव पौषधकरणं महाफलं' इति विचिंत्य नार्यामापृछ्य पौषधशालायामेका-
क्येव मुक्तालंकारदेहसत्कारः सन् पौषधं गृहीत्वा दर्जसंस्तारारूढः शुनध्यानमध्यायत् । अथ पुस्कलि-
श्राद्धेनाशनादिकं सर्वं प्रकटीकारितं । ततः शंखामंत्रणाय गतः । उत्पलाख्या शंखनार्या तं पुस्कलिश्रा-
द्धमागछंतं वीक्ष्याच्युत्थानादिकमकरोत् । तन्मुखात्पौषधस्थले तद्बुद्धिं ज्ञात्वा तत्रैत्येर्यापथिकीं प्रतिक्रम्य
नोजनार्थं तं न्यमंत्रयत्—शंखः प्राह—'न मम किंचित्कल्प्यं, यूयं छंदेन न तु मदीयाज्ञयाशनादि

कुरुध्वम्" । तदाकर्ण्य पुष्कली व्याघुट्यान्येषां तद्वृत्तमज्ञापयत् । ततः शंखो रात्रौ धर्मजागरणे दध्यौ– 'प्रभाते वीरं नत्वा पौषधं पूर्णीकरिष्ये' । प्रत्यूषे जिनं नत्वा स्थितः, तदा पुष्कल्यपि जिनं नत्वा शंखमुपालंभयत्—'ह्यस्तने दिने न युष्माभिः सुष्ठु कृतं' । तदा प्रभुभिरुक्तं—'मैनं निंदतु, अयं सुदक्षजागरिकया जागरिकोऽभूत्' । तदा गौतमः प्रभुमपृच्छयत्—'स्वामिन् ! कतिधा जागरिकाः ? गौतम ! त्रिधा–बुद्धजागरिका केवलिनां, अबुद्धजागरिका छद्मस्थानगारिणां, सुदक्षजागरिका श्रमणोपासकानामिति' । ततः शंखेन क्रोधादिफलं पृष्टाः श्रीजिनेन्द्राः प्राहुः—'हे शंख श्राद्ध ! क्रोधमानादिभिर्जीव आयुर्वर्जसप्तकर्मप्रकृतीः शिथिलबंधनात् दृढबंधिनीः प्रकुरुते' इति श्रुत्वा पुष्कल्यादिश्राद्धास्तं पुनः पुनः क्षामयामासुः । ततः शंखः पौषधादिव्रतानि प्रपाल्य सौधर्मेऽरुणाभविमाने गतवान् । चतुःपल्योपमायुर्भुक्त्वा महाविदेहे मोक्षं गमिष्यतीति विवाहप्रज्ञप्तिसूत्रद्वादशमशतकाल्लिखितोऽयमुदंतः ।

श्रीपंचमांगे हि जिनैरपि स्तुतं, श्राद्धस्य शंखस्य सुपौषधव्रतम् ।
उत्कृष्टभंगैश्च चतुर्विधं मुदा, तत्पर्वघस्रेषु विशेषधारणम् ॥ १ ॥

॥ इत्यब्ददिनपरिमितहितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रंथस्य वृत्तौ
दशमस्तंभे पंचाशदुत्तरशततमं व्याख्यानम् ॥ १५० ॥

॥ इत्युपदेशप्रासाद–वृत्तौ व्याख्यानहेतवे । पंचदशभिरस्माभिः, स्तंभोऽयं दशमो म(ग)तः ॥ १ ॥

दशमः स्तंभः समाप्तः ॥ १० ॥

# श्रीउपदेशप्रासादे ।



## ॥ एकादशः स्तंभः ॥ ११ ॥

### ॥ एकशताधिकैकपंचाशत्तमं व्याख्यानम् ॥ १५१ ॥

अथ पर्वाराधनविधिमाह—

चतुर्दश्यष्टमीराको-द्दिष्टापर्वसु पौषधः । विधेयः सौधस्थेनेत्थं, पर्वाण्याराधयेद् गृही ॥ १ ॥

चतुर्दशी अष्टमी पूर्णिमाऽमावास्या चेमानि पर्वाणि, तेषु गृहस्थेन पौषधो विधेयः । यतः—

"जइ सवेसु दिणेसु, पालह किरिअं तओ हवइ लर्द्ध ( लाभं ) ।
जे पुण तहा न सकह, तहवि हु पालिज्ज पवदिणं" ॥ १ ॥

"अट्ठमिचउद्दसीसु, चेइय सवा साहुणो सवे । ते वंदियवा नियमा, अवसेस तिहिसु जहासत्ति" ॥ २ ॥

तथा चोक्तं शांतिवैतालीयोत्तराध्ययनवृत्तौ—

"सर्वेष्वपि तपोयोगः, प्रशस्तः कालपर्वसु । अष्टम्यां पंचदश्यां च, नियतः पौषधं वसेत्" ॥ १ ॥

यथा विजयदशमीदीपोत्सव्याद्यैहिकपर्वसु भोजननेपथ्यादि विशेषेण क्रियते, तथा श्राद्धेन धर्मदिनाः सुतरां पाल्याः । मासमध्ये षट् पर्वदिनाः चतुर्दश्यादयः पक्षमध्ये त्रयश्च पाल्याः । तथा—

"बीआ दुविहे धम्मे, पंचमी नाणे अ अट्ठमी कम्मे । एगारसी अंगाणं, चउद्दसी चउदपुव्वाणं" ॥ १ ॥

एवं पंचपर्वी पूर्णिमाऽमावास्याभ्यां सह षट्पर्वी । "भयवं ! बीअपमुहासु पंचसु तिहि(ही)सु विहिय-धम्माणुट्ठाणं किं फलं होइ ?" 'गोयमा ! जम्मा एआसु तिहि(ही)सु पाएणं जीवो परभवाउअं कम्मं समज्जिणइत्ति । भवमध्ये आयुर्बंधकालस्तु एक एव । आयुषस्तृतीयादिभागेन बद्धायुस्तस्य टलति । यथा श्रेणिकस्य प्राक् सगर्भमृगीघाते पृथग्गर्भपाते स्वबलवर्णनेन निबद्धं नरकायुरिति । तथा परशास्त्रेऽपि पर्वसु स्नानमैथुनादि निषिद्धं, यतो विष्णुपुराणे—

"चतुर्दश्यष्टमी चैव, अमावास्या च पूर्णिमा । पर्वाण्येतानि राजेंद्र ! रविसंक्रांतिपर्व च ॥ १ ॥

तैलस्त्रीमांससंभोगी, पर्वस्वेतेषु वै पुमान् । विण्मूत्रभोजनं(नो)नाम, प्रयाति नरकं मृतः" ॥ २ ॥

अवसरे हि कृतं धर्मकृत्यं महाफलदं स्यात् । अतोऽहोरात्रिकपौषधो मुख्यवृत्त्या पर्वसु कार्यः, तदशक्तौ दिनपौषधो रात्रिपौषधश्च(वा) विधेयः। इत्थमनेन प्रकारेण श्राद्धः पर्वाण्याराधयेत्। अत्र ज्ञातमिदं—

क्षितिप्रतिष्ठितपुरवरे पृथ्वीपालनृपोऽनुपमरूपोऽभूत् । स एकदाऽऽखेटार्थं कानने ययौ । तत्रैकस्मिन्पादपे मयूरपतत्रिणं वीक्ष्य बाणं धनुषि संयोज्य तेन तत्प्राणान् हर्तुं मार्गणो मुक्तः । मयूरोऽपि सहसा भुव्यपतत्। ततो नृपस्तं लुठंतमाक्रंदंतं च प्रेक्ष्य दध्यौ—'अहो अयं जीवः स्वक्रीडारसाज्झटिति मया विरसीकृतः । ममापि मत्तोऽधिकबलः कोऽपि नरो व्याघ्रश्वासंकटपानटपप्रहारेण वेदनां करोति तदा को निवारयति ? अतो धिग्मां पापात्मानं' इति विचार्य तं शिखंडिनं भूमौ लुठंतं प्रति पुनः पुनरनमत् ।

क्षणेन वेदनया नृपोक्तनर्मजल्पनेन च किंचित्सुध्यानपरो विशालपुरे नरत्वं प्राप, नृपस्तु अग्रे गच्छन्नेकत्र पृथ्वीशिलापट्टे जावादध्यात्मशिलास्थं मुनिं दृष्ट्वा तन्निकटे मुकुटधरस्तस्थौ । मुनिः प्राह धर्मं—

"धर्मस्य जननी जीव-दया मान्या सुरैरपि । तस्मात्तद्वैरिणीं हिंसां, नाद्रियेत सुधीर्नरः" ॥ १ ॥

इत्यादि श्रुत्वाऽवनिपो दध्यौ—'यथा मत्कृतदुष्कृतं मुनिनाऽदृष्टमप्यादिष्टं, तथाऽस्योदितधर्मोऽपि श्रेष्ठः' इति मतिरजनिष्ट । ततः स श्राद्धव्रतानि पूज्यपादांतिके धृत्वा गृहे एत्य मत्स्यजालादिहिंसाधिकरणानि जज्वाल । पर्वसु तैलिकास्तिलान्न पीलयंति, धापका वासांसि न धापयंति च । तत्पर्वमहिम्नाऽनेकजीवा धर्मं प्रापुः । बहुकालं यावन्नृपो धर्मं कृत्वा निमिलनं प्राप्य विशालपुरे शालिज्जडेन्यसदृशः सुनंदनामा व्यवहारिको जातः । तत्राप्यन्यस्तपूर्वत्वादचिरेण जैनो जातः सर्वपर्वसु पौषधांश्चकार । एकदा स मयूरजीवो विशालपुरनृपसेवाकृज्जातः । स तं सुनंदं वीक्ष्य जातकोपस्तं हंतुमिच्छति । एकदा राज्ञीवक्षोहारं छन्नं चोरयित्वा स राजानुजीवी पर्वदिनपौषधेन श्राद्धस्य छलं प्राप्य धर्मस्थाने एकाकिनं मत्वा तत्कंठेऽमूल्यहारं निचिक्षेप । स्वयं च नृपान्यर्णे गत्वा स्थितः । अथ राज्ञी स्वहारमलब्ध्वा खानपानादिकं नाकरोत् । ततो नृपेण सहस्रशः स्वोपजीविनः पौरगृहेष्वन्वेषणाय प्रहिताः सर्वत्र । स मयूरजीवनरस्तु अन्यनृपभृत्यैः सहैत्य पौषधस्थले तत्कंठगतहारमदर्शयदन्येषां । ततस्ते सर्वे तं करेषु धृत्वा नृपोपांते निन्युः । नृपेण पृष्टोऽपि सावद्यमुत्तरं न ददौ, तदा वधस्थले प्रेषितः । नृपादेशं गृहीत्वा स मयूरजीवनरस्तद्देहे खड्गमवाहयत् । करालकरवालस्य सहस्रशः शकला बभूवुः । पूर्वभवेऽनेन हिंसाधिकरणानि

चूर्णीकृतानि, तेन पुण्येनात्र स्वयमेव तानि बभंजुः । पुनः पुनः सर्वे भृत्या निःशस्त्रीभूता मनसि भीता भूनेतारं तद्वृत्तं प्रोचुः । भूपः प्राप्तविस्मयो गतस्मयस्तत्रागतः, तं स भृत्य उवाच—'स्वामिन् ! अनेन मंत्रप्रयोगाद्युष्मदीयभृत्या बहु दुःखीकृताः, तेन वधार्होऽस्ति' । तच्छ्रुत्वा नृपः प्राह—'प्रत्यूषे सर्वं भविष्यति, सांप्रतं स्थले एनं मुंचतु' । अथारुणोदये पौषधं पारयित्वा नृपं प्राह—'स्वामिन् ! वयं श्रावकाश्चौर्यं न कुर्महे परमीदृशा हारा मद्धर्मप्रसादाद् बहवो मम गृहे संति, प्रेक्षणाय पादाववधार्यतां' । नृपस्तद्गृहसंपदं वीक्ष्य चकितः श्राद्धं पप्रच्छ—'इदं तर्हि कथं निष्पन्नं ?' श्राद्धः प्राह—'अहं श्राद्धजैनत्वान्नान्यहिंसां करोमि कारयामि वा' । 'हे श्राद्ध ! त्वं कष्टे कथं नाजल्पः ?' । 'अष्टम्यादिपर्वपौषधे न किमपि जल्पनं कल्पते' इति श्रुत्वा तं त्यागिनं प्रशस्य क्ष्मापो गृहे समेतः । ततः सुनंदः स्वपुत्रे गृहभारं न्यस्य दीक्षां ललौ । शुक्लध्यानेन केवलं प्राप्य तत्पुरे आजगाम । सपरिकरो नृपो मुनिं नत्वा तस्थौ । तत्र स नरः कोपपरो दुर्ध्यानमध्यायत्, तदा ज्ञानी तमुद्दिश्योवाच—

"मयूरो प्राग्भवेऽभूस्त्वं, मन्मुक्तबाणतो हतः । सांप्रतं मानुजं लब्ध्वा, मुंच दौष्ट्यं भवप्रदम्" ॥ १ ॥

इति श्रुत्वा जातिस्मृत्या प्रबुद्धो दीक्षां गृहीत्वा स्वदंभं पूर्वकृतं सर्वं प्रोवाच । ततो विशालपुरेशोऽपि पर्वदिनान् पौषधेनाराधयत् । केवल्यन्यत्र विजहार । क्रमेण मोक्षं प्रापेति ।

---

१ गतरूपः.

पर्वाणि सर्वाणि च पौषधेन, आराधितानीह समोदयु(भ)क्त्या ।
सुपर्वसंपत्तिसमन्वितः स्याद्, यो धर्मपर्व न जहाति चित्तात्" ॥ १ ॥

॥ इत्यब्ददिनपरिमितहितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रंथस्य वृत्तौ एकादशस्तंभे एकशताधिकैकपंचाशत्तमं व्याख्यानम् ॥ १५१ ॥

## ॥ एकशताधिकद्विपंचाशत्तमं व्याख्यानम् ॥ १५२ ॥

अथ पुनस्तदेव वर्ण्यते—

सर्वारंभपरित्यागत्, पाक्षिकादिषु पर्वसु । विधेयः पौषधोऽजस्र-मिव सूर्ययशा नृपः ॥ १ ॥

श्लोकोक्तसंबंधोऽयं—

पूर्वं श्रीऋषभराज्यस्थित्यर्थं सुरेंद्राज्ञया सुवर्णवप्रमयी द्वादशयोजनदीर्घा नवयोजनविस्तीर्णा विनीता पुरी धनदेनाहोरात्रमध्ये निर्मापिता । जिनार्थमेकविंशत्यट्टालमितं गृहं कृतं । तत्र नगरे सपादकोटीभरतात्मजेषु श्रेष्ठ आदित्ययशाः सपादलक्षपुत्रान्वितो दशसहस्रमुकुटबद्धनृपाधिपः प्राज्यं राज्यमपालयत् । स प्रत्यूषे नित्यं निजचमूसहितः शक्रावताराख्ये श्रीमद्युगादिदेवप्रासादे गत्वा स्तवस्तुतिमंगलं विधत्ते । पाक्षिकादिषु दशसहस्रक्ष्मापान्वितोऽन्यैरपिस्वजनैर्वृतश्च पौषधं प्रतिपूर्णं विदधाति । तद्दिने स्वयमारंभान्न करोति न कारयति ।

इतश्च सौधर्मेंद्रः स्वसभायां स्थितोऽवधिज्ञानेन तत्पर्वधर्मस्थैर्यमालोक्य पुनः पुनर्मनमेव तं प्रशस्य मस्तकमधूनयत्। तदा तदग्रे मधुरगानं तानं हावभावादिकं च कुर्वन्त्यौ रंभोर्वशीगंधर्विण्यौ शक्रं पप्रच्छतुः—"स्वामिन्! मर्त्यलौकिकजराजर्जरितमानुष्यमिव युष्माभिः कथं शिरो धूनितं? अस्मत्कलाकौशलं किं वा वाजित्रादिकं सशल्यं दृष्टं? हे परमेष्ट! सन्यमनसि प्रसृतं शल्यमिष्टवाक्येन निवार्यतां"। वासवः प्राह—'मध्यलोके भरतज्येष्ठपुत्रस्य धर्मदार्ढ्यं यादृशं वर्त्तते तादृशं क्वापि नास्ति, परमीदृशां गुणिनां घटते। यतः—

"दिग्गजकूर्मकुलाचल—फणिपतिविधृतापि चलति वसुधेयम्।
प्रतिपन्नममलमनसां, न चलति पुंसां युगांतेऽपि ॥ १ ॥

नवरं तत्परिचयादन्येऽपि बहवः पर्वपालनपरा बभूवुः। यतः—

"सुंदरजणं संसग्गी सीलदरिद्दंपि कुणइ सीलड्ढं।
जह मेरुगिरिविलग्गं, तिणंपि कणगत्तणमुवेइ" ॥ १ ॥

इति मघवकृतं तद्वर्णनमाकर्ण्य ते प्राहतुः—"हे पुरंदर! किं धान्यकीटकस्यान्नमात्रजीविनस्तस्य श्लाघा क्रियते? यावदस्मदास्यं नेक्षितं तावत्तद्धर्मदार्ढ्यं" इत्युक्त्वा ते प्रतिज्ञां कृत्वा वीणां करे धृत्वा शक्रावतारे जिनमंदिरे एत्य जिनगुणगानं चक्रतुः। तत्कृतसप्तस्वरमयगीतादिश्रवणेन स्वजातिस्वरभ्रांत्या पक्षिण आजग्मुः। यतः—

सज्जं रवइ मऊरो, कुक्कुडो रिसहं सरं । हंसो नयइ गंधारं, मज्झिमं च गवेलका" ॥ १ ॥

अथ—

"कुसुमसंभवे काले, कोकिला पंचमं स्वरं । षष्ठं च सारसाः क्रौंचा, निषादं सप्तमं गजाः ॥ २ ॥

एवं भिन्नभिन्नपक्षिषु स्थिताः स्वरास्तल्कलया युगपदुद्बभूवुः । कथं ? यतः—

"कंठात्संजायते षड्ज, ऋषभो हृदयोद्भवः । गंधारस्त्वनुनासिक्ये, मध्यमो नाभिसंभवः ॥ १ ॥

उरःकंठाच्च संजातः पंचमः स्वर एव च । ललाटे धैवतं विद्या–न्निषादः सर्वसंधिजः"

इति सप्तस्वरोत्पत्तिः । अथ श्रीनाभेयपौत्रः पाक्षिकं पौषधं पूर्णीकृत्य प्रत्यूषे सपरिच्छदः प्रभुं नंतुमाजगाम । दूरतस्तीर्थं वीक्ष्य यानादुत्तीर्णश्छत्रं चामरं मौलिं च दूरीकृत्य निरुपानत् पादाभ्यां चचाल । इतश्च गीतादिकं श्रुत्वाऽश्वाः करिणः पत्त्यादयो नृपाश्च सर्वे नृपं विहाय शीघ्रं जग्मुः । यतः—

"सुखिनि सुखनिदानं दुःखितानां विनोदः, श्रवणहृदयहारी मन्मथस्याग्रदूतः ।

नवनवरसकर्त्ता वल्लभो नायिकानां, जयति जगति नादः पंचमश्चोपवेदः" ॥ १ ॥

ततो नृपोऽपि तत्र क्रमेण जगाम । जिनं नत्वा तयोर्गीतं स्मितं नृत्यं नेपथ्यं लावण्यमनुपमरूपमधरीकृततरणिबिंबं स्वकांत्या किं वर्ण्यते ? इन्द्रोऽपि पुनः पुनर्यद्रूपगुणं निभाल्यासंख्यकालेनापि तृप्तिं नाप, एतादृशं तत्सौंदर्यवर्यमवेक्ष्य बहिर्मंडपे एत्य नृपो भ्यतो भूमौ भावतश्च तद्गुणामितक्तितौ तस्थौ । तद्विहितोचितस्फीतसूनृतनृत्यगीतामृतरसं कर्णपुटाभ्यां निपीय स्वकीयमचिवमुखेन तज्जातिकुलादिकं

पप्रच्छ । तदा ते प्राहतुः—'आवां विद्याधरसुते कुमारिके अनुरूपासमञ्चनानुचरवरान्वेषिण्यौ प्रतितीर्थं प्रतिनगरं च पर्यटनं कुर्वहे, परं तादृशः कोऽपि नेक्षितः, अतःपरं स्वस्थाने गमिष्यावः' तदा मन्त्रिवोऽवोचत्—'अस्मत्स्वामिसदृशो मरुदेवीपौत्रो ज्येष्ठस्त्रिभुवने नास्ति, क्रियतामनेनैवोद्वाहः, निर्वापयतं विरहदाहं, सत्यप्रतिज्ञोऽस्मत्स्वामी सुज्ञो युवयोर्वाक्यं युवाऽयं नोल्लंघयिष्यति'। ते प्रोचतुः—'अत्रार्थे साक्षी कः ?' सचिवः प्राह—'अत्रार्थेऽहं प्रतिभूः सर्वे जनाश्च'। 'तर्हि वचनं प्रयच्छतु'। राज्ञा वचनं दत्तं। युगादीशसमक्षं तयोः पाणिपीडनं कृत्वा गृहे आजगाम। सुंदरावासे ते सुखेन तस्थतुः। नृपोऽपि नित्यमभिनवकलावलोकनेन प्रीतो बभूव।

इतश्च अन्यदा पटहोद्घोषणां श्रुत्वा ते नृपं पप्रच्छतुः—'हे स्वामिन्! कस्यायं रवः श्रूयते ?'। क्ष्मापो ब्रूते—'हे तन्वंग्यौ! कल्येऽष्टमीपर्वदिनमस्ति, अनेकदलनखंडनपेषणरंधनाब्रह्मसेवनज्ञातिजेमनतिलैरंडादिपीलनरात्रिभोजनवृक्षच्छेदनभूमिविदारणानि तद्दिने इष्टिकाचूर्णकपाकादिप्रज्वालनवस्त्रधापनपर्युषितभोज्यरक्षणशालिचणकसेकनशाकपत्रक्रीणनमित्यादिपापव्यापारान्न कोऽपि जनः करोति कारयति वा। बालानृते सर्वेऽपि प्राय उपोषिता एव विहरिष्यंति। दशसहस्रभूपाः पौषधविधायकाः सुखमग्नाः कथं पर्वाणि विदंति? अतः पर्वाद्यदिनेषु सप्तमीत्रयोदश्यादिषु नित्यं पटह उद्घोष्यते मदाज्ञया, अहमपि पौषधं करिष्ये'। इति कर्णत्रपुसमं तदुक्तं श्रुत्वा ते मूर्च्छां दधतुः। ततो नृपेण शीतलसलिलचंदनोपचारेण सज्जीकृते आहतुः—'स्वामिन्! क्षणमेकं भवद्विरह आवयोः कल्पकोटितुल्यः स्यात्, अतोऽष्टौ

प्रहरान् यावत् तं न सहिष्यावहे । यदि अस्मदीयाङ्गसङ्गसुखाभिलाषश्चेत्तर्हि पर्वपौषधान् मुंच' । नृपः प्राह—'प्राणांतेऽपि न जहामि व्रतं, किं सांसारिकसुखे महत्त्वमस्ति ? इंद्रादिपदं तु सुलभं परं धर्मस्तु सुष्ठु दुर्लभः' । ते प्राहतुः—'स्वामिन् ! युष्मद्वचनं यत्तत्र दत्तं तद्गतं' । स प्राह—'धनराज्यादिकं सर्वं त्वद्वचोभिर्जहामि, परं धर्मं तु आत्मीयकोशत्वात् न त्यजामि' । ते प्राहतुः-'हे स्वामिन् ! भवद्वचनांगेन सहास्मदंगं चितायां भस्मसात् करिष्यावः' । नृपः प्राह—'युवां नूनं चांडालकुलोत्पन्ने एव, अन्यथा धर्मविघयेंऽतरायं कुलीनस्तु न करोति । अतः कुतश्चिताप्रवेशनं स्वीकुर्वाथे ? अन्यं मार्गयतं, अहं ददामि' । ते प्राहतुः—'स्वामिन् ! आवाभ्यां स्नेहभरेण यद्भणितं प्रति कायक्लेशस्तपोभिर्मा भूत्' इति ध्यात्वोक्तं, नात्र क्रोधावसरः । किं चावाभ्यां पितृवाक्यमुल्लंघ्य निर्गताभ्यां पूर्वकर्मसंबंधतस्त्वं पतिर्वृतः, त्वयापि जिनसमक्षं 'मया वाक्यमन्यथा न कार्यं' इति प्रतिज्ञा कृता । अतोऽजस्रमभंगसौख्यं मार्गयावः, अन्यथोभयभ्रष्टे जाते । आबालशीलतोऽस्मत्पितृराज्यसौख्यतश्च, किं कुर्वहे राज्यादिना, परं यदि पर्वभंगं न करोषि तदा जिनगृहं पातय' । इति श्रुत्वा नृपो भूमौ पपात, शीतलोपचारैः सचेतनीकृत उवाच—'रे रे अधमे ! मया तु मोहपरवशेन मणिशंकया काचखंडो गृहीतः, तत एकं धर्मलोपं विहाय अन्यं यथेष्टं मार्गयतं, तद्दत्त्वा वाक्यदानस्यानृणीभवामीति' । ते प्राहतुः—'वरं, यदि वाक्यपालने प्रयोजनं तदा स्वपुत्रशिरश्छित्त्वाऽर्पय' । नृपः प्राह—'भद्रे ! किं परजीवं मार्गयथः ? पुत्रस्तु तावन्मद्देहादेवोत्पन्नः, ततो मदीयमेव शिरो गृह्णीतं' । इति प्रोच्य वेगात् खड्गं कंठे वाहयति, तावत्ताभ्यां खड्गस्य धारा स्तंभिता, नृपोऽपि

नवं नवं खड्गं गृहीत्वा पुनर्यावद्गले स्थापयति, तावत्तेऽन्तर्धानं प्रापतुः । नृपो विस्मितो दध्यौ—'अहो किमिदं जातं ?' । इतश्च ते पुष्पवृष्टिं विधाय प्रोचतुः सर्ववृत्तं 'युष्मन्महिम्नाऽस्मदीयं मिथ्यात्वं गतं' इति प्रशस्य स्वर्गं गत्वा इन्द्रसभायामपि तथैव प्रशशंसतुः । अथ नृपः क्रमादादर्शभुवने स्वपितृवत्केवलज्ञानं प्राप्य मुक्तिं जगामेति । विशेषार्थिना शत्रुंजयमाहात्म्यमवलोक्यं, मया तु यथा श्रुतं तथा लिखितमस्ति इति ।

पाक्षिकादिकतिथौ क्रियमाणः, सौख्यमावहति पौषधधर्मः ।
नाभिपुत्रज इवात्र परत्र, संचिनोति पुरुषोऽनघकांतिम् ॥ १ ॥

॥ इत्यब्ददिनपरिमितहितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रंथस्य वृत्तौ
एकादशस्तंभे एकशताधिकद्विपंचाशत्तमं व्याख्यानम् ॥ १५२ ॥

॥ शतोत्तरत्रिपंचाशत्तमं व्याख्यानम् ॥ १५३ ॥

अथ पौषधे प्रतिक्रमणं कार्यमित्याह—

पर्यायाः संति ये चाष्टौ, निर्धार्य सूरिभिः कृताः । प्रतिक्रमणशब्दस्य, कार्यं तत्पौषधे मुदा ॥ १ ॥

प्रतिक्रमणं प्रतीपं क्रमणं पापतः पश्चादपसरणं । यतः—

"स्वस्थानाद्यत्परं स्थानं, प्रमादस्य वशाद् गतः । तत्रैव क्रमणं भूयः, प्रतिक्रमणमुच्यते" ॥ १ ॥

प्रतिकूलं वा क्रमणं रागादिभ्यो विरुद्धगमनं । यतः—

"क्षायोपशमिकाद्भावा–दौदयिकवशं गतः । तत्रापि च स एवार्थः, प्रतिकूलगमात्स्मृतः" ॥ १ ॥

अत्राह—'ननु प्रतिक्रमणमतीतविषयं । यतः—'अईअं पडिक्कमामि पडुप्पन्नं संवरेमि अणागयं पच्चक्खामित्ति' तत्कथमिह कालत्रयविषयं ?' । उच्यते—'प्रतिक्रमणशब्दो ह्यत्राशुभयोगनिवृत्तिमात्रार्थः सामान्यतः, तथा च सत्यतीतविषयं–निंदाद्वारेणाशुभयोगनिवृत्तिरेवेति । वर्त्तमानविषयं–संवरद्वारेणाशुभयोगनिवृत्तिः । अनागतविषयं–प्रत्याख्यानद्वारेणाशुभयोगनिवृत्तिः । तत्पंचविधं प्रतीतं दैवसिकादिकं प्रतिक्रमणं । तत्रोत्सर्गेण दैवसिकप्रतिक्रमणकालस्वरूपमेवं—

"अद्धनिवुड्डे सूरे, सुत्तं कड्ढं (त्थं) ति गीअत्था ।
इय वयणपमाणेणं, देवसिआवस्सए कालो" ॥ १ ॥

सुत्तं 'करेमि भंते' इत्यादि । 'संपुन्ने पडिक्कमणे तारा दो तिन्नि दीसंति' इति पाठांतरं । रात्रिकस्य त्वेवं—

"आवस्सयस्स समए, निद्दामुद्दं करंति आयरिआ ।
तह तं कुणंति जह, स पडिलेहाणंतरं सूरो" ॥ १ ॥

किंतु उत्सर्गतः काले यथोक्तक्रियमाणं महाफलं कृष्यादिवदिति । अपवादतस्तु योगशास्त्रवृत्तौ—'दैवसिकं मध्याह्नादनु अर्द्धरात्रं यावत्, रात्रिकमर्द्धरात्रात्प्रभृति मध्याह्नं यावत् । इति प्रतिक्रमण एव

शब्दः प्रतिक्रमणशब्दः तस्य प्रतिक्रमणशब्दस्य सूरिभिर्भद्रबाह्वादिभिः कृता रचिता ये अष्टौ पर्यायाः संति, अग्रे वक्ष्यमाणानि नामानि विद्यंते, ते निर्धार्य निश्चयीकृत्य तत्प्रतिक्रमणं पौषधे मुदा हर्षभरेण कार्यमित्यर्थः। अत्रार्थे चूलनीपिताश्रमणोपासकवृत्तं सप्तमांगतो ज्ञेयमिति।

"गृहिणोऽपि हि ते धन्या, ये प्रतिक्रमपौषधम्। कुर्वंति पालयंति च, यथा स चूलनीपिता" ॥ १ ॥

अथ प्रतिक्रमणनामानि आह—

"प्रतिक्रमणमाद्यं ना-म प्रतिचरणापरं। तृतीयं पारिहारण्यं, वारणेति चतुर्थकम्" ॥ १ ॥

"निर्वृतिः पंचमं षष्ठं, निंदागर्हेति सप्तमम्। शोधिरित्यंतिमं सर्वे, पर्याया एकवस्तुनः" ॥ २ ॥

प्रथमं प्रतिक्रमणमित्यभिधानं—प्रतीत्ययमुपसर्गः प्रतिपाद्यर्थे वर्त्तते, क्रमु पादविक्षेपे, अस्यानद्प्रत्ययांतस्य प्रतीपं क्रमणमयमाशयः शुभयोगेभ्योऽशुभयोगांतरं क्रांतस्य शुभेष्वेव योगेषु क्रमणात्प्रतिक्रमणं, भावार्थस्तु वृत्तेन ज्ञेयः। तथाहि—

कोऽपि भूपो बहिः सौधं कर्तुमना एकां भूमिमस्थ्यादिनिःशल्यां कृत्वा सूत्रमास्फोटयत्। तत्र रक्षकाञ्शिक्षां दत्वेत्यस्थापयत्—"अत्र कोऽपि प्रविशेत्स मार्यः, परं तैरेव पदैश्चेदपसर्पेत् तदा स मोच्यः"। ततः कौचिद् ग्रामिकौ तत्र प्रविशंतौ रक्षकैर्दृष्टौ पृष्टौ च—'रे! इह किं प्रविष्टौ?' एको धृष्टत्वात् 'को दोषः?' इति वदन्नृपानुगेन हतः, द्वितीयो भीतस्तैरेव पदैस्तदनुज्ञया वलमानः सुखी जातः। इति द्रव्यप्रतिक्रमणं।

भावे चोपनयोऽयं—तीर्थाधिपो राजा, संयमो रक्षणस्थलं, ग्राम्यसमः यः कुसाधुः स रागद्वेषैर्निगृहीतः, यस्तु प्रमाददोषेणासंयमं गतः सन् प्रतिनिवृत्तः स फलं प्राप्तः ।

स निर्वाणसुखाभागी, जायते मुनिपुंगवः । प्रतिक्रमणशब्दार्थ, उक्तज्ञातेन भाव्यते ॥ १ ॥

अथापरं प्रतिचरणेति नाम तच्छब्दस्य पर्यायः, प्रति प्रति तेषु तेषु भावेषु चरणं गमनं सेवनमिति प्रतिचरणा, सा द्विधा—अप्रशस्ता मिथ्यात्वादिसेवना, प्रशस्ता—रत्नत्रयप्रतिचरणा च । अत्र ज्ञातमिदं—

कश्चिद्वणिग् 'रत्नादिभृतप्रासादोऽयं त्वया चिंत्यः' इति भार्यायै उक्त्वा देशांतरमगात् । सा स्वांगभूषादौ प्रवृत्ता प्रासादं नैक्षत । भित्तौ वर्धमानात् पिप्पलवृक्षात्तद्विशीर्णस्तया न प्रतिचरितः । आगतेन वणिजा दृष्ट्वा सा गृहान्निःसारिता । नवः प्रासादः कारितः, अन्या पत्नी च परिणीता । पूर्ववच्चां शिक्षयित्वा दिग्यात्रायां गतः । सा त्रिसंध्यं तं प्रतिचरति । पुनरागतः प्रासादं सम्यग् रक्षितं दृष्ट्वा सर्वस्वेशी कृता । एषा द्रव्यप्रतिचरणा । भावे वणिक्स्थानीयो गुरुः, प्रासादसमः संयमः, 'स नित्यं प्रतिचर्यः' इति गुरुणाऽऽदिष्टं, तत्सातादिगौरवेण कंकरीकवद्येन न समाचरितं स पूर्वभार्येव दुःखी स्यात्, अन्यश्च सुखी।

प्रत्यचारि च येनासौ, प्रासादः संयमाभिधः । स निर्वाणसुखाभागी, जातः संसारपारगः ॥ १ ॥

॥ इत्यब्ददिनपरिमितहितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रंथस्य वृत्तौ एकादशस्तंभे शतोत्तरत्रिपंचाशत्तमं व्याख्यानम् ॥ १५३ ॥

## ॥ शताधिकचतुःपंचाशत्तमं व्याख्यानम् ॥ १५४ ॥

अथ परिहरणं सर्वप्रकारैर्वर्जनं, तच्च द्विविधं—अप्रशस्तं ज्ञानादिपरिहरणं, प्रशस्तं क्रोधादीनां इति तृतीयं प्रतिक्रमणशब्दस्याभिधानं पर्यायश्च । अत्र दुग्धकावभिवृत्तमिदं—

एकः कुलपुत्रः तस्य द्वे भगिन्यौ स्तः । तयोः पुत्रौ तरुणौ युगपन्मातुलपुत्रीपाणिग्रहणायागतौ । मातुलेनोक्तं—'यो दक्षो भावी, तस्मै पुत्रीं दास्ये' । तेन कावड्यौ दत्वा दुग्धानयनाय गोकुले प्रेषितौ । तत्र कुंभौ दुग्धेन भृत्वा निवृत्तौ । तत्र द्वौ पंथानौ, एक ऋजुः स दूरतरः, अपरश्च विषमः स समीपवर्त्ती । एकस्तन्मध्ये दूरमार्गेण पर्वतादिपरिहारेणाभग्नकुंभः समेतः, द्वितीयश्च लाभोत्सुको निकटवक्रमार्गे प्रविष्टो घटभंगेनागतः । दक्षाय तेन सुता दत्ता । एषा द्रव्यपरिहरणा । भावे कुलपुत्रस्थानीया जिनाः, दुग्धं चारित्रं, कन्या सिद्धिः, गोकुलं मानुष्यजन्म, समविषमपंथानौ स्थविरजिनकल्पिमार्गौ ऋजुवक्रौ, अगीतार्थो जिनकल्पार्थी सहस्रमल्लदिगंबरवच्चरणदुग्धं न रक्षेत्, स स्वेप्सितं न लभेत ।

दुष्पापा निर्वृतिस्तस्य, स्खलितस्य कथंचन । प्रापान्यस्तु शनैः सिद्धिं, चारित्रक्षीररक्षकः ॥ १ ॥

॥ इत्यब्ददिनपरिमितहितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रंथस्य वृत्तौ
एकादशस्तंभे शतोत्तरचतुःपंचाशत्तमं व्याख्यानम् ॥ १५४ ॥

## ॥ शतोत्तरपंचपंचाशत्तमं व्याख्यानम् ॥ १५५ ॥

अथ वारणेति प्रतिक्रमणस्याभिधानं तुरीयं—वार्यतेऽसौ वारणा । अत्रार्थे वृत्तमिदम्—

एको नृपः परचक्रागमनं ज्ञात्वा तटाकादिषु वृक्षेषु पुष्पफलादिषु सर्वत्र विषमयोजयत् । इतरेण राज्ञा तथा ज्ञाते उद्घोषणया सैन्यं वारितं, यैस्तद्वाक्यं नांगीकृतं ते मृता, अपरे च सुखिनः । भावे विपान्नपानसमा विषयाः, नृपस्तु गुरुः, भृत्यसमा भव्याः, निर्विषया निस्तीर्णा, अन्ये तु नेति चतुर्थं ।

अथ निर्वृतिः, सापि द्विधा–प्रशस्ता प्रमादादीनां, अप्रशस्ता गुर्व्यादीनां । निर्वृतिरिति प्रतिक्रमणस्य पंचमं नाम, अत्र कथेयं—

क्वापि पुरे राजपुत्री चित्रकृत्पुत्री च, ताभ्यां मिथः संकेतः कृतः 'आवयोः पतिरेक एव' । एकदा मधुरगानकुञ्जरे द्वे अपि मोहिते, तद्वरणार्थं गते, मार्गे गाथामेकां शृणुतः स्मेति—

"जइ फुल्ली कणिआरया, चूअ य अहियमासंमि घुट्ठंति ।
तुह न खमं फुल्लेउं, जइ पच्चंता करंति डमराइं ॥ १ ॥

न क्षमं न युक्तं, प्रत्यंता नीचाः, आडंबराणि विप्लवरूपाणि कुर्युः । गाथां श्रुत्वा राजसुता दध्यौ—'चूत आम्रो वसंतेनोपालब्धः, कर्णिकाराद्या अधमवृक्षाः पुष्पिता यदि किं युक्तं तवोत्तमतरोः पुष्पितं नार्हं, त्वयाधिकमाससघोषणा किं न श्रुता ?" इति विचार्य 'ममालंकृतिसमुद्गको विस्मृतः' इति छद्मना

पश्चादागता, पितृप्रसादेन सुखिनी जाता । अन्या तु धूर्त्तसंगाद्दुःखिनीति । भावे चोपनयः—कन्यास्थाने ऋषयः, धूर्त्ता विषया एव, गाथापाठिन उपाध्यायाः—

उपदेशतत्त्वं धृत्वाऽसंयमेभ्यो निवर्त्तते । सुगतेर्भाजनं स स्या-दुर्गतेस्त्वपरः पुनः ॥ १ ॥

अथ संप्रति निंदेति नाम । तद्वन्दस्य षष्ठं निंदा-आत्मसाक्षिक्यात्मकुत्सा, सापि द्विधा—अप्रशस्ता संयमादीनां, प्रशस्ता त्वसंयमादीनां, निंदाया ज्ञातमिदं—

क्वापि पुरे नृपेण चित्ररहितां स्वसभां मत्वा चित्रकृतां समा भित्तिभागा दत्ताः । तत्रैकावृद्धचित्रकृत्पुत्री पितुरर्थे भक्तमानयति । द्रुतगतिना राजाश्वेन कष्टान्मार्गतो नष्टा स्वपितृपार्श्वे आगता, तां वीक्ष्य तत्पिता देहचिंतार्थं गतः । नृपस्तत्र भित्तिचित्रं पश्यन् भ्रांत्या मयूरपिच्छं गृहीतुं करं वाहितवान्, नखशुक्तिर्भग्ना, तदा साऽवदत्—'मूर्खमंचे चतुर्थपादः संप्रति जातः' । राज्ञा पृष्टा, साह—'एकश्चतुष्पथे त्वरिताश्ववाही नृपः, द्वितीयो मत्पिता भक्तं वीक्ष्य बहिर्गतः, तृतीयोऽत्र चित्रितमयूरपिच्छग्राही त्वं, चतुर्थो राजा, यतः—तरुणवृद्धबालचित्रकृत्त्रयः सभाभागस्तुल्योऽर्पितः' । राजा तन्मत्या हृष्टस्तां पर्यणयत् । राजा वासवेश्मनि रात्रौ सुप्तः, नृपाज्ञया दासी राज्ञीं कथां पप्रच्छ । नृपे निद्रिते सा प्राह—

'एकस्य पुत्र्येका, तद्वरणार्थं मातृपितृभ्रात्रानीतास्त्रयो वराः सममेयुः । सा रात्रौ सर्पदष्टा मृता । त्रयाणां मध्ये एकस्तया सह दग्धः, एक उपोषितो नित्यं, तृतीयो देवमाराध्य तां संजीविनीमकरोत् । कस्याह्दा सा ? हे दासि ! कथय' । दासी प्रोवाच—'त्वमेवाख्याहि' । सोचे—'स्वप्स्यामि निद्रेति, कथ्ये

कथयिष्यते' । तद्वाक्यासक्तेन राज्ञा द्वितीयेऽहनि तस्यै वारको दत्तः । दासी पृष्टा साऽऽह—सहजीवितः स भ्राता, येन जीविता स पिता, तदर्थं य उपवासी तत्रैव स्थितः स भर्त्ताऽस्याः । पुनस्तया पृष्टा सा कथामाह—'एकहस्तमितप्रासादे चतुर्हस्तमितदेवः स्थितः । कथमेतत्स्यात् ? । कल्ये कथयिष्यते' । ततस्तृतीयेऽहनि तस्योत्तरो दत्तः—'चतुर्भुजो देवो, न तून्नतो ज्ञेयः । एवं षण्मासान् यावदीदृगाख्यानैस्तया राजा गृहे नीतः । नित्यमीर्ष्यया सपत्न्यस्तस्याश्छिद्राणि वीक्षंते । सा नित्यं सायमपवरके प्रविश्य पैतृकं वस्त्रभूषादि पुरस्कृत्येति आत्मानं निंदति—"हे जीव ! एषा तव मूलसंपत्तिः । त्वं कारुपुत्री राज्ञा स्वीकृता, तेन गर्वं मा रक्षेति" । तत्कृत्यं वीक्ष्यान्या राज्यो भूपं प्राहुः—'एषा नित्यं कार्मणं करोति' । ततो राजा रहःस्थित एनां स्वं निंदंतीं श्रुत्वा हृष्टः पट्टराज्ञीं तां चकार" ।

एवं भावे—

साधुनात्मा निंदितव्यो, गर्वः सागरसूरिवत् ।
न कार्यः कालिकाचार्यैः, कथमपि स बोधितः ॥ १ ॥

॥ इत्यब्ददिनपरिमितहितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रंथस्य वृत्तौ
एकादशस्तंभे शतोत्तरपंचपंचाशत्तमं व्याख्यानम् ॥ १५५ ॥

## ॥ शतोत्तरषट्पंचाशत्तमं व्याख्यानम् ॥ १५६ ॥

इदानीं गर्हा परसाक्षिकी कुत्सा एव । एषापि द्विधा पूर्ववत् ज्ञेया । प्रतिक्रमणस्य सप्तमः पर्यायः द्रव्यगर्हायां प्रबंधोऽयं—

कस्यापि वृद्धोपाध्यायस्य तरुणी पत्न्यभूत् । सा नर्मदापरतटवासिनि कस्मिंश्चिद्गोपे रता । प्रत्यहं रात्रौ घटेन नर्मदामुत्तीर्य याति । मायाविनी 'दिवा काकेभ्यो बिभेमि' इति वक्ति । ततो बलिं कुर्वंत्यास्तस्या रक्षायै छात्रान् रक्षपालान् दत्ते । पाठकेन 'अमुकमाह्वय' इत्युक्ता वक्ति—'नाहं नरेण समं वक्तुं वेद्मि' । ततः स स्वयमेवाह्वयति । तत्रैकेन छात्रेणाचिंति—'न खल्वेतदार्जवलक्षणं । यतः—

"अत्याचारमनाचार-मत्यार्जवमनार्जवम् ॥ अतिशौचमशौचं च, षड्विधं कूटलक्षणम्" ॥ १ ॥

ततस्तस्याश्चराचरं विलोकयता रात्रौ दृष्टा सा नर्मदामुत्तरंती, कुतीर्थेनोत्तरतश्चौरान् मकरेण गृहीतान् 'किं कुतीर्थेनोत्तरथ संप्रत्यपि मकराक्षिणी पिधत्त' इति भणन्ती च । चिंतितं च तेन—'अहो स्त्रियाः साहसं' । एकदा काकपिंडसमये तथैव कुर्वतीं तां प्रति छात्रः प्राह—

"दिवा बिभेति काकेभ्यो, रात्रौ तरति नर्मदाम् । कुतीर्थान्यपि जानाति, जलजंत्वक्षिरोधनम्" ॥ १ ॥

साऽवदत्—'किं करोमि अत्र भवादृशा यन्नेच्छंति' । छात्रः प्राह—'त्वत्पतितो बिभेमि' । सा पतिं हत्वा पेटिकायां क्षिप्त्वा त्यजनार्थं वने गता, व्यंतर्या तच्छीर्षे पेटिका स्तंभिता । वने भ्रमंत्यास्तस्या क्षुप-

रि मांसं गलति, तच्छ्वश्रया क्षुधाकुलोद्विग्ना निंदति गृहे गृहे 'पतिघ्न्यायै मह्यं भिक्षां देहि' इत्थं बहुकालं निनाय।

नमंत्या अन्यदा साध्वीं, पपात पेटिका भुवि। अतं साग्रहीदेवं, कार्या दुष्कृतगर्हणा ॥ १ ॥

॥ इत्यब्ददिनपरिमितहितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रंथस्य वृत्तौ एकादशस्तंभे शतोत्तरषट्पंचाशत्तमं व्याख्यानम् ॥ १५६ ॥

## ॥ शतोत्तरसप्तपंचाशत्तमं व्याख्यानम् ॥ १५७ ॥

अधुना शुद्धिः, निर्मलीकरणं तच्छब्दस्याष्टमः पर्यायः। सापि द्विधा—प्रशस्ता ज्ञानादेः, अप्रशस्ता अशुद्धस्य सतः क्रोधादेर्वैमल्याधानं स्पष्टतापादनमिति। शुद्धौ वस्त्रागदयोर्दृष्टांतः—

श्रेणिकेन क्षौमयुग्मं क्षालनाय समर्पितं। कौमुदीमहे तद्भार्याद्वयो रजकेन परिधापितं। कौमुद्यां नृपेण स्वक्षौमयुगलं वीक्ष्याभिज्ञानाय तांबूलेनासिक्तं, रजकेन तद्वस्त्रं क्षारादिभिः शोधितं प्रातरानीय दत्तं। नृपेण पृष्टः, क्षालको यथाजातमब्रवीत्, राज्ञा सत्कृतः, इति द्रव्यशुद्धिः। एवं साधुश्राद्धानां जातातिचारस्य तत्कालालोचने शुद्धिः, सप्तमांगोक्तसुरदेवचुल्लशतकवत्—

सुरदेवश्राद्धो वाराणसीनिवासी पौषधशालायां स्थितः। तं प्रति देवतयोक्तं—'षोडश रोगातंकान् भवदेहे युगपन्नयामि, यदि धर्मं न त्यजसि'। इति वचनमुपश्रुत्याचलितप्रतिज्ञः पुनः श्रीवीरपार्श्वे आ-

सोचितः प्रतिक्रांतो विशुद्ध्या सौधर्मे गतः, चतुःपल्यायुः प्रपूर्य महाविदेहे सेत्स्यति । इति भावविशुद्धिः ।

अथ शुद्धावेवागदवृत्तं यथा—

परचक्रागमे नीरविनाशार्थं राजा कश्चिद्वैद्याद्विषमानाययत् । वैद्यो यवमात्रं विषं गृहीत्वागान्नृपोऽकुप्यत् । वैद्योऽवक्—'हे प्रभो ! मा कुप, सहस्रघाति एतत् । ततो मृतेभस्य लोमोत्पाट्य तद्दत्तं, तेन सर्वोऽपि हस्ती विषमयोऽभूत् । यस्तत्खादति स्पृशति वा सोऽपि विषमयः' । ततो राजोचे—'वालनाऽप्यस्ति ?' स ऊचे—'अस्ति' इति प्रोच्य औषधलवं दत्त्वा तद्विषं निर्विषमकरोत् । एवं वैद्यवरसाधुनापि आलोचनादिरूपागदेनातिचारविषमपसारणीयमिति ।

हारिभद्र्यावश्यकस्य, वृत्तितो लिखिता मया । प्रतिक्रमणपर्याया—स्तद्विज्ञाय क्रियां कुरु ॥ १ ॥

॥ इत्यब्ददिनपरिमितहितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रंथस्य वृत्तौ एकादशस्तंभे शतोत्तरसप्तपंचाशत्तमं व्याख्यानम् ॥ १५७ ॥

## ॥ अष्टपंचाशदुत्तरशततमं व्याख्यानम् ॥ १५८ ॥

अथ पौषध ईर्यापथिकं प्रतिक्रम्य भवति इत्याह—

प्रतिक्रमश्रुतस्कं—धमीर्यापथिकं तथा । प्रतिक्रम्य क्रियाः सर्वा, विधेयाः पौषधादिकाः ॥ १ ॥

ईर्यापथिकं तथेति अपरनाम प्रतिक्रमणश्रुतस्कंधं, तत्प्रतिक्रम्य सर्वाः क्रियाः कार्याः । यतः—

"उम्मुक्कभूसणो सो, इरियाइपुरस्सरं च मुहपंत्तिं ।
पडिलेहिऊण तत्तो, चउव्विहं पोसहं कुणइ" ॥ १ ॥

इति विवाहचूलिकायां । "तत्थ ढड्डरो नाम सावओ सरीरचिंतां काऊण पडिस्सयं वच्चइ । ताहे तेण दूरट्ठिएण तिन्नि निस्सिहिआउ कयाउ । एवं सो इरियाइ ढड्डरेण सरेण करेइ" इत्यावश्यकचूर्णौ । भगवत्यंगेऽपि पुष्कलिकश्राद्धवदित्याद्युक्तेश्च पूर्वमीर्यापथिकीं प्रतिक्रमेत् । तत्र च त्रिषष्ठ्यधिकपंचशतीमितानां जीवानामेवं मिथ्यादुष्कृतं दीयते । तथाहि—सप्तविधा नारकिणः पर्याप्तापर्याप्तभेदेन १४। पंच स्थावरजीवाः पर्याप्तापर्याप्तसूक्ष्मवादरभेदैश्च २० । प्रत्येकवनस्पतयः पर्याप्तापर्याप्तभेदाभ्यां २ । विकलेंद्रियाः पर्याप्तापर्याप्ताः ६ । जलस्थलखचरा उरोभुजपरिसर्पाश्च संज्ञ्यसंज्ञिपर्याप्तापर्याप्ताः २० । एवं तिर्यग्भेदाः ४८ । कर्मभुवो नराः १५ । अकर्मभुवः ३० । अंतर्द्वीपस्थाः ५६ । एवं १०१ । एषां गर्भजानां पर्याप्तापर्याप्ततया २०२ । तेष्वेव क्षेत्रजाः १०१ संमूर्छजाऽपर्याप्ता नराः । एवं ३०३ । भुवनपतयः १० । व्यंतराः १६ । चरस्थिरभेदाभ्यां ज्योतिष्काः १० । वैमानिकाः १२ । ग्रैवेयकाः ए । अनुत्तरवासिनः ५ । लोकांतिकाः ए । किल्बिषिकाः ३ । भरतैरावतवैताढ्यस्थाः तिर्यग्जृंभकाः १० । परमाधार्मिकाः १५ । एवं सर्वे एए । पर्याप्तापर्याप्ताः १९८ । सर्वाग्रं ५६३ भेदाः । अभिहयादिदशपदगुणिताः ५६३० । रागद्वेषाभ्यां गुणिताः ११२६० । मनोयोगवचनयोगकाययोगैर्गुणिताः ३३७८० । करणकारणानुमोदनेन गुणिताः

१०१३४० । अतीतवर्तमानज्ञाविरूपकालत्रयेण गुणिताः ॥ ३०४०२० । अर्हत्सिद्धसाधुदेवगुर्वात्मसाक्षिन्निर्गुणिताः १८२४१२० ज्ञवंति । यतः—

"अगारस्सयलस्का, चउवीससहस्ससयत्रीसहिआ ।
इरिआमिछाडुक्करू—पमाणमेवं सुए ज्ञणियं" ॥ १ ॥

तथेर्यापथिकीं प्रतिक्रमता त्रीन्वारान् पदन्यासज्रूमिं प्रमृज्य सम्यग्मनसाऽतिमुक्तकर्षिवत्प्रतिक्रम्या । तथाहि—

पोलासपुरे विजयराजा, श्रीदेवी कांता, तयोरतिमुक्तः पुत्रः षड्वार्षिकोऽज्रूत् । षष्ठपारणे श्रीगौतमं गोचर्यागतं दृष्ट्वा एवमवादीत्—'के यूयं किं वाऽटथ ?' गणेशेनोक्तं—'वत्स ! वयं श्रमणा जिक्षार्थं पर्यटामः' । 'तर्हि ज्रदंत ! आगत्र, तुज्यं जिक्षां दापयामि' इति ज्रणित्वांगुल्या ज्रगवंतं गृहीत्वा स्वगृहमानैषीत् । ततः श्रीदेवी हृष्टा तं प्रतिलाज्रयामास । स वुद्ध्याऽबालः पुनरेवावोचत्—'यूयं क वसथ ?' । 'हे ज्रद्र ! वयं वीरजगद्गुर्वंतिके वसामः' । तेनोक्तं—'युष्माकमपि गुरवः संति ? तत्पादांतिके ज्रवद्भिः सहाहमागत्रामि' । गणपतिः प्राह—'यथासुखं देवानुप्रिय' । ततो जिनपार्श्वे एत्य नत्वा धर्मं श्रुत्वा गृहमागत्य पितरावब्रवीत् यथा—'संसारान्निर्विण्णोऽहं प्रव्रजामीत्यनुजानीतं' । तावूचतुः—'त्वं बालोऽसि किं जानासि, दीक्षा कीदृशी ?' स प्राह—'अंब तात! यदेवाहं जानामि तदेव न जानामि, यन्न जानामि तदेव जानामि इति' । 'कथमेतत् ?' सोऽब्रवीत्—'हे मातः ! यदेवं जानामि जातेनावश्यं मर्त्तव्यं, न

जानामि कदा वा क स्थले कथं वेति। तथा न जानामि कैः कर्मभिर्निरयादिषु जीवा उत्पद्यंते, एतत्पुनर्जानामि यथा स्वयं कृतैः कर्मभिरिति'। एवमनेकयुक्त्या पितरौ प्रबोधयामास। तत्कृतमहामहेन दीक्षां लात्वौ परमजिनाच्यर्णे। ततः शिक्षार्थं स्थविराणां जलापितः। स एकदा बहिर्भूमौ गतः, बालकाः प्रथमवृष्टौ पल्वले पलाशपत्रकृतनावस्तारयंतो वदंति—'मन्नौस्तरति'। ततः क्षुल्लोऽपि स्वपात्रं जलोपरि तारयन्नेतदेवोवाच ततः स्थविरैर्वारितः। ततः साधुभिः स्वामी प्रोक्तः—'षड्वार्षिकोऽयं जीवरक्षां कथं ज्ञास्यति? सांप्रतं तु षट्कायमुपमर्दयति'। वीरोऽवोचत्—'मा एनं हेलयत, ज्ञाणयत, युष्मत्पूर्वं केवली जावी'। पश्चात्स्थमितस्तैः। तत एकादशांगादि अचिरेण पठन्नेकदा मार्गे तथैव बालकान् प्रेक्ष्य पूर्वक्रीडां निंदन् समवसरणं प्रपेदे, ईर्यापथिकीं प्रतिक्रामति, अर्थं जावयन् 'दगमट्टी' इति पदेन सचित्तोदकमृत्तिकाविराधनां स्मारं स्मारं गर्हन् शुक्लध्यानवशात्केवली जातः। देवा महं कर्तुमागताः। वीरेणोक्तं—'जोः स्थविराः! पश्यतायं नववार्षिकः केवली जातः'। सर्वे तं प्रणेमुः। तथांतगडसूत्रे जगवत्यंगे च यद्वर्णितस्ततोऽयं श्रूयते। अनुत्तरोपपातिकसूत्रे यत्प्रोक्तस्तद्यादवचरित्रे वर्णितः स जविष्यतीति।

षड्वार्षिको वीरजिनांतिकेऽग्रहीद्—दीक्षां ततोऽसौ नवमे हि वार्षिके।
ईर्यापथिक्यर्थविजावयन् द्युति—मुक्तर्षिरापाव्ययदर्शनादिकम्॥ १॥

॥ इत्यब्ददिनपरिमितहितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रंथस्य वृत्तौ एकादशस्तंभे अष्टपंचाशदुत्तरशततमं व्याख्यानम्॥ १५८॥

## ॥ एकोनषष्ठ्यधिकशततमं व्याख्यानम् ॥ १५९ ॥

अथ पौषधव्रतस्यातिचारानाह—

उत्सर्गादानसंस्तारा, अनवेक्ष्याप्रमृज्य च । अनादरः स्मृत्यनुप—स्थापनं चेति पौषधे ॥ १ ॥

उत्सर्जनमुत्सर्गस्त्याग उच्चारप्रश्रवणादीनां, अवेक्ष्य चक्षुषा जीवाकुलभूमिं निरीक्ष्य प्रमार्जनं (प्रमृज्य) रजोहरणादिना विशुद्धीकृत्य प्रतिलेख्य स्थंडिलादौ उत्सर्गः कार्यः, एवमकरणे प्रथमोऽतिचारः । १ । आदानमुपलक्षणान्निक्षेपणमपि यष्टिपीठफलकादीनां, तदपि अवेक्ष्य प्रमृज्य च कार्यमन्यथाऽतिचारः । २ । तथा संस्तीर्यते प्रतिपन्नपौषधव्रतैर्दर्भतृणकंबलवस्त्रादि इति संस्तारः, तस्य चानवेक्षणादिके न करणेऽतिचारः । ३ । अनादरः पौषधव्रताचरणेऽतिचारः । ४ । तथा स्मृत्यनुपस्थापनं तद्विषयमेवेति । तथाऽन्यग्रंथे तु पौषधविधिर्विपरीतः—'यथागृहीतपालनं, आहारादिपौषधे कृते सति क्षुधातापाद्यर्त्या पौषधे पूर्णे स्वार्थमाहारादिकमित्थमित्थं कारयिष्ये इत्यादि धारयतीति पंचमोऽतिचारः।५। अत्र सातिचारपौषधे नंदमणिकारश्रेष्ठिदृष्टांतो ज्ञातासूत्रस्य त्रयोदशाध्ययनात्किंचिल्लिख्यते—

राजगृहे श्रीवीरसमवसरणे प्रथमकल्पवासी दर्दुरांकदेवः सुरीयाभसुरवत् भक्तिं कृत्वा स्वर्गतः । तदा गौतमः श्रीवीरं पप्रच्छ—'भगवन् ! अनेन केन पुण्येन समृद्धिर्लब्धा ?' । प्रभुरुवाच—'राजगृहे नंदमणिकारश्रेष्ठी अस्मत्पार्श्वे धर्मं जग्राह । एकदा ग्रीष्मकाले अष्टमभक्तकपौषधं जग्राह । यतस्तत्सूत्रं—

'अट्ठमभत्तं परिगिण्हंति पोसहसालाए जाव' इत्यादि पौषधे तृषार्त्त इत्यचिंतयत्—'धन्यास्ते ये स्वनाम्ना वापीकूपादिकं कारयंति'। ततः श्रेणिकाज्ञां गृहीत्वा बहिर्नंदपुष्करिणीमकारयच्चतुर्दिक्षूपवनान्वितां, बहुजनास्तच्चारुत्वं प्रशंसंति। तच्छ्रुत्वा स जहर्ष। क्रमेण भावतो मिथ्यात्वरोगं द्रव्यतश्च देहे षोडश रोगान् प्राप। अनेकवैद्यकृतोपचारा निष्फला बभूवुः। ततः पुष्करिण्यां मूर्छितो मृत्वा तत्रैव गर्भजभेकत्वं प्राप। तत्र क्रीडन् बहुजनमुखात् पुष्करिणीवर्णनमाकर्ण्य जातिस्मृतिं प्राप्यात्मानं निनिंद—'धिग्मां, मया सर्वाणि व्रतानि विराधितानि पुनरत्र भवे स्वीकरोमि' इति विचार्य स्वमत्याऽभिग्रहं ललौ—'अद्यप्रभृति यावज्जीवं षष्ठतपसा पारणं, जलमपि नंदापुष्करिण्यां बहुजनप्रस्वेदादिभिः कलुषं प्रासुकं, तदेव व्यापार्यं'। तस्मिन्काले लोकमुखाच्छ्रीवीरागमनं श्रुत्वा वंदनार्थमगमत्। मार्गे श्रेणिकाश्वखुरपादेनाक्रांत एकांते गत्वा 'नमुत्थुणं' इत्यादिना धर्माचार्यं नत्वा सर्वपापानि प्रत्याख्याय सौधर्मे दर्दुरांकदेवोऽभूत्। तेन पुण्येनेदृशी संपत्तिः प्राप्ता। चतुष्पल्यायुः प्रपाल्य महाविदेहे भवांतं करिष्यतीति'। पूर्वमत्रैव यद्दर्दुरांकवृत्तं लिखितमस्ति, तच्चरित्रग्रंथानुसारेणेति ज्ञेयं।

भेकावतारं मणिकारनंदो, भग्नव्रतः स समुपेत्य पश्चात्।
आलोच्य जातिस्मृतिना स्वपापं, देवोऽभवद्दर्दुरचिह्ननामा ॥ १ ॥

॥ इत्यब्ददिनपरिमितहितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रंथस्य वृत्तौ एकादशस्तंभे एकोनपञ्चाधिकशततमं व्याख्यानम् ॥ १५९ ॥

## ॥ षष्ट्यधिकशततमं व्याख्यानम् ॥ १६० ॥

अथ पौषधव्रतिनं स्तवीति—

धर्मपौषधमाराध्य, सम्यक्सागरचंद्रमाः । समाधिना विपन्नोऽभूत्, त्रिदिवे त्रिदिवोत्तमः ॥ १ ॥

स्पष्टः । श्लोकसूचितसंबंधस्त्वयं—

द्वारवत्यां बलदेवसूनुर्निषधः, तस्य सुतः सागरचंद्रोऽभूत् । इतस्तत्रैव धनसेनराजस्य सुता कमलामेला, सा उग्रसेनपुत्रस्य नभःसेनस्य दत्ता । इतश्च नारदो नभःसेनगृहेऽगमत् । विवाहव्यग्रचित्तेन नारदो नार्चितः, तेन क्रोधेन निषधं प्रति प्रोक्तं "यादृशं स्वरूपं कमलामेलायास्तादृशं भुवनत्रयेऽपि नास्ति' । सागरचंद्रेणोक्तं—'सा कस्यचिद्दत्ता ?'। नारदेनोक्तं—'दत्ता परं नाद्यापि परिणीता' । तच्छ्रुत्वा तद्दिनादारभ्य सर्वत्र तन्नामजापं कुर्वन्नास्ते । ततः स ऋषिः कन्यांतिकं गतः । कन्यया पृष्टः—'किमप्याश्चर्यं दृष्टं ?' । स प्राह—'दृष्टमाश्चर्यद्वयं मया सागरचंद्रे सुरूपत्वं नभःसेने तु कुरूपत्वं । ततो झटित्येव सा सागरचंद्रानुरक्ता जाता नित्यं तं ध्यायति । अथ चिंतासागरे मग्नः सागरचन्द्रः सांबकुमारेण दृष्टः । ततस्तस्य पृष्ठे स्थित्वा सांबेन कराभ्यां तदक्षिणी आच्छादिते । तेनोक्तं—'किं कमलामेला ?' । सांबेनोक्तं—'कमलामेलोऽहं' । ततः सांबोऽयमिति ज्ञात्वा प्रोक्तं—'सत्यमेतत्त्वमेव मम कमलदलदीर्घलोचनां तां मेलयिष्यसि, कोऽत्रार्थे क्षमः ?' । ततः प्रद्युम्नपार्श्वाद्बाकुललपतितेन तेन सांबेन प्रज्ञप्तिविद्या याचिता । विवाह-

दिवसे च बहुनिर्यादवैः परिवृतेन तेन पितृगृहादाकृष्य बहिरुद्याने नीता। तत्पाणिग्रहणं सागरचंद्रेण कारितं। ततः कन्यापितृश्वशुरपाक्षिकाः सर्वत्रान्वेषयंतो वने विद्याधरवृत्तांतं वीक्ष्य कृष्णं प्रति प्रोचुः। ततो हरिः क्रुद्धः ससैन्यस्तत्राययौ। सांबोऽपि वैक्रियलब्ध्या कृतानेकरूपो महद्युद्धं चकार। पश्चात्सांबो मूलरूपेण कृष्णांह्रौ निपपात। ततो हरिणा सागरचंद्रस्यैव दत्ता। नभसेनस्ततःप्रभृति सागरस्योपरि द्वेषं वहति। छलमन्वेषयति। अन्यदा श्रीनेमिपार्श्वे प्रतिपन्नश्रावकव्रतः संविग्नः सागरचंद्रः श्मशाने पर्वदिने पौषधप्रतिमया स्थितः। नभसेनेन तत्र भ्रमता दैवाद्दद्दशे। अंगारभृता ठीवी तन्मस्तके तेन पापिना मुक्ता। स तमुपसर्गं सहमानः प्रज्वलितकायोऽष्टमस्वर्गे सुरोऽजनि—

ज्ञावाद(त्तु)सिक्ते हृदये न दुष्कृत—वह्निर्विवेशैवमथास्य मानसे।
धर्माब्धिकल्लोलविवर्द्धनांचितः, कल्पेऽष्टमे सागरचंद्र आप शम्॥ १॥

॥ इत्यब्ददिनपरिमितहितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रंथस्य वृत्तौ एकादशस्तंभे षष्ठ्यधिकशततमं व्याख्यानम्॥ १६०॥

## ॥ शतोत्तरैकषष्टितमं व्याख्यानम्॥ १६१॥

अथ पौषधफलं दर्श्यते—

विधेयः सर्वपापानां, मथनायैव पौषधः। सद्यः फलत्यसौ शुद्ध्या, महाशतकश्रेष्ठिवत्॥ १॥

स्पष्टः। नवरं सर्वपापाश्रवनिरोधहेतुरयं, एतस्मिन् पालिते एकादशव्रतानि सम्यक्पालितानि भवंति। शुद्ध्या योगशुद्धिक्रियाशुद्धिध्यानशुद्ध्यादिनाऽसौ पौषधः सद्यो झटिति फलति। ध्यानादिशुद्धिरियं यतः—

"नेत्रद्वंद्वे श्रवणयुगले नासिकाग्रे ललाटे, वक्त्रे नाभौ शिरसि हृदये तालुनि भ्रूयुगांते।

ध्यानस्थानान्यमलमतिभिः कीर्त्तितान्यत्र देहे, तेष्वेकस्मिन्विगतविषयं चित्तमालंबनीयम्॥ १॥

इति ध्यानस्थाननिवेशितचेता एकासनस्थ एव तिष्ठति पौषधे इति। तथैतद्व्रतफलमेवमुक्तं—

"कंचणमणिसोवाणं, थंभसहस्समिअं सुवन्नतलं।

जो कारिज्जइ जिणहरं, तओवि तवसंजमो अहिओ"॥ १॥

एकस्मिन् सामायिके मुहूर्त्तमात्रे 'बाणवइ कोमीओ' इति गाथायां प्रागुक्तलाभः। त्रिंशन्मुहूर्त्तमानेऽहोरात्रपौषधे त्रिंशद्गुणो बादरवृत्त्या स्यात्, स चायं—

"सत्तहत्तरिसत्तसया, सत्तहत्तरिसहस्स लक्खकोमीओ।

सगवीसकोमिसया, नवभागा सत्त पलिअस्स"॥ १॥

अंकतो यथा—२७ ७७ ७७ ७७ ७७७$\frac{७}{९}$ एतावत्पल्यायुर्बंध एकस्मिन्पौषधे, सूक्ष्मवृत्त्या त्वधिकतरोऽपि भवतीति। पौषधकारिणां पौषधो महाशतकवत्सद्यः फलति, तदवदातोऽयं—

राजगृहपुरे महाशतकगृहपतिः। तस्य त्रयोदशभार्याः संति। तन्मध्ये रेवतीनाम्नी भार्याऽनार्या, द्वादशगोकुलाधिपा वर्त्तते। अन्यास्त्वेकैकगोकुलाधिपाः, एकैककोटिद्रव्यस्वामिन्यो, रेवती तु द्वादशको-

टिसुवर्णपतिः, श्रेष्ठ्यपि अनेककोटीस्वर्णगोकुलाधिपः । एकदा श्रीवीरदेशनां श्रुत्वा प्रतिबुद्धः स द्वादश व्रतानि जग्राह । चतुर्दशवर्षानंतरमुपासकप्रतिमा वहन् अवधिज्ञानं प्राप । अथ रेवती नित्यं सपत्नीनामुपरि क्रोधं वहंती विषप्रयोगादिना क्रमेण सर्वा अपि ता हत्वा सर्वस्वस्वामिनी बभूव । नित्यं मद्यादिकमसेवत । एकदा कामतीव्रकरणाय जातमात्रवालं स्वनरहस्तेनानाय्य हिंसां कारयित्वा संस्कार्य च तन्मांसं बुभुजे मद्यं च पपौ । कामवशा यत्र पौषधशालायां स्वस्वामी स्थितोऽस्ति, तत्र केशपाशं मुत्कलीकृत्योरोजोरूदरजघनदशनादिकमंगं मनाग्दर्शयंती निर्व्रीडा कामक्रीडातुरा जजल्प—'हे स्वामिन् ! मुंचेदं पौषधादिव्रतं, मया सह रमस्व, धर्मफलं तु भोगसंयोगाविप्रयोगं तदेव' इत्याद्यनुकूलोपसर्गादचलमतिः श्रेष्ठी प्राह—'हे पापिष्ठे ! धर्मस्य फलमधर्मेण कथं विंदसि ?, अतो याहि मत्पुरतो दूरं । अतः सप्तमे दिवसे मृत्वाघनरके चतुरशीतिवर्षसहस्रायुष्मत्त्वं नारकत्वं प्राप्स्यसि' इति श्रुत्वा विलक्षा स्वस्थाने आययौ । ततः सप्तमे दिने सा तत्रोत्पन्ना । महाशतकः विंशतिवर्षपर्यंतं श्राद्धधर्मं प्रपाल्य संलेखनां कृत्वा सौधर्मे सुरत्वं प्रापेति । विस्तरेणायं दृष्टांतो वर्धमानदेशनातो ज्ञेयः ।

ज्ञानं तृतीयं कृतपौषधादिर्निरत्रापि शुद्धं फलमेतदाप्तवान् ।
अन्यत्र जन्मन्यपि कल्पमादिमं मुक्तिं विदेहे ननु केवलक्रमात् ॥ १ ॥

॥ इत्यब्ददिनपरिमितहितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रंथस्य वृत्तौ एकादशस्तंभे शतोत्तराधिकैकषष्टितमं व्याख्यानम् ॥ १६१ ॥

## ॥ शताधिकद्विषष्टितमं व्याख्यानम् ॥ १६२ ॥

अथ चतुर्थं शिक्षाव्रतमाह—

सदा चान्नादिसंप्राप्ते, साधूनां दानपूर्वकम् । भुज्यते यत्तदतिथि–संविभागाभिधं व्रतम् ॥ १ ॥

स्पष्टः । नवरमतिथिस्वरूपमिदं—

“तिथिपर्वोत्सवाः सर्वे त्यक्ता येन महात्मना । अतिथिं तं विजानीया–च्छेषमभ्यागतं विदुः” ॥ १ ॥

अतिथेः संगत आधाकर्मादिद्विचत्वारिंशद्दोषविरहितो विशिष्टो भागः पश्चात्कर्मादिदोषपरिहारायांशदानरूपोऽतिथिसंविभागः, तदेतन्नामातिथिसंविभागव्रतमुच्यते । अत्र चायं विधिः—‘एत्थ सामाचारि सावगेण पोसहं पारित्तेण नियमा साहुणउं दाउं पारियव्वं, अन्नया पुण अनियमो दाऊण वा पारेइ, पारित्ते वा देतित्ति’ इत्याद्यावश्यकनिर्युक्तिवृत्तौ । भोजनवेलायां सुभक्त्या साधून्निमंत्र्य तैः सह गृहमायाति, स्वयमागच्छतो वा मुनीन् दृष्ट्वा तदभिमुखगमनादिकं करोति । सविनयं बालवृद्धतपस्विग्लानादीनां स्पर्द्धामहत्त्वमत्सरस्नेहलज्जाभयदाक्षिण्यप्रत्युपकारेच्छामायाविलंबानादरपश्चात्तापादिदोषवर्जमेकांतात्मतारणबुद्ध्या स्वयं स्वहस्तपात्रधारणादिना पार्श्वे स्थित्वा स्वभार्यादिपार्श्वाद्वा दानं दत्ते । तत्र गृहस्थवर्जनीयदोषाः पिंडविशुद्ध्यादिग्रंथेभ्यो ज्ञेयाः । ततो वंदित्वा स्वगृहद्वारादि यावदनुव्रज्य च निवर्त्तते । साध्वभावे तु अनभ्रवृष्टिवत् कदाचित् साध्वागमनं स्यात्तदा हर्षभरेण अंबिकाश्राविकादिवद्दानं देयं, तत्संबंधस्त्वयं—

रैवतासन्नपुरे देवजट्टदेविलासुतः सोमजट्टो द्विज आसीत्। अंबिका जार्या श्राद्धकुलोत्पन्ना जावतो दान-प्रिया। तयोः सुतौ सिद्धबुद्धौ। एकदा श्राद्धदिने मासक्षपणिसाधवे जक्तिशुद्धानंदैर्दत्तवती दानं। तद्दानं वीक्ष्य काचित्तदीया प्रातिवेश्मिकी वाढस्वरेणाह—'अहो अद्य श्राद्धदिने मलीनस्य प्रथमं दानं दत्तं, अन्नं गृहं चाशुचीकृतं' इति प्रालपत्। अत एव शास्त्रे उक्तं च—'गृहिणा सुप्रातिवेश्मिके स्थाने स्थेयं' यतः—"स्वामिवंचकलुब्धाना–मृषिस्त्रीवालघातिनाम्। इच्छन्नात्महितं धीमान्, प्रातिवेश्मकतां त्यजेत्" ॥ १ ॥

अत्रांतरे क्वापि गता गृहांतराछ्वश्रूरागता। तस्याः प्रातिवेश्मिक्यास्तादृग्वचांसि श्रुत्वा क्रुद्धा सती पुत्रायाज्ञापयत्। तेन निर्धाटिता—'आः पापे! किमेतत्कृतं? अद्यापि कुलदेवता न पूजिता, पिंडा अपि न योजिताः। गछ मद्गृहात्'। सा सुतद्वयं गृहीत्वाऽपरद्वारेण निर्जगाम। क्वापि स्थानमलजमाना नगराद् वहिर्यांती मार्गश्रांताभ्यां सुताभ्यां जलं मार्गिता। अग्रे शुष्कं सरः शीलमाहात्म्याज्जलभृतं, शुष्कसहकारः फलितः फलानि पुत्रहस्ते ददौ। आम्रछायायां विश्राम्यति स्म। ततः श्वश्रूर्गृहांतर्गता, मुनिदानार्थं गृहीतजाजनानि सौवर्णानि, सिक्थानि मौक्तिकानि, जोजनेष्वग्रशिखां तथारूपां दृष्ट्वा हृष्टा पुत्रं प्राह—'हे वत्स! वधूं पतिव्रतां पृष्ठे गत्वा पश्चादानय'। सोमजट्टोऽपि तन्माहात्म्यं वीक्ष्य पश्चात्तापपरः पृष्ठे जगाम। अंबिकापि ससुता पतिमागछंतं दृष्ट्वा जीताऽग्रतः कूपे पपात। श्रीनेमिप्रभुशरणं कृत्वा कोदंरुविमाने देवी महर्द्धिकांबिका नाम्नाऽजनि। यत उक्तं च पूर्वपूज्यैः—'सुहाज्झवसाणेणं पाणे चेऊण अन्ने जणंति रेवयसिहराउ अप्पाणं ऊंपावित्था (त्ता) उप्पन्ना सोहम्मकप्पहिठे, चउहिं जोयणेहिं अंबि

यदेवीनामा महर्द्धिया, कोहंडिविमाणनामेणं सा देवी चउभुया दाहिणहत्थेण अंबलुंबी पासं च धारेइ, वामहत्थेण पुत्तंकुस धारेइ'। सोमोऽपि लोकापवादभीतः 'यस्य शरणं स्त्रिया कृतं तस्य शरणं मेऽस्तु' इत्युक्त्वा कूपे झंपां ददौ, सोऽपि तत्रैव विमाने सिंहरूपवाहनोऽभूत् ।

रीर्यादिपात्राण्यभुवन् सुवर्णा—न्यभूच्च देहोऽपि सुवर्णवर्णः ।
देव्या भवेऽभून्मुनिदानभक्त्या, तां नौमि चांबां प्रभुपादभक्ताम् ॥ १ ॥

॥ इत्यब्ददिनपरिमितहितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रंथस्य वृत्तौ एकादशस्तंभे शताधिकद्विषष्टितमं व्याख्यानम् ॥ १६२ ॥

## ॥ शतोत्तरत्रिषष्टितमं व्याख्यानम् ॥ १६३ ॥

अथ पुनस्तदेव वर्ण्यते—

अतिथिभ्योऽशनावास-वासःपात्रादिवस्तुनः । तत्प्रदानं तदतिथि—संविभागव्रतं भवेत् ॥ १ ॥

न विद्यंते ( तिथयः ) संसारिपर्वोत्सवास्ते(येषां ते)ऽतिथयः, यद्वा—

"हिरण्ये वा सुवर्णे वा, धनधान्ये तथैव च । अतिथिं तं विजानीया-द्यस्य लोभो न विद्यते" ॥ १ ॥

तत्रातिथयो मुख्यवृत्त्या चारित्रिणः, तेभ्योऽशनमावासो वासो वस्त्रं पात्रादि देयं । यतः श्राद्ध-सामाचार्यां—

"निवसिज्ज तत्थ सड्ढो, साहूणं जत्थ हुज्ज संपाउं । जत्थ य चेइयभुवणं, वियट्टसा साहम्मिया चेव" ॥१॥

प्रभाते देवगुरुप्रणमनं विना जलपानं न कल्पते । भोजनकाले उपाश्रयं गत्वा गुरुमाहूय भक्त्या निरवद्यं दानं दत्ते गृहस्थः, न त्वनादरेण, यतः—

"अनादरो विलंबश्च, वैमुख्यं विप्रियं वचः । पश्चात्तापश्च दातुः स्या-द्दानदूषणपंचकम्" ॥ १ ॥

तथा—

"आनंदाश्रूणि रोमांच-बहुमानं प्रियं वचः । तथानुमोदना पात्रे, दानभूषणपंचकम्" ॥ १ ॥

आत्मनिस्तारणबुद्ध्या दत्वा योऽत्ति, तदेवभक्तं, अन्यत् प्रेतभोज्यं । तथा दानानां मध्ये सुपात्रदानं महाफलदं । यतः—

"दानं धर्मेषु रोचिष्णु-स्तच्च पात्रे प्रतिष्ठितम् । मौक्तिकं जायते स्वाति-वारि शुक्तिगतं यथा" ॥ १ ॥

तथा चोक्तं—

"केसिं च होइ वित्तं, चित्तं केसिंपि उभयमन्नेसिं । चित्तं वित्तं च पत्तं च, तिन्नि पुन्नेहिं लब्भंति" ॥ १ ॥

यथा—

कश्चिद्राजा दानपराङ्मुखः । अन्यदा महाटव्यां गतः, तत्र मधुको[1] गलद्बिंदून्मुंचति, दृष्ट्वोक्तं तेन—भोः पंडिताः ! अयं मधुकः कथं रुदति ? तदैकेन पंडितेन भूपं प्रति बोधाय प्रोक्तं—

---

१ वृक्षविशेषः.

"यदास्ति पात्रं न तदास्ति वित्तं, यदास्ति वित्तं न तदास्ति पात्रम् ।
एवं हि चिंतापतितो मधूको, मन्येऽश्रुपातै रुदनं करोति" ॥ १ ॥

श्रुत्वैतद् नृपः सत्पात्रदानपरोऽभूत् ।

तथाऽन्येद्युः कर्णराजो दानफलं मुक्त्यादिसौख्यं श्रुत्वा प्रतिप्रभातं भारशतमितं सुवर्णं दत्वोत्तिष्ठति सिंहासनात् ।

अत्रांतरे एकदा कर्णस्य सत्पात्रदानेच्छायां समुत्पन्नायां प्रातः प्रथमं चारणद्वयं आर्द्धमिथ्यात्वधर्मवासितं समागात् । तदा ध्यातं कर्णेनेति—'सत्पात्राय मया पूर्वदानं दातव्यं सद्गतिहेतवे, यतः—

"अन्नदातुरधस्तीर्थं—करोऽपि कुरुते करम् । तच्च दानं भवेत्पात्र—दत्तं बहुफलं यतः ॥ १ ॥

एवं ध्यायन्कर्णः परीक्षापरो यावद्दानं न दत्ते, तावदेकेन चारणेनोक्तं—

"पत्तपरिक्खह किं करह, दिजाउ मग्गंताह । वरसंतह किं अंबुदह, जोइं समविसमाइं" ॥ १ ॥

तदा कर्णः प्राह—

"वरसो वरसो अंबुदह, वरसीकां फल जोय । धत्तुरे विख इक्खुरस, एवको अंतर होय" ॥ १ ॥

इति । तथा सर्वदानेषु अन्नदानं महत्तमं च । यतः—

"सर्वेषां चैव भूताना—मन्नैः प्राणाः प्रतिष्ठिताः । तेनान्नदो विशां श्रेष्ठ, प्राणदाता स्मृतो बुधैः" ॥ १ ॥

---

१ एकः आर्द्धधर्मवासितोऽन्यश्च मिथ्यात्वधर्मवासितः

"अन्नं वै प्राणिनां प्राणा, अन्नं तेजः सुखोदधिः । तस्मादन्नसमं दानं, न भूतं न भविष्यति" ॥ २ ॥

तथा—

"उत्तमपत्तं साहू, मज्झिमपत्तं सुसावया भणिया । अविरयसम्मद्दिट्ठी, जहन्नपत्तं मुणेयव्वं" ॥ १ ॥

सत्पात्रसंयोगे सति दत्त्वा भोज्यं, तदभावे भोजनकाले बहिरागत्य दिगवलोकनं कार्यं, पश्चाद्भोज्यं । एतच्चातिथिदानं स्वल्पमपि बहुफलदं सद्यश्चंदनबालाश्रेयांसनयसारादीनामिवेति ।

यथा रत्नत्रयीयोगे, मोक्षोऽक्षेपेण लभ्यते ।

तथा शुद्धमनःपात्र—वित्तचितावपि ( वित्तयोगे अपि ) ध्रुवम् ॥ १ ॥

॥ इत्यब्ददिनपरिमितहितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रंथस्य वृत्तौ एकादशस्तंभे शताधिकत्रिषष्टितमं व्याख्यानम् ॥ १६३ ॥

## ॥ शतोत्तरचतुःषष्टितमं व्याख्यानम् ॥ १६४ ॥

अथ दानं वर्ण्यते—

पश्य संगमको नाम, संपदं वत्सपालकः । चमत्कारकरीं प्राप, मुनिदानप्रभावतः ॥ १ ॥

स्पष्टः । ज्ञातं त्विदं—

राजगृहासन्नशालिग्रामे धन्या नाम स्त्री । तस्याः सुतः संगमनामा । ग्रामलोकानां गोकुलान्यचारयन्न-

मावर्भकः पर्वदिने गृहे गृहे क्षीरं भुज्यमानमपश्यत् । सोऽपि बालो गृहे गत्वा जननीपार्श्वे पायसं ययाचे । सा जगाद—'भोः पुत्र ! मद्गृहे पायसं नास्ति,' पुनः पुनर्याचमानं वीक्ष्य सा रुरोद । तां रुदतीं प्रेक्ष्य प्रातिवेश्मिकनार्यो दुःखहेतुं पप्रच्छुः । तया स्वस्वरूपमभ्यधीयत । तच्छ्रुत्वानुकंपातस्ता नार्यो दुग्धादिसर्वं तस्यै ददुः । सा क्षीरं निष्पाद्य स्थालं भृत्वा संगमस्यार्पयित्वा केनचित्कार्येण गृहांतरं गता । तदा सोऽर्भकश्चिन्तयति—'अस्मिन्नवसरे कश्चित्साधुः समभ्येति, तस्यादं दत्त्वा शेषान्नं भुंजे तदा वरं' । तावता कश्चित्साधुर्मासमुपोषितस्तस्य गृहे समागात् । सोऽपि मुनिं वर्णयन् सोल्लासेन परमान्नभृतं स्थालं समुत्पाट्य 'निस्तीर्णोऽस्मि' इति बुद्ध्या साधवे सर्वं ददौ । करुणापरो मुनिस्तदन्नं संगृह्य पारणमकरोत् । ततः सा समागता । मुनेरागमस्वरूपमज्ञातवती 'भुक्तमनेन' इति मत्वा पुनः पायसं ददौ । सोऽपि पायसमाकंठं बुभुजे, परं तस्य तदन्नं यामिन्यां न जीर्णं, विसूचिकातो व्यपद्यत । साधुदानप्रभावेण राजगृहे गोभद्रश्रेष्ठिनो भार्याया उदरे उदभूत् । ततः सा शालिक्षेत्रं सुनिष्पन्नं स्वप्नेऽपश्यत् । पूर्णकाले पुत्ररत्नमसूत । स्वप्नानुसारेण तस्य सूनोः पितरौ 'शालिभद्रः' इत्यभिधां चक्रतुः । स पंचभिर्धात्रीभिः पाल्यमानः कल्पशाखीव ववृधे । क्रमेण पित्रा कला अध्यापितः । यौवनोन्मुखो जातस्तदा गोभद्रस्तत्पुरश्रेष्ठिनः शालिभद्रेण सार्धं द्वात्रिंशत्कन्यका महामहेन पर्यणाययत् । ततः स शालिभद्रो दिव्यवधूभिः समं देवेंद्र इव विलासिनीविलासमग्नो रात्रिदिवसयोरंतरं न विवेद । तत एकदा महावीरधर्मदेशनां श्रुत्वा संजातवैराग्यो गोभद्रो वीरपादमूले व्रतं गृहीत्वाऽनशनेन दिवं प्राप । अवधिज्ञानतो गोभद्रश्रेष्ठिदेवस्तत्पुण्याव-

जितः पुत्रवात्सल्यतत्परोऽनुवासरं कल्पशाखीव दिव्यानि वस्त्रालंकारसुगंधादीनि सभार्यस्य शालिभद्रस्यार्प्पयामास । गृहोचितकार्यं सर्वं भद्रा करोति । शालिभद्रः केवलं भोगसुखमनुभवति ।

अन्यदा केचन वणिजो रत्नकंबलान् विक्रयार्थं श्रेणिकायादर्शयन् । स नृपो महार्घत्वान्नाग्रहीत् । ततस्ते वणिजः शालिभद्रौकसि जग्मुः । तांस्तदुक्तार्घेन भद्राऽग्रहीत् । एतद्वृत्तांतं ज्ञात्वा चेल्लणा श्रेणिकपार्श्वे रत्नकंबलं ययाचे । ततो नृपेण वणिजां पार्श्वे एकः कंबलो मूल्येन मार्गितः । तैरुक्तं—'ते सर्वेऽपि भद्रया गृहीताः' । तच्छ्रुत्वा नृप एकं नरं मूल्येन रत्नकंबलग्रहणाय भद्रापार्श्वे प्राहिणोत् । तेन गत्वा भद्रापार्श्वे स मार्गितः । भद्रोचे—'भो भद्र ! तेषां द्वात्रिंशत्खंडानि कृत्वा मम पुत्रस्त्रीभिः पादप्रोंछनीकृत्य त्यक्तानि, यदि तेन कार्यं भवति, तदा त्वं राजानं पृष्ट्वाऽमूनि गृहाण' । तेन गत्वा राज्ञोऽग्रे विज्ञप्तं । तच्छ्रुत्वा राज्ञा चिंतितं—'तस्याकृतिं पश्यामि' । ततो राज्ञा तन्मातरं समाकार्य पृष्टं (प्रोक्तं)—'भो भद्रे ! तव पुत्रं दर्शय' । तयोक्तं—'राजेंद्र ! ममात्मजो नवनीतवन्मृदुत्वात् कदापि बहिर्न याति, गृहे एव क्रीडति, अतो हे देव ! गृहे आगत्य ममानुग्रहः क्रियतां' । नृपोऽपि तां वाचं प्रत्यपद्यत । ततोऽन्यदा स शालिभद्रगृहं ययौ । विस्मयस्मेरलोचनो नृपस्तद्वेश्म विवेश, क्रमेणैकां भूमिमारुह्य यावच्चतुर्थीं भूमिं गत्वा सिंहासने उपाविशत् । ततो भद्रा सप्तम्यां भुवि पुत्रांतिके गत्वैवमवोचत्—'हे पुत्र ! श्रेणिक इहागतोऽस्ति, त्वमागत्य तं विलोकय' । ततः शालिभद्रः 'श्रेणिकनामकं किंचिद्वस्तु भावि' इति मत्वा मातरमुवाच—'मातः ! त्वमेव यथोक्तं मूल्यं दत्वा गृहकोणे स्थापय' । भद्रोचे—'हे वत्स ! इदं

वस्तु क्रेतव्यं नास्ति, किंत्वावयोः स्वामी श्रेणिकराट्'। तच्छ्रुत्वेदमचिंतयत्—'यन्ममोपरि राजान्यो वर्त्तते, ततो धिक् संसारसुखानि' इति संवेगयुक्तोऽपि मातुरुपरोधतो भार्यासहितो राजानमभ्येत्य विनयेनानमत्। श्रेणिकस्तमंके निवेश्य सुखं पप्रच्छ। नृपांकसंस्थं बालमग्निसंयोगेन मदनपिंडमिव विलीयमानं दृष्ट्वा नृपं प्रति भद्रोचे—'देव! अयं मुच्यतां, मर्त्त्योऽपि मर्त्त्यमालानां गंधं न सहते, यतो दिव्यभूमिं गतेनास्य पित्रा प्रेषितवस्त्रनेपथ्यमाल्यादीनां भोक्तृत्वात्'। राज्ञा मुक्तः स सप्तमीं भूमिं ययौ। भद्रयाग्रहेण नृपो निमंत्रितः। ततः स्नानक्षणे गृहवाप्यां स्नानं कुर्वतो नृपस्य हस्तादंगुलीयकं वाप्यंभसि पपात। भूमीशस्तदितस्ततो यावदन्वेषयामास, तावद् भद्रा दासीं समादिशत्—'भो सखि! वाप्यंभो दूरीकृत्य राज्ञो मुद्रिकामर्प्पय'। दास्या तथैव कृते दिव्याभरणमध्यगं स्वांगुलीयकमंगारमिवालोक्य 'किमेतत्' इति राज्ञोक्ता दास्यवोचत्—'प्रभो! निर्माल्यमिदं प्रत्यहं सभार्यस्यास्यात्र तन्निक्षिप्यते'। 'अहमपि भूपेषु धन्यो यस्य राज्ये ईदृशाः संति'। ततस्तत्र सपरिच्छदो भूमीशो बुभुजे। भद्रया वस्त्रादिभिः सत्कृतः स सौधमुपाययौ। अनित्यसौख्येषु विरागिणः शालिभद्रस्य धर्मसुहृदेत्य विज्ञप्तं—'हे मित्र! अत्र पुरे चतुर्ज्ञानधरो धर्मघोषनामा मुनीश्वरः समागतः' औत्सुक्येन शालिभद्रो गुर्वंतिके गत्वा नमस्कृत्य यथावग्रहं स्थितो मुनिराजधर्मदेशनां शुश्राव। यतः—

"ज्ञानविज्ञानलावण्य-रूपवर्णवपुर्बलम्। क्षीयमाणं खलस्नेह, इव याति दिने दिने" ॥ १ ॥

देशनां श्रुत्वा स ज्ञानिनमपृच्छत्—'भगवन्! केन कर्मणा प्रभुरन्यो न जायते?' गुरुर्व्याजहार—

'भद्र ! अयं ( जीवः ) जिनदीक्षाप्रभावतोऽन्यजन्मन्यशेषस्याऽपि जगतः स्वामित्वं भजति' । 'यद्येवं तर्हि प्रभो ! गृहे गत्वा मातरमापृच्छ्य त्वदंतिकेऽहमपि व्रतं प्रपत्स्ये' । 'त्वया न प्रमादवता भाव्यं' इति सुशिक्षितः स्वसदनं गत्वा भद्रां व्यजिज्ञपत्—'हे मातः ! अद्य मया धर्मघोषगुरोर्मुखादनादिदुःखविमोचकः परमानंदस्वभावसौख्यदो जिनधर्मः श्रुतः स एव सारतरः, ततस्तवाज्ञया प्रव्रज्यां ग्रहीष्यामि' । साऽप्यवादीत्—'वत्स ! तव व्रतवासना युक्ता, परं केशलुंचनभूमिशयनमष्टचत्वारिंशद्दोषविरहिताशनपंचमहाव्रतभारसहादिक्रियाः कर्त्तुं त्वं कथं समर्थो भवसि ?' स उवाच—'हे मातः ! सुरमणितुल्यं चारित्ररत्नं प्राप्याज्ञा एव काकोड्डायनाय त्यजंति' । इति पुत्रसामर्थ्यं ज्ञात्वा पुनर्भद्रा बभाषे—'हे वत्स ! तर्हि शनैः शनैर्माहृत्यस्त्रीभोगान् विमुंच, तेन व्रताभ्यासो जायते'। मातुरादेशं श्रुत्वा प्रविव्रजिषुः स प्रत्यहं ( एकां ) सस्त्रीकां पुष्पशय्यामत्यजत् ।

इतश्च तत्रैव पुरे शोभनिको धन्यनामा शालिभद्रकनिष्ठभगिनीपतिर्वर्त्तते । शालिभद्रस्वसा साश्रुः पतिं स्नपयति । पत्योक्तं—'शुभे ! किं रोदिषि ?' । सगद्गदं सा जगौ—'व्रतमादित्सुर्मे भ्राता दिने दिने सतूलिकामेकां भार्यां मुंचति, तन्मे दुःखकारणं' । धन्येनोक्तं—'तव भ्राता हीनसत्त्वो फेरुरिव भीरुः, यतः समंतात्सर्वं वैभवं न त्यजति' इति श्रुत्वा सा स्वामिनं प्राह—'हे नाथ ! व्रतं चेत् सुकरं, त्वया किं नाद्रियते ?' एवं सहासमन्याभिर्भार्याभिरपि जगदे । धन्यः प्राह—'पुण्येन भवतीभिरनुमतोऽहमतो द्रुतं व्रतं ग्रहीष्यामि' । ता अप्यूचुः—'नाथ ! इदमस्माभिर्नर्मणोदितं, माऽस्माँस्त्याक्षीः' । सोऽव-

दत्—'स्त्रीधनाद्यनित्यं त्यक्त्वा इमामेव श्रयिष्यामि' । ताः प्राहुः—'प्रिय ! वयमपि प्रव्रजिष्यामहे' । धन्येनापि तद्वचः स्वीकृतं ।

अथ तदा वैभारभूधरे श्रीवीरं समवसृतं ज्ञात्वा धन्यः सभार्यो जगद्गुर्वंतिके दीक्षां जग्राह । तच्छ्रुत्वा शालिभद्रोऽपि परमात्मचरणमभ्येत्य भवाद्भिया व्रतमग्रहीत् । ततस्तौ धन्यशालिभद्रौ साधूपांते पठंतौ बहुश्रुतौ जातौ । एकद्वित्रिचतुर्मासक्षपणानि प्रकुर्वतोस्तयोर्वपुर्निर्मांसरुधिरांगकत्वं प्रतिपेदे । अन्येद्युस्त्रिभुवनभास्करेण सह विहरंतौ राजगृहपुरे आजग्मतुः । मासक्षपणपारणके भिक्षार्थं गंतुकामौ मुनीस्वामिनं नेमतुः । ईश्वरेणोक्तं—'मातृहस्तेन तवाद्य पारणं भविष्यति' 'इच्छामि' इति भणन्शालिभद्रो धन्ययुतो भद्रागृहांतरे तस्थौ । तपःक्षामतया केनापि नोपलक्षितौ । भद्रापि श्रीवीरधन्यशालिभद्रान् वंदितुं गंतुकामा व्याकुला तौ नाज्ञासीत् । तत्र क्षणं स्थित्वा पुरस्य गोपुरांतिके ईयतुः । तदा पुरस्यांतर्दधि विक्रेतुं यांती शालिभद्रस्य प्राग्जन्ममाता धन्या पुरोऽभवत् । तं प्रेक्ष्य संजातप्रश्रवस्तनी वंदित्वा द्वाभ्यामपि दधि ददौ । तौ वीरांतिके गत्वाऽऽलोच्य शालिभद्रो जगौ—'स्वामिन् ! मातुः पाणिना पारणं किं नाभवत् ?' । सर्वज्ञस्तस्मै पूर्वभवमातृप्रबंधं न्यवेदयत् । द्वावपि पारणं कृत्वा प्रभुमापृच्छ्य विरागिणौ वैभारमूर्धनि तौ शिलातलं प्रतिलिख्य पादपोपगमनमनशनमाश्रयतां । तदा भद्रा श्रेणिकश्च जगदीशस्य वंदनाय जग्मतुः । भद्रा प्रभुं प्रणम्यापृच्छत्—ईश ! क्व गतौ मुनी ? भिक्षाकृते मद्गृहे कथं नागतौ ?' । प्रभुर्जगौ—'त्वया नोपलक्षितौ तौ प्राग्भवमातृदत्ताहारं कृत्वा इह गिराावनशनं चक्रतुः' ।

तत्र श्रेणिकेन सह सा एत्य तौ निश्चलौ वीक्ष्य प्राह—'हे पुत्र ! मया गृहे एतौ न ज्ञातः, धिग्मां' इति विलपंती राज्ञा बोधिता तावुभौ सर्वार्थसिद्धे प्रययतुः, ततो मोक्षं यास्यतः—

तद्दानसौभाग्यमहो स्तवीमि, वशीकृता येन यथा तथा सा ।
स्वर्भोगलक्ष्मीरभिसारिकेव, भेजे नृजन्मन्यपि शालिभद्रम् ॥ १ ॥

॥ इत्यब्ददिनपरिमितहितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रंथस्य वृत्तौ एकादशस्तंभे शताधिकचतुष्षष्टितमं व्याख्यानम् ॥ १६४ ॥



## ॥ शताधिकपंचषष्टितमं व्याख्यानम् ॥ १६५ ॥

अथ तद्व्रतस्यातिचारानाह—

सचित्ते क्षेपणं तेन, पिधानं काललंघनम् । मत्सरोऽन्यापदेशश्च, तुर्यशिक्षाव्रते स्मृताः ॥ १ ॥

सचित्ते सजीवे पृथ्व्यादौ देयस्यान्नपानादेरदानबुद्ध्या अनाभोगसहसाकारादिना वा क्षेपणं निक्षेपः प्रथमोऽतिचारः । १ । तथा तेन सचित्तेन सूरणकंदपत्रपुष्पफलादिना अदानबुद्ध्या पिधत्ते सचित्तेनेति । २ । तथा कालस्य हि साधूनामुचितसमयस्य लंघनमतिक्रमः, अयमर्थ उचितो यो भिक्षाकालः साधूनां, तं लंघयित्वा अनागतं वा भुंक्ते पौषधव्रती इति तृतीयः । ३ । तथा मत्सरः कोपः, यथा मार्गितः सन्

कुप्यति, सदपि मार्गितं न ददाति । अथवा 'अनेन द्रमकेण दानं दत्तं, अहं ततोऽपि हीनः ?' इति मात्सर्याद्ददाति । अत्र परोन्नतिवैमनस्यं मात्सर्यमिति । ४ । तथा 'अन्यस्य परस्य संबन्धीदं गुडखण्डादि' इति व्यपदेशो व्याजोऽन्यापदेशः । यदनेकार्थसंग्रहे—'अपदेशस्तु कारणे व्याजे लक्ष्ये' इति पञ्चमः ।५। इति पञ्चातिचारास्तुर्यशिक्षाव्रते स्मृताः । अनाभोगादिनाऽतिचाराः, अन्यथा तु भंगः । अत्र सातिचारदानविषये चम्पकश्रेष्ठिज्ञातं तच्चेदं—

धन्यपुरे चम्पकश्रेष्ठी चतुष्पर्वणि पौषधपारणे प्रत्यहं अतिथिसंविभागं करोति । संपूर्णपौषधं पारयित्वा गुरूणां विज्ञपयति—'स्वामिन् ! मद्गृहे अशनपानादीनां लाभो देयः' ततः स्वगृहे आत्मार्थं अशनादिकं निष्पादयति । पश्चात्काले प्राप्ते प्रतिश्रयं गत्वा साधून्निमंत्रयति । ततः साधुरपि द्वितीयसाधुना सह श्रावकेण सह गच्छति । एको न युज्यते विहरणार्थं गंतुं । ततोऽसौ गृहं नीत्वा अचित्तनिर्दोषाशनपानादि वस्त्रकंबलौषधादिकं च विनयेन ददाति, साधुरपि स्वल्पं गृह्णाति पश्चात्पाकाद्यारम्भभीत्या । ततो वन्दित्वा विसर्जयति, अनुगच्छति च कतिचित्पदानि । ततः स्वयं भुंक्ते, यच्च साधुभ्यो न दत्तं तच्छ्रावकेण न भोक्तव्यं । यदि पुनस्तत्र ग्रामादौ साधवो न भवंति, तदा भोजनवेलायां द्वारावलोकनं करोति, चिंतयति च—'यदि साधवोऽभविष्यंस्तदा निस्तारितोऽहमभविष्यं' । पौषधपारणके(ऽयं) विधिः । अनेन प्रकारेण स श्राद्धो दानं ददाति । एकदा भिक्षार्थं भ्रमंतं मुनिं वीक्ष्याकार्यं हृष्टो घृतं दातुमुद्यतः,

१ भृत्यादिभ्यः कुप्यतीति शेषम् .

मुनिपात्रेऽखंडधारया यच्छन् भावेनानुत्तरगतिमार्जयत्, मुनिस्तस्य लाभदर्शनान्न निषेधयति, यावन्मुनिर्न विरमति, तावन्मनस्येवं दध्यौ—'अहो ! लोभी मुनिरेकाकी किं करिष्यति एतावता घृतेन ?" इति ध्यायन् येन क्रमेण देवलोकमार्जयत्तेनैव निपतन्नेवं ज्ञानिनोक्तः—'इयदूर्ध्वं गत्वा मुग्ध मा पत मा पत'। सोऽवक् 'नन्विहास्म्यहं किमसंबद्धमुच्यते ?'। ततो मुनिः पात्रमाकृष्य तं द्वादशस्वर्गे संस्थाप्यावक्—'हे श्राद्ध ! दानफलं विकल्पेन दूषितं, अतो निर्विकल्पं दानं देयं, लोकेऽपि शकुनस्वप्नफलं विकल्पाद्बुध्यते'। ततः स श्राद्धः स्वपापमालोच्यांतिमकल्पे गतः।

सातिचारेण यद्दानं, तद्दानं स्वल्पसौख्यदम्। मत्वेति विधिना श्राद्धै-र्वितीर्यं भावधार्मिकैः ॥ १ ॥

इत्युपदेशप्रासाद-टीकेयं लिखिता मया। पंचदशभिरश्रान्तैः, स्तंभश्चैकादशः स्तुतः ॥ १ ॥

अब्दाहर्मितज्ञातेषु, शताग्रं पंचषष्टितमम्। प्रेमादिविजयादीनां, नित्यं व्याख्यानहेतवे ॥ १ ॥

॥ इत्यब्ददिनपरिमितहितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रंथस्य वृत्तौ एकादशस्तंभे शताधिकपञ्चषष्टितमं व्याख्यानम् ॥ १६५ ॥

## समाप्तोऽयमेकादशः स्तंभः

# ॥ अथ द्वादशः स्तंभः ॥

## ॥ शताधिकषट्षष्टितमं व्याख्यानम् ॥ १६६ ॥

अथ गृहिणां भोजनविधिमाह—

भुक्तिकाले गृहस्थेन, द्वारं नैव पिधीयते । बालादीन् भोजयित्वा तु, शस्यते भोजनं सदा ॥ १ ॥

भुक्तिकाले भोजनावसरे द्वारं न पिधातव्यं गृहिणा, यतः—'तत् पिहितं दृष्ट्वा द्रमकादयो निराशाः पश्चाद् व्रजंति' । आगमेऽप्युक्तं—

"नेव दारं पिहावेइ, भुंजमाणो सुसावओ । अणुकंपा जिणिंदेहिं, सड्ढाणं नत्थि निवारिआ" ॥ १ ॥

तथा श्रीपंचमांगे तुंगिकगिरिश्राद्धवर्णने—'अव्भंगुअडुवारा' इति विशेषणेन भिक्षुकादिप्रवेशार्थं सर्वदाप्यपावृतद्वारा इत्युक्तं । भिक्षुकान्निराशान्न प्रत्यावर्त्तयति न कारयति च धर्मगर्हां । भुक्तिकाले द्वारपिधानादि न हि महतां लक्षणं । दीनोद्धारश्च सांवत्सरिकदानेन जिनैरप्याचीर्णः । विक्रमात्त्रयोदशशतेभ्योऽनु पंचदशेऽब्दे महादुर्भिक्षे भद्रेश्वरपुरवासी श्रीमालिसाधुजगडूर्द्वादशोत्तरशतसत्रागारैर्दानं ददौ । तथा—

“हम्मीरस्य द्वादश, वीसलदेवस्य चाष्ट दुर्भिक्षे । त्रिः सप्त सुरत्राणस्य मूढकसहस्राण्यदाज्जगडुः ॥ १ ॥
दयादानं भोजनसमये विशिष्य कार्यं समृद्धेन, निःस्वेन यथाशक्ति दानं देयं, यतः—
“कुक्षिंभरिर्न कस्कोऽत्र, बह्वाधारः पुमान् पुमान् ।
ततस्तत्कालमायातान्, भोजयेद् बांधवादिकान्” ॥ १ ॥
श्रूयते हि—
चित्रकूटे चित्रांगदो नृपः । शत्रुसैन्यैर्दुर्गे वेष्टितेऽपि तत्प्रवेशभयोद्रेके भोजनसमये गोपुरं प्रत्यहमुद्घाटयामासेति । बालादीन् भोजयित्वा तु आदिशब्दाद् बालग्लानवृद्धमातृपितृस्नुषाभृत्यादीनां गवादीनां च भोजनाद्युचितचिंतां कृत्वा नमस्कारनियमस्मृतिपूर्वं पश्चाद् भुज्यते । भोजनकालो नोल्लंघ्यः, यतः—
“याममध्ये न भोक्तव्यं, यामयुग्मं न लंघयेत् । याममध्ये रसोत्पत्ति–र्यामयुग्मे बलक्षयः” ॥ १ ॥
तथा कालेऽपि स्वस्वऋतुयोग्याहारः कार्यः, यतः—
“शरदि यज्जलं पीतं यद्भुक्तं पौषमाघयोः । ज्येष्ठाषाढे च यत्सुप्तं, तेन जीवंति मानवाः” ॥ १ ॥
तथा च—
“वर्षासु लवणममृतं, शरदि जलं गोपयश्च हेमंते । शिशिरे चामलकरसो, घृतं वसंते गुरुश्च ग्रीष्मांते” ॥१॥
सर्वं भोजनं लौल्यपरिहारेण कर्त्तव्यं । यतः—
“क्षणमात्रसुखस्यार्थे, लौल्यं कुर्वंति नो बुधाः । कंठनालीमतिक्रांतं, सर्वं तदशनं समम्” ॥ १ ॥

अधिकभोजने त्वजीर्णवमनविरेचनादि सुलभं । यतः—

"जीहे जाणइ पमाणं, जिमिअवे तहय जंपिअवे य ।
अइजिमिअजंपियाणं, परिणामो दारुणो होइ" ॥ १ ॥

अन्यच्च—

"हितमितविपक्वभोजी, वामशयी नित्यचंक्रमणशीलः ।
उज्झितमूत्रपुरीषः, स्त्रीषु जितात्मा जयति रोगान्" ॥ १ ॥

तथा साकाशे सातपे अंधकारस्थले वृक्षाधोभागे श्मशाने स्वासने[1] स्थिते च तर्जनीमूर्ध्वीकृत्य वामनासिकां वहन् केवलभूस्थितः उपानत्सहितश्च पुनरुष्णीकृतं भोजनं कदापि नाश्नीयात् । तथा जिनदत्तसूरिकृतग्रंथे त्वेवमुक्तं—

"एकवस्त्रान्वितश्चार्द्र—वासा वेष्टितमस्तकः । अपवित्रोऽतिगार्ध्यश्च, न भुंजीत विचक्षणः ॥ १ ॥
अमेध्यसंभवं नाद्याद्, दृष्टं भ्रूणादिघातकैः । रजस्वलापरिस्पृष्ट—माघ्रातं गोश्वपक्षिभिः ॥ २ ॥
भोजनादौ विषतुल्यं, भोजनांते शिलोपमम् । मध्ये पीयूषसादृश्यं, वारिपानं भवेदहो ॥ ३ ॥
भोजनानन्तरं सर्व—रसलिप्तेन पाणिना । एकः प्रतिदिनं पेयो, जलस्य चुलुकोऽगिना ॥ ४ ॥
करेण सलिलार्द्रेण, न गंडौ नापरं करम् । नेक्षणे च स्पृशेत् किंतु, स्पृष्टव्ये जानुनी श्रिये ॥ ५ ॥

1 मञ्चकोपरि.

भोजनानंतरं वाम-कटीस्थो घटिकाद्वयम् । शयीत निद्रया हीनो, यद्वा पदशतं व्रजेत् ॥ ६ ॥

अन्यच्च—

"आग्नेयं नैर्ऋतं भुंक्ते, दक्षिणां वर्जयेद्दिशम् । संध्याग्रहणकालं च, स्वजनादेः शवं स्थितं" ॥ ७ ॥

"भोजने मैथुने स्नाने, वमने दंतधावने । विकुत्सर्गे[1] निरोधे च मौनं कुर्यान्महामतिः ॥ ८ ॥

भोजनानंतरं नमस्कारस्मरणेनोत्तिष्ठेत् । इत्यादिविधिना सदा भोजनं शस्यते ।

विधिनैवं विशुद्धात्मा, विदधीत सुभोजनम् । गृहिधर्मार्हतमात्म-न्यारोपयति सत्तमः ॥ १ ॥

॥ इत्यब्ददिनपरिमितहितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रंथस्य वृत्तौ द्वादशस्तंभे शताधिकषट्षष्टितमं व्याख्यानम् ॥ १६६ ॥

## ॥ शतोत्तरसप्तषष्टितमं व्याख्यानम् ॥ १६७ ॥

अथ दानं स्तूयते

पूर्वकर्मादिभिर्दोषै-र्मुक्तं कल्प्यं शुभाशनम् ।
साधूनां पात्रसात्कृत्य, भोक्तव्यं कृतपुण्यवत् ॥ १ ॥

१ मूत्रोत्सर्गे.

स्पष्टः । संबंधस्त्वयं—

राजगृहनगरे श्रेणिकनृपोऽस्ति । तत्र धनेश्वरः सार्थपतिर्वसति, तस्य सुभद्रानाम्नी प्रियास्ति । तयोः पुत्रः कृतपुण्यनामा, तस्य पितृभ्यां धन्यानाम्नी इभ्यपुत्री परिणायिता, परं यौवनेऽपि सतां संयोगाद्विषयेषु विमुखं तं विज्ञाय पितृभ्यां चिंतितं—'कदाचिदेष प्रव्रज्यां ग्रहीष्यति, तदाऽस्माकं का गतिः ?' इति विचिंत्य तं ललितगोष्ठिमध्ये निचिक्षिपतुः । विटनरसंगात्स व्यसनी जातः, वेश्यासक्तः सन् पितरौ न स्मरति । भोगार्थं पितरौ धनं प्रेषयतः स्म । तत्र तिष्ठतस्तस्य द्वादशाब्दानि क्षणवद् गतानि । मातापित्रादिभिराहूतोऽपि नागतः । धनं प्रेषयतोस्तयोर्धनं निष्ठितं । अथाकस्मात्तीव्रज्वरादिना तौ निमीलनं जग्मतुः । अन्येद्युः कुट्टिन्यादेशेन धनार्थं चेटी तस्यौकसि गता । तादृशे शटितपतिते गृहे संस्थितामनुमानेन तत्पत्नीं विज्ञाय प्राह—'कल्याणि कांते ! तवोपान्ते तेन धनार्थं प्रेषितास्मि' । सा जगौ—'अहं मंदभाग्या कुतो धनं प्रेषयामि ? श्वश्रूश्वशुरौ दिवं गतौ, अधुना मत्पित्रार्पितेनैकेनाभरणेन मत्कांतं प्रमोदय' । तद्भूषणमादाय तस्यै गृहस्वरूपमुक्त्वाऽर्पितं, तेन वेश्यायै तद्दत्तं । कुट्टिन्या स निःस्वो मत्वाऽपमानितः । ततोऽक्कादेशाद् भृत्यजनस्तस्याभिमुखं रजःप्रक्षेपादि कुरुते । तदानीमनंगसेना मातुरग्रे जजल्प—'हे मातः ! अस्य बहु धनमावाभ्यां भक्षितं, कथमधुनैवंविधा विडंबना क्रियते?' । अक्का जगौ—'आत्मनः कुलाचार एवंविधोऽस्ति' । तद्वार्त्तां श्रुत्वा विमनस्कः स्वगृहं ययौ । दूरतोऽपि कांतमागच्छंतं वीक्ष्य साऽभ्युत्थानासनोपवेशनाद्युचितं चकार । ततः कांतस्य स्वगृहवृत्तांतः प्रियया प्रोक्तः । तच्छ्रुत्वा

सोऽचिंतयत्—'धिग्मम जीवितं, यन्मया पितरौ दुःखार्णवे क्षिप्तौ, पूर्वसंचितधनं निधनमानीतं' इति पश्चात्तापपरः स तया संतोषितः—यद्भावि तद्भवति, यतः—

"गते शोको न कर्त्तव्यो, भविष्यन्नैव चिंतयेत् । वर्त्तमानेन कालेन, प्रवर्त्तंते विचक्षणाः" ॥ १ ॥

इत्यादि प्रियावचः श्रुत्वा स्वस्थः सन् पत्न्या दत्तद्रव्येण व्यापारं करोति । क्रमात्सुरतसौख्येन पत्न्याः पुत्रो जातः । अन्यदा लोकमुखेभ्यः—'धनेश्वरात्मजेन कुलं कलंकितं धनं च वेश्यासंगेन गर्त्तायां नीतं, न किमपि सुकृताय जातं' इति श्रुत्वा प्रियां प्रत्याह—'अहं वाणिज्याय संप्रत्यत्रागतामुकसार्थवाहेन सार्द्धं अनेकजनपदावलोकनाय धनार्थं च यामि' । तया कुलयोषितोक्तं—'स्वामिन् ! तवेदं युक्तं' । ततः स किंचित्क्रयाणकं लात्वा तस्मिन्सार्थे क्वचिद्देवकुले खट्वायां शंबलमोदकयुतः पत्न्या शायितः, ततो निवृत्ता सा ।

इतश्च तन्नगरे धनदेभ्यस्य चतस्रो वध्वः संति, रूपवत्याख्या जनन्यस्ति । अन्यदा स धनदः सहसा तीव्रव्याधिना विपन्नः । ततस्तया रूपवत्या वधूराकार्य प्रोक्तं—'यदि युष्माकं पतिमपुत्रकं राजा श्रोष्यति, तदा श्रियो ग्रहीष्यति, तेन भवतीभिर्न रोदितव्यं, असौ प्रच्छन्नभूमौ क्षेप्यः, तावदन्यः सेव्यो यावद् भवतीनां पुत्रा भवंति' । ताभिस्तथैव कृतं । ततः कुलदेवीवचनेन श्वश्रूयुक्ताभिर्वधूभिर्देवकुलसुप्तस्तत्प्रवस्थः स गृहे आनीतस्तावता जागरितः, तस्य कंठमालंब्य सा स्थविरा रुदंत्येवं जगौ—'हे वत्स ! निज

मातरं विहाय बहुदिवसान् यावत् क स्थितः, इदानीं तव ज्येष्ठबंधुर्विपन्नः, अतः परं पुत्र ! त्वयाऽन्यत्र न गंतव्यं, स्वेच्छया बंधुवधूभिः सह त्वं भोगान् भुंक्ष्व'। स दध्यौ—'यद्भावि तद्भवतु, सांप्रतं स्वर्गसुखमुपस्थितं'। एवं ध्यात्वा जगौ—'मातर्मम सर्वं विस्मृतं, अधुना पुण्येन मम मातुर्दर्शनं जातं, मातर्मया तवादेशः शिरस्यन्वहं धृतः'। ततस्ताभिः प्रियाभिः सह सुरतसुखमनुभवतो द्वादश वत्सरा गताः। क्रमेण चतसृणां पुत्रा जाताः। एकदा वृद्धया तासां प्रोक्तं—'युष्माकं चत्वारः सुता बभूवुः, अथामुं यतः स्थानादानीतस्तत्रैव मुच्यतां, पुरुषस्य विश्वासो न युक्तः'। वधूभिरनिष्टमपि तद्भयेन प्रतिपन्नं। ताभिस्तामेव रात्रौ सज्जीकृत्य शायितः, स्नेहतो रत्नानि मध्ये क्षिप्त्वा मोदकाश्चत्वारस्तदंचले बद्धाः। ततस्तस्मिन्नेव दिने स्थाने च स एव सार्थपोऽवततार। तमागतं विज्ञाय पूर्वप्रियया तत्रागत्य विलोकितं, पूर्वरूपेण सुप्तः पतिर्दृष्टस्तावता जागरितः सपुत्रां स्वपत्नीं ददर्श, सोऽचिंतयच्च—'स्वप्नवत्किमिदमहो महदाश्चर्यं ! देवेन मनुष्येण वाऽत्र मुक्तः'। ततः पत्नीवाक्येन स्वगृहे समागतः। तया प्रोक्तं—'परदेशे गत्वा किमुपार्जितं ?' लज्जितः स मौनं दधौ। ततः पुत्राय स मोदको दत्तः। तेन लेखशालायां गत्वा भक्षितः, तन्मध्याद्रत्नं निर्गतं, केनचित्कांदविकेन तज्जलकांतं शिशोर्हस्ते दृष्टं, स्वादिमेन तं विप्रतार्य गृहीत्वा गुप्तीकृतं। कृतपुण्योऽपि स्वमोदकतो रत्ननिर्गमनेन सहर्षो बभूव।

अथैकस्मिन्दिने श्रेणिकस्य सेचनको हस्ती गंगामध्ये जलं पिबंस्तंतुजीवेन गृहीतः। सेवकमुखेन तद्वार्त्तां ज्ञात्वा नृपेणाभयाय प्रोक्तं। तेन बुद्धिमता कोशागारे जलकांतो विलोकितोऽपि न लब्धः, तदा

पुरे पटहो दापितः—'यः कश्चिज्जलकांतमणिमानेष्यति, तस्मै राज्यार्द्धयुतां स्वपुत्रीं राजा दास्यति'। तदा कांदविकेन पटहं गृहीत्वा मणिर्नृपाय दत्तः। स जलकांतो गजपार्श्वे मुक्तः, तेन तज्जलं द्विधाभूतं, तंतुजीवो नष्टः, सेचनकारूढो नृपः स्वगृहमागत्याभयं रहस्यवक्—'आत्मनः पुत्री कांदविकस्य कथं दास्यते ?'। सोऽवक्—'यस्येदं रत्नं, तं नरं प्रकटीकरिष्यामि'। ततो मंत्रिणा पृष्टं—'भोः कांदविक ! सत्यं ब्रूहि, क्वेदं रत्नं लब्धं, अन्यथा कंबादिना निमीलनमवाप्स्यसि'। तदा भयेन मूलतो वृत्तांतः प्रोक्तस्तेन। ततो राज्ञा कृतपुण्याय राज्यार्द्धसहिता मनोरमा कन्या दत्ता। किंचिद्दत्वा कांदविकोऽपि सन्मानितः। अथैकदा कृतपुण्येनाभयाय द्वादशाब्दिकं ज्ञातं प्रोक्तं—'अत्र पुरे मम चतुःपुत्रयुताश्चतस्रः पत्न्यो वर्तंते, ता दृष्टोपलक्षयामि, परं गृहं न वेद्मि'। तेनोक्तं—'प्रकटं करिष्यामि'। अथामात्यः प्रवेशनिर्गमार्थं द्वारद्वययुक्तः प्रासादोऽचीकरत्। मध्ये कृतपुण्याकृतिर्लेप्यमयी यक्षप्रतिमा स्थापिता। ततः स नगरे पटहं वादयामास—'एनं यक्षं नमस्कर्तुं पुत्रादियुताभिः स्त्रीभिरागंतव्यं'। तदानीं सर्वा नगरनार्यः स्वापत्ययुता यक्षं प्रणम्य द्वितीयद्वारेण निर्यांति। इतश्च सा वृद्धा चतुर्वधूचतुःपुत्रयुता नंतुमागात्। तदा स तामुपलक्ष्याभयायोक्तवान्। तावता ते चत्वारः पुत्रा यक्षाकृतिं दृष्ट्वा 'तात तात' इति जल्पंतः कश्चिद्यक्षोदरे विलग्नः कश्चिच्छ्मश्रुणि। तदा तेनोक्तं—'अमी तव पुत्रा एतास्तव पत्न्यः'। ततो मंत्रिणा तस्या गृहे गत्वा सर्वं तस्मै दत्तं। ततोऽनंगसेनापि तत्राकारिता। एवं तस्य सप्त प्रिया बभूवुः।

॥१४३॥

अन्यदा श्रीवीरो जगद्बंधुः समवसृतः। कृतपुण्यः श्रीजगदीशं वंदितुं ययौ। सर्वज्ञधर्मदेशनांते कृतांजलिः स पप्रच्छ—'भगवन्! केन कर्मणान्तरांतरा संपत्तिर्विपच्चाभूत्'। जिनेश्वरः प्राह—'भोः कृतपुण्य! पूर्वभवं शृणु—"श्रीपुरे गोपपुत्रो निःस्वः। एकस्मिन् दिने गृहे गृहे परमान्नं वीक्ष्य स्वांबामयाचत—'मातः! मह्यं परमान्नं देहि'। तदभावेन रूदंतीमवलोक्य प्रातिवेश्मिकयोर्पितो दुग्धादिकं तस्यै ददुः। तया तन्निष्पादितं। तत्पुत्राय परिवेष्य कस्मैचित्कार्याय बहिर्ययौ। इतो मासिकपारणे मुनियुग्ममागतं, तद्दृष्ट्वाऽसौ उल्लासेन पायसस्यैकभागं ददौ। पुनः स्तोकतरं विज्ञाय द्वितीयभागं, ततस्तृतीयभागं, एवं त्रीन् वारान् ददौ। क्रमेण स वत्सपस्त्वमभूः। पुराभवे त्रिवारं विभज्य दानं ददौ, तेन तवांतरांतरा सुखमभूत्"। इति श्रुत्वा स जातिस्मृत्या दृष्टप्राच्यभवो ज्येष्ठपुत्राय गृहभारं दत्त्वा स्वयं प्रव्रजितः, महातपसा च पंचमस्वर्गे गतः, ततः शिवं गमिष्यति इति।

तूर्णं विलंबेन विना स्वशक्त्या, दानं प्रदेयं हि तपोधनेभ्यः।
यद्वत्सपालः कृतपुण्यजन्मन्यवाप संपत्पदवीं प्रदानात्॥ १॥

॥ इत्यब्ददिनपरिमितहितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रंथस्य वृत्तौ द्वादशस्तंभे शताधिकसप्तषष्टितमं व्याख्यानम्॥ १६७॥

॥ अष्टषष्ठ्यधिकशततमं व्याख्यानम् ॥ १६८ ॥

अथ भोजनकाले मुनीन्संस्मृत्य दानं देयमित्याह—

भोजनसमयेऽवश्यं, संस्मार्या मुनिसत्तमाः । ततो भोजनमश्नीयाद्, धनावहाख्यश्रेष्ठिवत् ॥ १ ॥

स्पष्टः । ज्ञातमिदं—

श्रीमत्प्रथमजिनजीवो धनावहसार्थपो बहुसार्थसहितो ग्रीष्मे प्रयाणमकरोत् । मार्गे महती वृष्टिः प्रादुर्भूता, पंकाकुला पृथ्वी जाता । तदा अटव्यंतः स्थितिं विरच्य सार्थेशः स्थितः । तेन सार्धं समागता धर्मघोषसूरयोऽपि तत्रैवार्हस्थले तस्थुः । तत्र सार्थजना वनमूलफलाशिनस्तापसतां भेजुः । एकदा भोजनकाले धनावहः सर्वेषां चिंतां कृत्वा भोजनं चकार, तावत्ते सूरयः स्मृतिपथमाययुः—"अहो ! धिग्मां, पंचदश दिना जाताः, परं मया साधवो न स्मृताः । इमे तु अप्रासुकं अपक्कमुद्दिश्य कृतं न भुंजंति, कथमेषां निर्वाहः ?" इति विचार्य सूरिपार्श्वे गत्वा सूरिं नत्वा प्राह—"स्वामिन् ! अद्य प्रसद्य निजान् मुनीन् प्रेषय" । सूरिस्तेन समं मुनिद्वयं प्रैषीत् । निर्दोषं प्राज्यमाज्यं मुदाऽदात् । सर्वैर्मुनिभिर्मासक्षपणपारणं कृतं । श्रेष्ठिना त्रयोदशे भवे तीर्थपदनिर्धारणं कृतं घृतदानेन । यतः—

"आयुर्घृतमिति प्राहु—र्नानृतं भिषजां वराः । स्वमायुः शाश्वतं येन, सुधीः संविदधे धनः" ॥ १ ॥

क्रमेण ततः सार्थस्वामी युगलिकः, ततः सौधर्मे, ततो महाबलखेटेन्द्रः, ततो ललितांगदेवः, ततो

वज्रजंघनृपः, भूयो युग्मिनरः, ततः प्रथमकल्पे, ततो विदेहे जीवानंदनामा वैद्यो जातः । तस्य चत्वारः सुहृदः । एकदा वैद्यगृहे उपविष्टैस्तैः कुष्ठी कश्चित्साधुर्दृष्टः । वैद्यं ते भणंति—'एतस्य मुनेश्चिकित्सां कुरु' । वैद्यो वक्ति—'मद्गृहे लक्षपाकतैलमस्ति, रत्नकंबलं गोशीर्षचंदनं यूयमानयत, यथास्य प्रतिक्रियते' । ते पंचापि एकस्य वणिजो हट्टं गता द्वे, वस्तुनी ययाचिरे । तेन मूल्यं विना सर्वं दत्तं । ततो वणिक् तद्भवे एव सिद्धिं गतः । पंचभिरपि संभूय मुनिः सज्जीकृतः । प्रथमं लक्षपाकतैलेन तस्यांगेऽभ्यंगो दत्तः, पश्चाद्रत्नकंबलेन तदंगं छादितं, कृमयस्तन्मध्ये आगताः । तदनु चंदनं लेपितं । एवं त्रिःकृतं । मुनेस्तो रोगस्तस्य गतः । तत्कृमयस्तु गवादिकलेवरे निहिताः । दयापरास्तान्निराशान् कथं कुर्वंति ? । ततो वस्तुद्वयं विक्रीय लब्धहेम्ना जिनचैत्यमुदग्रं व्यधापयन् । ततस्ते पंचापि द्वादशकल्पे गताः । ततो वैद्यजीवश्चक्रवर्त्ती अन्ये तु चत्वारो बाहुसुबाह्वादयश्चक्रयनुजाः । ततः सर्वे सर्वार्थसिद्धे । ततो धनावहजीव ऋषभदेवोऽभूत्, बाहुजीवो भरतः, सुबाहुजीवो बाहुबलिः, पीठजीवो महापीठजीवश्च ब्राह्मी सुंदरी च । तौ दंभतपसा स्त्रीत्वं प्रापतुः । अत्र दृष्टांते विशिष्य वर्णनं तु प्राचीनसूरिकृताष्टादशसहस्रश्लोकमितदर्शनरत्नाकरग्रंथतो ज्ञेयमिति ।

विधिनैकेन दानेन, सार्थस्वामी धनावहः । त्रयोदशे भवे प्राप, तीर्थंकृत्पदमुज्ज्वलम् ॥ १ ॥

॥ इत्यब्ददिनपरिमितहितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रंथस्य वृत्तौ द्वादशस्तंभे शतोत्तराधिकाष्टषष्टितमं व्याख्यानम् ॥ १६८ ॥

## ॥ शतोत्तरैकोनसप्ततितमं व्याख्यानम् ॥ १६९ ॥

अथ जैननृपाणां दानविधिमाह—

राजपिंडं न गृह्णंति, आद्यांतिमजिनर्षयः । नृपास्तदा वितन्वंति, श्राद्धादिजक्तिमन्वहम् ॥ १ ॥

स्पष्टः । उक्तोऽर्थः कुमारनृपज्ञातेन दृढीक्रियते—

श्रीहेमसूरिणा राजपिंडो यतीनामकल्प्यः कुमारनृपाग्रे वर्णितः । एतच्छ्रुत्वा स पप्रच्छ—"जगवन् ! मम द्वादशव्रतं कथं जावि ? यतो मदन्नादि ते न ग्रहीष्यंति, तत्किमहं सुश्राद्धः ? अतो मद्गृहे अन्नादि गृह्णंतु" । गुरुजिरुचे—"श्रीचौलुक्य ! न कल्पते प्रथमचरमजिनसाधूनां राजपिंडः, परं हे नृप ! तव श्राद्धादयः पोष्याः । पुरापि श्रीनाजेयोऽष्टापदे समवसृतस्तदा जरतः पंचशतशकटैर्विचित्राहारजृतैरानीय मुनीन्न्यमंत्रयत् । प्रजुणा प्रतिषिद्धः । तं सशोकं दृष्ट्वा देवराट् 'कतिविधोऽवग्रहः ?' इति प्रजुं पप्रच्छ । जगवानाह—'पंचविधः—देवेंद्रावग्रहः, राजावग्रहः, गृहपत्यवग्रहः, सागारिकावग्रहः, साधर्मिकावग्रहश्च । राजा जरताधिपश्चात्र गृह्यते, गृहपतिर्मांडलिकः, सागारिकः शय्यातरः, साधर्मिकः संयतः, इत्येतेषां चोत्तरोत्तरेण पूर्वो बाधितो द्रष्टव्यः । यथा राजावग्रहेणेंद्रावग्रहो बाधितः" इत्यादिनि प्रोक्ते इंद्र आह—'जगवन् ! ये एते श्रमणा मदीयावग्रहे विहरंति, तेषां मयावग्रहोऽनुज्ञातः' । जरतोऽपि दध्यौ—'यदहमपि तेषामवग्रहमनुजानामि, इति एतावताऽपि नः कृतार्थता जवतु' । ततः शक्रः पृष्टः प्राह—

श्रावकान्पूजय'। भरतेनाहूय ते प्रोक्ताः—'भव-
'हे भरत! इदमानीतं भक्तपानं, तेन त्वदधिकगुणान् श्रावकान्पूजय'। भरतेनाहूय ते प्रोक्ताः—'भव-
द्भिर्नित्यं मद्गृहे भोक्तव्यं, कृष्यादि च न कार्यं, मदीयगृहासन्नस्थैर्वक्तव्यं—'जितो भवान् वर्धते भीस्त-
स्मान्मा हन मा हन' इति। ते तथैव चक्रुः। भरतः सौख्यमग्नस्तद्वदाकर्णनोत्तरकाले एव 'केनाहं जितः?
अज्ञानकषायैः, तेभ्य एव वर्धते भयं' इत्यालोच्य भावतो निःस्पृहान् स्तौति इति। अत्रांतरे लोकबा-
हुल्यात् सूपकाराः पाकं कर्तुं कातरा नृपं प्रोचुः—'न हि ज्ञायते कः श्राद्धः को न वा?' इति श्रुत्वा
नृपः प्राह—'तेषां श्रावक १२ व्रतपृच्छापूर्वकं देयं'। तत उपलक्षणार्थं नृपेण काकिणीरत्नेन ते लांछिताः,
१२ व्रतरूप १२ तिलकान्विताः, भरतकृतचतुर्वेदपाठकास्ते श्रावका इति प्रसिद्धीकृताः। पुनः षण्मासे
येऽन्ये भवंति, तानपि लांछितवान्। तत आदित्ययशास्तु सुवर्णमयानि यज्ञोपवीतानि कृत-
वान्। महायशःप्रभृतयस्तु केचन रूप्यमयानि केचन विचित्रपट्टसूत्रमयादीनि, इत्येवं यज्ञोपवीतप्र-
सिद्धिः"। इत्यादि सर्वं स्वरूपं हेमसूरिणा नृपाग्रे प्रोक्तं। 'ततो हे नृप! द्वादशव्रते तव साध-
र्मिकवात्सल्यमुचितं'। ततो राज्ञा स्वाज्ञावधि श्राद्धानां करो मुक्तः प्रतिवर्षं ७२ लक्षद्रव्यमितः,
त्रुटितसाधर्मिकोद्धरणाय १४ कोटिद्रव्यं कृतार्थमकरोत्। पारणकदिने श्रीत्रिभुवनपालविहारस्नात्रावसरे
म मिलितसाधर्मिकैः सार्धं भुंक्ते। भोजनावसरे सदापि च दीनदुःस्थितज्ञातक्षुधार्त्तादीनां दयादानप्र-
वर्त्तनाय पटहवादनेनान्नदानपूर्वं भुंक्ते। अनेकसत्रागारानमंडयत्। यतः—

"घयकूरमुग्गमंरूग–वंजणवरुघाइकयंचमक्कारं । सक्कारपुबगं सावयाण, सो निच्चं जोयणं देइ" ॥ १ ॥
"वत्थाइं पसत्थाइं, कुडुंबनित्थारणत्थमत्थं तु । एवं सत्तागार–कयं नरिंदेण जिणधम्मे" ॥ २ ॥

इत्थं व्रते द्वादशमे वितन्वन्, समग्रसाधर्मिकभक्तिमुच्चैः ।
सु(स)संप्रतिश्रीभरतादिभूपान्, संस्मारयामास कुमारभूपः ॥ १ ॥

॥ इत्यब्ददिनपरिमितहितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रंथस्य वृत्तौ
द्वादशस्तंभे शतोत्तरैकोनसप्ततितमं व्याख्यानम् ॥ १६९ ॥

## ॥ शताधिकसप्ततितमं व्याख्यानम् ॥ १७० ॥

अथ साधर्मिकसेवाफलमाह—

साधर्मिवत्सले पुण्यं, यद्भवेत्तद्वचोऽतिगम् । धन्यास्ते गृहिणोऽवश्यं, तत्कृत्वाऽश्नंति प्रत्यहं ॥ १ ॥

तद्वात्सल्यं चैवं—स्वपुत्रादिजन्मोत्सवे विवाहेऽन्यस्मिन्नपि प्रस्तावे साधर्मिकाणां निमंत्रणं विशिष्टभोजनतांबूलादिदानं, आपन्निमग्नानां च स्वधनव्ययेनाप्युद्धरणं, यतः—

"न कयं दीणुद्धरणं, न कयं साहम्मियाणवच्छल्लं ।
हिययंमि वीयराओ, न धारिओ हारिओ जम्मो" ॥ १ ॥

धर्मे च विषीदतां तेषां तेन प्रकारेण धर्मे स्थैर्यारोपणं, प्रमाद्यतां च सारणं वारणं चोयणं ( चोदनं ) प्रतिचोयणा ( चोदना ) दिकरणं, यतः—

"पमत्ते सारणा वुत्ता, अणायारस्स वारणा । चुक्काणं चोअणा वुत्ता, निठुरं पडिचोअणा" ॥ १ ॥

तथा पंचविधस्वाध्यायादिषु यथायोगं विनियोजनं विशिष्टधर्मानुष्ठानकरणार्थं साधारणपौषधशालादेः करणं, तथा श्रावकवच्छ्राविकास्वपि वात्सल्यं कार्यं पुण्यवता गृहस्थेन । अंतरायदोषात् क्षयीभूतविभवाः श्राद्धाः पुनर्धनाढ्याः कार्याः, श्रूयते हि—'थिरादवासी श्रीश्रीमालिआभूः संघपतिः षष्ठ्यधिकत्रिशतसाधर्मिकान् स्वतुल्यांश्चक्रे । यतः—

"किं तेन हेमगिरिणा रजताद्रिणा वा, ये चाश्रिता हि तरवस्तरवस्त एव ।
मन्यामहे मलयपर्वतमेकमेव, यत्राश्रिताश्चकुटजा अपि चंदनानि" ॥ १ ॥

तथा श्रीसंभवजिनेन प्राक्तृतीयभवे धातकीखंडे ऐरावतक्षेत्रे क्षेमापुर्यां विमलवाहननृपत्वेन महादुर्भिक्षे सकलसाधर्मिकाणां भोजनादिप्रदानेन जिनकर्म बद्धं, ततः प्रव्रज्ययाऽऽनतकल्पे सुरीभूय संभवजिनोऽजनि । तस्य चावतरणे फाल्गुनशुक्लाष्टम्यां जाते महादुर्भिक्षेऽपि तद्दिन एव सर्वतोऽप्यागतसम-

स्तधान्यानां संभवोऽभूदिति संभवनाम प्रतिष्ठितमित्यादिना साधर्मिकवात्सल्यपुण्यं वचोऽतिगं मत्वा तत्कृत्वा प्रत्यहं येऽवश्यमश्नंति, ते गृहिणो धन्याः ।

अत्रार्थे भरतान्वये त्रिखंडाधिपदंडवीर्यदृष्टांतो यथा—'साधर्मिकभोजनपूर्वमेव सर्वदा भुंजानं तं परीक्षितुमन्यदेंद्रः पूर्वानंतरवर्णितरूपाञ्श्राद्धान् कोटिमितांस्तीर्थागतान् दर्शयामास । तांश्च सभक्ति निमंत्र्य भोजयत एव भूभुजो भास्करोऽस्तंगतः, एवं राज्ञ उपवासाष्टकभवने भक्तिभावो न निष्ठां गतः प्रत्युताधिकतरोऽभवत् । ततस्तुष्टः शक्रस्तस्मै दिव्यधनुःशररथहारकुंडलयुगलदानपूर्वं शत्रुंजययात्रार्थं तीर्थोद्धारार्थं चादिदेश । सोऽपि तथा चक्रे । अत्र विशेषवक्तव्यता शत्रुंजयमाहात्म्यतो ज्ञेयेति' । अन्यदपि ज्ञातं लिख्यते यथा—

श्रीशुभंकरश्रेष्ठी स्वजन्ममध्ये लक्षं ज्ञातिभोजनं, लक्षकन्यादानं, लक्षगोदानं, लक्षद्विजानामशनं चेति चतुष्कलक्षं विधाय मृत्वा च स्वगृहभूमिनिधाने सर्पत्वं प्राप, नित्यं पुत्रादीन् भापयति । तद्गृहपार्श्वे धर्मदासाह्वः श्राद्धः तथाविधद्रव्याभावादेकस्मै मुनये, एकस्यै साध्व्यै, एकस्मै श्रावकाय, एकस्यै श्राविकायै वर्षमध्ये सकृद् भावेन दानं प्रयच्छति, तेनावधिज्ञानं स प्राप । अन्येद्युः शुभंकरपुत्रैः सर्पभापनवृत्तं श्राद्धस्य प्रोक्तं, श्राद्धस्तत्प्राग्भवं प्राह—'पूर्वमनेन लक्षज्ञातिभोजनदानेन षट्कायारंभः कृतः, अनेकपत्रावलीनामुत्करा उच्छिष्टस्थले कारिताः, तत्रानेकद्वींद्रियादिजीवानां विराधना कृता, एवं लक्षचतुष्कदानेऽपि महत्पापं स्वयमभ्यूह्यं, तेनात्र सर्पो जातः, मद्धर्मनिंदाऽपि अनेन कृताऽस्ति । दुर्लभ-

बोधिरस्ति, मृत्वा नरके गमिष्यति' इति श्रुत्वा तत्पुत्राः प्रबुद्धाः श्राद्धा जाताः, धर्मदासस्तु तस्मिन्नेव भवे मुक्तिं प्राप्स्यति ।

श्रीसंभवः प्राप्त(पूर्व)भवे तृतीये, श्रीदत्तवीर्यः स च धर्मदासः ।
साधर्मिकाणां प्रतिपत्तितश्च, प्राप्ता इमे सर्वसुखैकधाम ॥ १ ॥

॥ इत्यब्ददिनपरिमितहितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रंथस्य वृत्तौ शताधिकसप्ततितमं व्याख्यानम् ॥ १७० ॥

---

## ॥ शतोत्तरैकसप्ततितमं व्याख्यानम् ॥ १७१ ॥

अथ पौषधशालाकरणफलमाह—

पुण्याय कुर्वते धर्म–शालादि ये जनाः सदा । तेषां स्याद्विपुलं पुण्य—माम्र(म)भूमिपतेरिव ॥ १ ॥

स्पष्टः । संबंधस्त्वयं—

यथा गोपगिरौ बप्पभट्टसूरिप्रतिबोधितेन श्रीआम्र(म)नृपेण सहस्रस्तंभमयी साधुश्रावकसुगमप्रवेशनिर्गमप्रवरद्वारत्रयमंडिता दूरतरपट्टशालोपविष्टसाधूनां प्रतिलेखनास्वाध्यायादिसप्तमंडलीवेलाज्ञापकम-

ध्यस्तम्नवब्धमहाघण्टाटंकारवकारिणी पौषधशाला कारिता । तस्या व्याख्यानमंडपस्त्रिलक्षद्रव्येण ज्योतीरूपमणिशिलाबद्धश्चंद्रकांतमणिकुट्टिमो द्वादशसूर्यवन्निशायां सर्वतमोपहा, पुस्तकाक्षरवाचनसूक्ष्मबादरजीवाविराधनार्थं महातेजोयुक्तमुपाश्रयमकारयदिति । अत्रार्थेऽन्यदपि ज्ञातमिदं—

एकदा श्रीपत्तने जयसिंहनृपसर्वव्यापाराध्यक्षः पंचसहस्रतुरंगमाधिपः श्रीश्रीमालिज्ञातीयमंत्री सांतुः श्रीवादिदेवसूरिगुरुभक्तः चतुरशीतिसहस्रटंककव्ययेनापूर्वं राजधवलगृहसमानगृहं कारितवान् । लोका विलोकयितुमायांति । श्रीगुरोरेकदा तददीदृशत्, परं गुरुणा तन्न श्लाघितं । मंत्रिणा कारणं पृष्टं । तदा सौभाग्यनिधानक्षुल्लेनोक्तं—

"खंडनी पेषणी चूल्ही, जलकुंभः प्रमार्जनी । पंचैते यत्र विद्यंते, तेन नो वर्ण्यते गृहम्" ॥ १ ॥

अन्यच्च—

"सुघरीकाकचट्यादि-पक्षिणोऽपि हि नैकशः । कुर्वते स्वगृहं यत्ना-न्न पुण्यं तत्र जायते" ॥ १ ॥

मंत्रिन् ! यद्येवंविधा पौषधशाला स्यात्तदा वरं धर्महेतुत्वात्, अन्यत्तु पापहेतुत्वाद् गुरुभिर्न व्याख्यायते । हे मंत्रिन् ! सौधं सरोवरं च विवाहादिप्रकरणं युद्धं सारंभजातं सर्वं न वर्णनीयं' । इति श्रुत्वा मंत्री दध्यौ—'साधूनां वसतिदानमपि महापुण्यं स्यात् । पूर्वमपि जयंतीश्राविकावंकचूलावंतिसुकुमालादय आश्रयदानतः स्वेप्सितं स्थानं भेजुः । तथा मेघकुमारः क्षुद्रजीवं प्रति स्थानकदानतो महत्सौख्यं प्राप, तर्हि इमे तु सर्वजीवेष्वभयं वितन्वंति, तेषां प्रदानं तु महाफलदं स्यात्, तथा ये मुनी-

नामाश्रयं न ददति, ते नमुचिप्रधानवद्दुःखं लभंते'। इति ध्यात्वा स तु तदेव गृहं प्रासुकं धर्मनिमित्तमकरोत्। ऋषिनिमित्तं कृता वसतिस्तु मुनीनां न कल्प्या आधाकर्मिकाहारवत्। अत्र तु न कोऽपि दोषः। एवमन्यामपि धर्मशालां व्यधात्।

यस्तनोति वरपौषधशालां, सर्वसिद्धिललनावरमालाम्।
सर्वदैव लभते सुविशालां, बोधिबीजविमलां कमलां सः॥ १॥

॥ इत्यब्ददिनपरिमितहितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रंथस्य वृत्तौ
द्वादशस्तंभे शतोत्तरैकसप्ततितमं व्याख्यानम्॥ १७१॥

## ॥ शताधिकद्विसप्ततितमं व्याख्यानम्॥ १७२॥

अथ साधूनामकल्प्यं दानं न देयमित्याह—

त्यक्तुं योग्यं विषमिश्रं, कुत्सितं भक्ष्यवर्जितम्। क्रोधकैतवदुर्मत्या, दत्तं दानमनर्थदम्॥ १॥

स्पष्टः। अत्रार्थे नागश्रीसंबंधः, स चायं—

चंपापुर्यां सोमदेवसोमभूतिसोमदत्ता इमे त्रयः सहोदरा अभूवन्। तेषां क्रमेणेमा नागश्रीयज्ञश्रीभूतश्रिय इति तिस्रः प्रिया आसन्। तेषां त्रयाणामित्थं गृहव्यवस्थितिरासीत्—'एकैकदिने क्रमेण सर्वैर-

'प्येकसद्मनि भोक्तव्यं'। एकदा नागश्रिया स्ववारकदिने कटुतुंबीव्यंजनमजानत्या तया हिंग्वादिभिर्द्रव्यैः संस्कृतं पक्वीकृतं च, तन्मध्यात्तया किंचित्स्वादितं, कटुकं ज्ञात्वा धनव्ययं स्मृत्वा च क्वापि भाजनेऽस्थापयत्। ततोऽन्यभोजनैर्भर्त्रादीन् भोजयामास। ततस्तद्गृहे धर्मघोषसूरिशिष्यो धर्मरुचिर्मासक्षपणपारणे आययौ। तया तद्व्यंजनं 'धनव्ययो विफलो मा भूत्' इति ध्यात्वा दत्तं। मुनिस्तु तद्गृहीत्वा गुर्वंतिकं प्राप। अहो! अस्याः स्त्रियो बुद्धिं धिग् धिग्, यस्या गृहे तपस्तेजसा सुरगिरिसमा मुनय आगता अनयोत्करतुल्या गणिताः, तथा कल्पवृक्षसूर्यकामघटपुण्योदधिसन्निभा अनयाऽर्कतरुराहुकुलालघटगोष्पदतुल्या निश्चिताः'। अथ धर्मरुचिस्तदाहारं गुरोरदर्शयत्। गुरुणा तदयोग्यं चतुर्भिर्ज्ञानैर्ज्ञात्वा प्रोक्तं—'हे शिष्य! इदं शुद्धस्थले परिष्ठापय'। इममादेशमासाद्य स वनमगात्। हस्तक्(ग)तपात्रतः कथंचित्स्थंडिले एकबिंदुः पपात। बिंदुस्वादाकृष्टाः पिपीलिका एत्य सहस्रशो म्रियमाणा दृष्टाः। तदा मुनिर्दध्यौ—'यदेकबिंदुरित्थं प्राणघातकस्तर्हि समग्रमिदं कति जीवान् भस्मसात्कर्त्ता। तथात्राहं अन्यजीवानां सौख्यं करोमि किं वा मम जिह्वां प्रति सौख्यं ददामि। यदि जीवानामभयं तनोमि, तदा भवांतः स्यात्, अन्यथा च भववृद्धिः। तथा जिनाज्ञां पालयामि किं वा मजीवं? अहो जिनाज्ञैवार्हा। तथा मद्गुरोरपि आज्ञाऽस्ति 'शुद्धस्थंडिले गत्वा परिष्ठापय'। मत्कोष्ठकसदृशं सुस्थलं क्वापि नास्ति। अरे जीव! पूर्वं त्वयाऽनेकजीवाकुला आहारा द्रव्यतोऽतिमिष्टा अनेकशः कृताः। अयं तु नामतो दुष्टः परिणामे तु जीवदयारसरूप एव विशिष्टः, अतो हे जीव! त्वमेवेमं पिब' इत्यादि विमृश्य सर्पो

बिलप्रवेशमिवादीनमनसा स तमाहारमुदरांतः प्रावेशयत् । ततोऽनशनं गत्वा सर्वार्थसिद्धिविमाने ययौ । ततः सूरिणा सा वार्त्ता ज्ञानादिना विज्ञाय लोकसमक्षं सा नागश्रीः निंदिता । ततः समस्तस्वजनैर्गृहान्निष्कासिता । सर्वत्र भ्रमंती क्वापि वने दवानलेन मृता षष्ठीं पृथ्वीं प्राप्ता । समस्तनरकेषु द्विर्द्विः भ्रमत् । अनंतकालं भ्रांत्वा क्रमेण द्रौपदी जातेति । विशेषेण ज्ञातासूत्रतो ज्ञेयमिति ।

दत्त्वा च साधोरत्यजनीयभोजनं, सा स्त्री हि संसारमनंतमभ्रमत् ।
क्रोधादिदोषान् प्रविहाय श्रावकैस्त्यागो विधेयः सततं सुपात्रके ॥ १ ॥

॥ इत्यब्ददिनपरिमितहितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रंथस्य वृत्तौ द्वादशस्तंभे शतोत्तरद्विसप्ततितमं व्याख्यानम् ॥ १७२ ॥

## ॥ शताधिकत्रिसप्ततितमं व्याख्यानम् ॥ १७३ ॥

अथ दानमनुमोदकस्यापि फलतीत्याह—

फलं यच्छति दातृभ्यो, दानं नात्रास्ति संशयः ।
फलं तुभ्यं ददात्येतदाश्चर्यं त्वनुमोदके ॥ १ ॥

स्पष्टः । अत्रार्थे ज्ञातं—

रैवतोद्याने समवसृतं नेमिजिनं श्रुत्वा पुंडरीकाक्षो बंधुना सह वंदनायागात् । नत्वा जिनं वैराग्यदेशनां निशम्य विष्णुस्तं पप्रछ—'अस्यां पुर्यां स्वर्गसंनिन्नायां किं नावि ?' । विश्वगुरुर्जगाद—'वारुणीमदांधकुमाराज्यां सकोपीकृतद्वैपायनतो विनाशोऽस्या नविष्यति, अपरं च जराकुमारमुक्तबाणेन वामपादे विद्धः संस्त्वं कालं कृत्वा तृतीयपृथिव्यां नारकत्वेनोत्पत्स्यसे' इति स्वामिवचनं श्रुत्वा जराकुमारो 'माऽहं भ्रातृघ्नो नूवम्' इति मत्वा वनेचरो बन्नूव । ततः श्रीकृष्णोऽहं नरके गमिष्यामि इत्यार्त्तध्यानं ध्यायंस्तस्थौ । तदा नगवानाह—'आगामिन्यामुत्सर्पिण्यां द्वादशोऽममनामा तीर्थनाथो नविष्यसि' तच्छ्रुत्वा सहर्षेण स्वपुरीं प्राप । ततः सपदि नगरमध्यगतामखिलां मदिरां निरकाशयत् । अथान्यदा शांबप्रद्युम्नकुमारौ क्रीडायै वने बहु दूरं गतौ । तदा रैवतगुहासु निक्षिप्तमदिरागंध आगतः । सुचिरेणातिलुब्धा यदोः कुमारास्तां पपुः, मदेन विकला यथेच्छं भ्रेमुः । अत्रांतरे द्वैपायनतपस्विनं दृष्ट्वा गाढप्रहारेणाकुट्टयत् । तदा स मुनिर्निदानमकरोत्—'मदीयं तपः प्रमाणं चेत्तदाऽहं पुरीदाहकरो नवेयं' । तत एतद्वृत्तं कुमारा रामविष्णुज्यामाहुः । तच्छ्रुत्वा तौ द्वैपायनांतिके समागत्याहतुः—'नो मुने ! कृपां कृत्वा निदानं विफलीकुरु' । स स्माह—'इदं वृथा न नवेत्, परं युवां विना कंचन नैव मोदये, अतो बहुधा न वाच्यं' । अथ नगरे नृपः पटहमवादयत्—'नो जनाः ! मन्युना द्वैपायनेन पुरीप्रलयः प्रपन्नोऽस्ति, ततो यूयं जिनधर्मैकचित्ता नवत । तथा चक्रुः केचित् । अन्ये तु—

"संध्याभ्ररागगजकर्णकुशाग्रबिंदुकल्लोलवासवधनुस्तरलं समग्रम् ।
सांसारिकं द्रविणयौवनराजसौख्यं, नेमिस्तदा त्रिजगतीप्रभुराह वस्तु" ॥ १ ॥

इति नेमिदेशनां श्रुत्वा दीक्षां स्वीचक्रुः ।

अथ द्वैपायनर्षिर्मृत्वा वह्निकुमारमध्ये त्रिदशो जज्ञे । स प्राच्यरोषान्नगरे उपद्रवायागात्, परं जना आचाम्लादितपः कुर्वंति. तेन पराभवितुं न क्षमः । एवं द्वादश वर्षाणि गतानि । अन्येद्युः सकलोऽपि लोकः पर्वदिने धर्मे प्रमाद्यभवत् । ततः स दुरात्माऽवसरं प्राप्य संवर्त्तकसमीरेण तृणकाष्ठादिकं नगरे प्रक्षेप्य जज्वाल, अन्यदेशादिगतान् लोकानपि तन्मध्येऽपातयत् । तदा संभ्रांतौ कृष्णरामौ रोहिणी-देवक्यौ वसुदेवं चैतांस्त्रीन् रथारूढान् कृत्वा गोपुराभिमुखं समाययतुः, तावदश्वतुरगौ पदमपि गंतुं नाशक्नुतां । ततस्तौ स्वयं रथं समाक्रष्टुं लग्नौ तावत्तेन देवेनोक्तं—'भो रामकृष्णौ ! युवां मुधा प्रयासं कुरुथः, युवां विना कमपि न मोचये' इत्युक्त्वा ज्वलत्प्रतोली पातिता तेन त्रयोऽपि जिनध्यानैकलीना देवत्वं गताः । अथ तौ नगरान्निर्गतौ कस्मिंश्चिद्गिरिशिखरे स्थित्वा तां नगरीं षण्मासान् यावद्व्यलो-कयतां । ततः पांडुपुत्रनगरगमनोत्सुकौ क्रमेण कौशांबीकानने गतौ । तत्रैकवटस्याधः शिलापट्टके नि-षण्णौ । तृषाक्रांतेन हरिणा बंधुपार्श्वे जलं मार्गितं । ततो रामो जलाश्रये तं मुक्त्वा गतः । सोऽच्युतः पीतांबरावृतः कृतस्वजानूपरिपादपद्मो द्रुमस्याधः सुप्तो निद्रां प्राप । इतश्च स जराकुमारो दूरात्स्वर्ण-

मृगभ्रांत्या तीक्ष्णं इषुं मुक्तवान्, तेन वामपादतले विद्धो जागरित एवं प्राह—'अहो! केन क्रूरात्मनेदं कृतं?' तच्छ्रुत्वा जराकुमार आत्मानं निंदन् साश्रुनेत्रो बंधोश्चरणे निपतितः। हरिणोक्तं—'किं रुदनेन! भगवता यदुक्तं तज्जातं, किमत्र शोचनं? भो बांधव! ममेदं कौस्तुभरत्नं पांडवेभ्यो दत्त्वा नगरदाहादिवृत्तांतं निवेदयेः, अभिज्ञानं दृष्ट्वा निश्चयो भविष्यति, यदि त्वमितो न यास्यसि तदा बलभद्रस्त्वां हनिष्यति'। तच्छ्रुत्वा स मथुरां प्रति चलितः। ततः स हरिरचिंतयत्—'अहो! धन्यास्ते गजसुकुमालढंढणाद्याः, ये मोहं वशीकृत्य परमानंदं प्रापुः'। ततः प्राणांते नरकयोग्यलेश्या समुत्पन्ना—'अहो मम वैरिणा पुरी दग्धा, पापिनं कथमपि पश्यामि तर्हि तं हत्वा यमातिथिं करोमि' इति ध्यायंस्तृतीयनरके गतः। अथ स मुशली कमलदलेषु जलं संगृह्य वटे समागात्, तेन संभाषितः—'भो बंधो! शीतलं जलं गृहाण पिब' एवमुक्तोऽपि न प्रत्युत्तरं ददाति। ततो वस्त्रमपावृत्य शरेण विद्धं दृष्ट्वा विललाप। तत्कृष्णशरीरं स्कंधे कृत्वा मोहत इतस्ततः षण्मासान् यावद् भ्रांतः। अथ बलदेवबंधुः सिद्धार्थनामा सुरस्तं बोधयितुं समागात्। कर्षुकाकारं कृत्वा तत्पुरः शिलाग्रे पंकजानि आरोपयत्। तद् दृष्ट्वा रामोऽप्यवक्—'भो अज्ञेश्वर[1]! अत्र शिलापट्टेऽब्जानि कथं भावीनि?'। स प्राह—'भोः तवांसगतशवं जीविष्यति तदैव'। तद्वचनमवगणय्य मोहेनाग्रे गच्छन् रौहिणेयो दग्धमहीरुहं सिंचंतमेकं नरमवेक्ष्य तं प्रत्याह—'भो मूढ! दग्धशाखी सिक्तः कदा पल्लविता?' सुरः प्राह—'कुणपमिदं यदा सजीवं भावि

१ मूर्ख.

तदा' । एवं समोक्तिं निशम्य दध्यौ—'नूनं मे बंधुर्मृतो निःश्रेष्टत्वेन' । ततः सुरो जगौ—'भो बंधो ! मां मित्रं सिद्धार्थमवेहि, त्वद्बोधाय सर्वमिदं मया रचितं, कृष्णस्तु जराकुमारेण हतः' । पूर्ववृत्तांतं सर्वं स सुरोऽकथयत् । बलभद्रोऽपि मोहं मुक्त्वा बंधुदेहसंस्कारं चक्रे । इतश्च बलं दीक्षोत्सुकं विज्ञाय नेमिना चारणर्षिः प्रेषितः । स संयममग्रहीत् । तदनु तुंगिकागिरौ तीव्रं तपस्तेपे । अन्येद्युः श्रीरामर्षिः मासस्य पारणे क्वापि पुरेऽविशत् , तदा सार्भकया कूपकंठस्थया मुनिरूपमोहितया तत्रन्यस्तनेत्रया स्त्रिया कुंभस्य स्थाने डिंभस्य गले रज्जुरबध्यत । अनुचितपरां तां वीक्ष्य मुनिना सावधानीकृता । ततो मुनिर्दध्यौ—'धिग् धिग् मे रूपमनर्थकं, अतो नगरादिषु भिक्षार्थं न गंतव्यं, वने एव काष्ठहारादिभ्यो ऽशनं ग्राह्यं' । अन्यदा काष्ठवाहकैः स्वस्वभूपानां प्रोक्तं—'कश्चिन्नरो महत्तपश्चरति' । ते श्रुत्वैवं दध्युः—'नूनमेष नरस्तपः कृत्वाऽस्मद्राज्यानि ग्रहीष्यति' । ततस्ते ससैन्यास्तं हंतुं मुनेः समीपमेयुः । तदा स सिद्धार्थसुरो वैयावृत्त्यार्थं सहस्रशः सिंहान् विचक्रे । तेभ्यो भीता नृपास्तं नत्वा स्वस्वस्थानमगुः । ततः प्रभृति नृसिंह इति ख्यातिर्जाता । अथ तस्य मुनेः स्वाध्यायं शृण्वंतो व्याघ्रव्यालसिंहादयो दर्शनं श्राद्धत्वं च प्रापुः । तत्रैको मृगो मुनेः प्राग्भवमित्रत्वाज्जातिस्मरणतश्च समीपाश्रयी सार्थादियोगे सति अशनादिना वैयावृत्त्यं करोति, संज्ञां कृत्वा ज्ञापयति । एवं शतवर्षाणि यावद् बहु तपस्तप्तं । यथा—

"सट्ठिं मासा सट्ठिं पक्खा, चत्तारि चउमासिज्ज ।
जेणाणसणेन विहिया, बलभद्दरिसिं नमंसामि ॥ १ ॥

एकदा काष्ठार्थिनस्तद्वने वृक्षानर्द्धच्छेदितान् मुक्त्वा मध्याह्ने भोजनं कर्त्तुं सज्जा जाताः। स मृगस्तान् वीक्ष्य गुरुमज्ञापयत्। ततः स साधुमासक्षपणे कुरंगदर्शितमार्गेण तत्रागात्। सूत्रकारस्तं मुनिं वीक्ष्य भावशुद्ध्या दानं दत्त्वा दध्यौ—'धन्योऽहं कृतपुण्योऽहं'। तदानीं स सारंग ऊर्द्ध्वाननो रामं रथकृतं चालोक्य दध्यौ—'अहमधन्यो यस्तिर्यग्भवेन दूषितः। यतः—

"न दीक्षाग्रहणे साधो—र्भिक्षादाने न च प्रभुः।
एकोऽहं मंदभाग्योऽस्मि, धिग्मां पशुतया हतम्" ॥ १ ॥

तावत्तेषां त्रयाणामुपरि वातोर्मिप्रेरितोऽर्द्धछिन्नः पादपः पतितः तेन त्रयोऽपि मृत्वा ब्रह्मलोके देवत्वेनोत्पन्नाः, मुनिना संयमं वर्षशतं यावद् धृतमिति। अथ मुनिर्देवभूयं गतोऽवधिना स्वबंधुस्नेहं स्मरंस्तन्मिलनोत्सुकोऽभवत्। परं पूर्वं पुस्तकलिखितमवश्यदेवकृत्यं पंचसभार्हं कुर्वतस्तस्य ह्यशीतिसहस्रवर्षाणि गतानि। ततः शीघ्रं तृतीये श्वभ्रे एत्य कृष्णमकर्षयत्। कृष्णः प्राह—'हे बंधो! मामत्रैव रक्ष रक्ष, त्वत्स्पर्शेनातिदुःखमवाप्नोमि, परं लोके आवयोर्यशः सुरनरा गायंति तथा कुरु। ततो बलसुरेण तत्रैव पूर्ववद्यादवादिपूर्णा द्वारिका निष्पादिता। लोकानां समीहितं पूरयति। पुनर्जलधिपूरेण सा प्लाविता। एवं सप्तवारं कृत्वा प्लाविता च। इत्थं सत्यं जगत्सु महिमा प्रसृतः। द्विजागमे तु कृष्णावतारस्याष्टचत्वारिंशच्छतानि वर्षाणि जातानि। तदपीत्थं सत्यं। जैनागमे तु ८४००० वर्षाणि जातानि इति वृद्धाः।

दानं प्रयच्छंत्यनुमोदयंति, कुर्वंति शंसां शुद्धचित्ततो या ।
दात्रा समं लाभमवाप्नुवंति सारंगवत्तत्त्वविदो वदंति ॥ १ ॥

॥ इत्यब्ददिनपरिमितहितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रंथस्य वृत्तौ द्वादशस्तंभे शताधिकत्रिसप्ततितमं व्याख्यानम् ॥ १७३ ॥

## ॥ शतोत्तरचतुःसप्ततितमं व्याख्यानम् ॥ १७४ ॥

अथ दानसमये विघ्नादिदोषाभावमाह—

घृतादिवस्तुनो बिंदु—र्भूमौ क्षरति नो यथा । तथा दानं प्रदातव्यं, साधूनां तच्च कल्पते ॥ १ ॥

स्पष्टः । अत्रार्थे ज्ञातमिदं—

चंपायां धर्मघोषमंत्री । तस्य स्त्रियः सुजातश्रेष्ठिस्वरूपादिकं वीक्ष्य मोहिताः । तद्वेषं विधायैका स्त्री वयस्याभिः सहाक्रीडत् । तद्दृष्ट्वा मंत्री अपरमार्थज्ञः सुजातोपरि द्वेषं वहन् कूटलेखमलिखत् । यथा—"सुजातेन लिखितं विक्रमनृपं प्रति इयं विज्ञप्तिः—युष्माभिराशु समागंतव्यं । अस्मत्पुरेशं प्रपंचेन हत्वा राज्यं दापयिष्ये" इत्यादि लिखित्वा स्वनृपाय दर्शितं । नृपस्तस्य हननार्थं कंचिन्मिषं कृत्वा चंद्र-

ध्वजनृपपार्श्वे प्रैषयत् खेलेन सह सुजातं श्रेष्ठिनं । चन्द्रध्वजः तत्पत्रं वाचयित्वा सुजातश्रेष्ठिनं निष्कलंकं ज्ञात्वा दध्यौ—'अहो चंपापतिना कथमादिष्टमनर्हं कार्यं ?। अयं तु निःस्पृहोऽस्ति' इति निश्चयं कृत्वा स्वसुतां तस्मै ददौ । नवोढामुग्धासंयोगेन श्रेष्ठी सामयो जातः । तदा पत्नी स्वात्मानं निनिंद पुनः पुनः । तदाकर्ण्य श्रेष्ठी प्राह—'हे स्त्रि ! कर्मण एव दोषः' । ततः सा वैराग्यं प्राप्ता । दीक्षानशनाभ्यां मृत्वा देवीत्वं प्राप्य पुनस्तत्रैत्य सुजातमुवाच—'त्वद्धर्मवचोऽङ्गीकृत्याहमीदृशं पदं प्राप्ता, अथ किंचित्कार्यं समादिश' । श्रेष्ठिनोक्तं—'मत्कलंकमुत्तारय' । ततः सुरी तं विमाने संस्थाप्य चंपावने मुमोच । शिलां विकुर्व्य त्रापितश्चंपेश एत्य श्रेष्ठिनं ननाम । देव्या पूर्वं यथावृत्तं निवेदितं । नृपः क्रोधेन तं सचिवं देशान्निरवासयत् । सुजातस्तु महोत्सवेन गृहमानीतः क्रमेण दीक्षां ललौ । अथ धर्मघोषः सुसाधुसंयोगात्प्राप्तचारुचारित्रः पृथ्वीपुरे वरदत्तमंत्रिगृहे भिक्षार्थं प्रविष्टवान् । वरदत्तस्तु हृष्टः पंचामृतदानं दातुमुद्यतः, तन्मध्यात् घृतक्षीरबिंदुरेकादिर्भूमौ पपात । तदा मुनिरकल्प्यमाहारं मत्वा व्याघुट्यान्यत्र गतः । वरदत्तः पश्चात्तापमकरोत् । इतश्च तद्बिंदुकोपरि मक्षिका स्थिता, तद्भक्षणाय गृहगोधा समेता, तद्धननार्थं काकिरूकः समेतः, तद्वधार्थं मार्जारश्च समेतः, तद्विंसार्थं गृहसत्कः श्वा समायातः, तद्वधार्थं रथ्यासत्कःकुर्कुरः समागतः, तदा गृहस्वामिना रथ्यासारमेयो हतः, रथ्यागतजनैरन्यः प्रति मारितः, परस्परं खड्गाखड्गिमुष्टामुष्टिप्रमुखं युद्धं जातं, तद्वीक्ष्य वरदत्तो दध्यौ 'नूनममुमनर्थं ज्ञात्वा तेन ऋषिणाऽशनं नात्तं, अहो प्रशस्यं धन्यं तस्य ज्ञानं ध्यानं च' इति ध्यात्वा वैराग्येण

स्वयंबुद्धो जातः। जातिस्मृत्या पूर्वभवाधीतसूत्रं सर्वं संस्मृतं। देवदत्तमुनिवेषं गृहीत्वा पृथ्वीं पुनाति स्मेति। विशेषवक्तव्यता उपदेशमालाकर्णिकातो ज्ञेयेति।

दुग्धाज्यशाकादिरसस्य बिंदुर्यथा न भूमौ पतति प्रमादात्।
श्राद्धेन देयं स्वशनादिकं च, धार्यं मुनिजि (नीन्द्रै) र्वरदत्तवत्तत्॥ १॥

॥ इत्यब्ददिनपरिमितहितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रंथस्य वृत्तौ द्वादशस्तंभे शतोत्तरचतुःसप्ततितमं व्याख्यानम्॥ १७४॥

---

## ॥ शताधिकपंचसप्ततितमं व्याख्यानम्॥ १७५॥

अथाल्पमपि दत्तं दानं महाफलदं स्यादित्याह—

अल्पमपि क्षितौ क्षिप्तं, वटबीजं प्रवर्धते। जलयोगात्तथा दानात्, पुण्यवृक्षोऽपि वर्धते॥ १॥

स्पष्टः। अल्पं सूक्ष्मं तिलत्रिभागमात्रत्वात्, यथा न्यग्रोधबीजं जलयोगात् वर्धते तथा दानतः पुण्यतरुरपि इति। अत्रार्थे मूलदेवप्रबंधः, स चायं—

कोशलायां धनदेवधनश्रीपुत्रो मूलदेवः। कलापात्रोऽपि व्यसनदोषित्वात् पित्रा निर्भर्त्सितः अनेकदेशेषु पर्यटन् एकस्मिन् पुरासन्ने देवकुले एकेन कार्पटिकेन सह सुष्वाप। रात्रौ द्वयोरपि संपूर्णचंद्रमं-

चंद्रपानस्वप्नं जातं । प्रत्यूषे भरटकेन तद्वृत्तं स्वगुरोः पुरः प्रोक्तं, तेन फलं गदितं—'शिष्य ! अद्य तव पूतगुरुपूर्णमंडकमेकं कोऽपि दास्यति । यतः—

"सा सा संपद्यते बुद्धिः, सा मतिः सा च भावना ।
सहायास्तादृशा ज्ञेया, यादृशी भवितव्यता" ॥ १ ॥

मूलदेवस्तस्य गुरुमज्ञं मत्वा स्वप्नपाठकपार्श्वे गत्वा विनयेन तत्फलं पृष्टवान् । तेन स्वप्नफलं—'तव सप्तमे दिने राज्यं भावि' इत्थं प्रोच्य स्वसुता दत्ता । मूलदेवः स्माह—'राज्ये जाते एनां ग्रहीष्ये' । ततो मूलदेवः पुरे परिभ्रमन् कस्यचिद् गृहे कुल्माषान् लब्ध्वाऽरण्ये एत्य भोजनाय स्थितः, तावत्कोऽपि मासोपवासिसाधुः समेतः, तं प्रति हर्षभरेण ददौ कुल्माषान् । तन्महिम्ना दिव्यगीर्जाता—'श्लोकार्धमध्ये यद्वदसि तत्त्वं प्राप्स्यसि' । तेन—

"गणियं च देवदत्तं, दंतिसहस्सं च रज्जं च"

इति याचितं । ततः सप्तमे दिने मृत्युप्राप्तापुत्रनृपभृत्यविरचितपंचदिव्यैः राज्यं प्राप । तदा कार्पटिकस्तन्नृपपदप्राप्तिं श्रुत्वा पुनः पुनस्तत्र स्थले स्वप्नकृते स्वपिति, तत्पुनः क्व । मूलदेवनृपो दानादिधर्मं विधाय स्वात्मधर्ममसाधयत् इति । अथवा प्रस्तुतश्लोकभावार्थे नयसारज्ञातं चंदनबालावृत्तं तथा चास्यामवसर्पिण्यां प्रथमदानधर्मदर्शकश्रेयांसकुमारावदातश्चेत्यादयो दानकुलकतोऽवधार्याः । अत्राह—ननु दानं पंचधा—सुपात्रदान १ अभयदानं २ मातृपितृस्नुषाभृत्यभूपादीनां दानमुचितं ३ याचकादीनां

कीर्त्तिदानं ४ दीनदुःखितानां दानमनुकंपाख्यं ५ इति पंचसु सुपात्रदानमेकं पुनः पुनः श्रेष्ठत्वेन कथं? उच्यते—'एषु मध्ये द्वे आद्ये मोक्षदे, तत्राभयदानं तु सर्वव्रतप्रारम्भे प्रोक्तं, सुपात्रं तु सर्वव्रतांते प्रोक्तं। अन्य त्रीणि सांसारिकसौख्यदानि। अथवाद्यचरमजिनौ सुपात्रदानेनैव सुखिनौ बभूवतुः, अतः श्रेष्ठमिति स्थितं।

श्रीमूलराजा नयसारचंदनाश्रेयांसनाभेयजिनादिभिर्मह्त्।
अल्पस्य दानस्य माहात्म्यतः फलं. प्राप्तं ततः स्वीकुरुतांतिमव्रतम् ॥ १ ॥

॥ इत्यब्ददिनपरिमितहितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रंथस्य वृत्तौ
द्वादशस्तंभे शताधिकपञ्चसप्ततितमं व्याख्यानम् ॥ १७५ ॥

—————

॥ शताधिकषट्सप्ततितमं व्याख्यानम् ॥ १७६ ॥

अथैतद्द्वादशव्रतानि निश्चयव्यवहाराभ्यां लिख्यंते—

एकैकं व्रतमप्येषु, द्विद्विभेदेन साधितम्। तद्विज्ञाय सुधीश्राद्ध, रुचिः कार्या व्रतादरे ॥ १ ॥

स्पष्टः। नवरं एषु द्वादशव्रतेषु मध्ये एकैकमपि व्रतं प्रथमादिकं द्विद्विप्रकारेण निश्चयव्यवहाराख्येन गदितं। तथाहि—

यः परजीवं स्वजीवतुल्यं दृश्यमानक्षुधादिवेदनया विज्ञाय न हिनस्ति, इति व्यवहारनयापेक्षयाद्यं व्रतं । १ ।

'अयं स्वात्माऽन्यजीवहिंसाबद्धकर्मभिर्दुःखं प्राप्नोति, तत्स्वात्मनः कर्मादिभ्यो वियोगप्रापणं, अनेकगुणात्मको जीवः, हिंसाकर्मादिग्रहणं नास्य धर्मः' इत्यादिज्ञानबुद्ध्या स्वात्मगुणहिंसात्यागरूपनिश्चयनयापेक्षयाद्यव्रतं । २ ।

लोकगर्हितालीकभाषणनिवृत्तिरिति व्यवहारतो द्वितीयं ॥ १ ॥ मौनीन्द्रभाषितं जीवाजीवस्वरूपस्याज्ञानेन वितथकथनं, परवस्तुपुद्गलादिकं प्रति अस्मदीयमितिभाषणमिति निश्चयमृषावादाद्विरमणं, तद्व्रतं निश्चयतो द्वितीयं । २ । एतद्व्रतं विहायान्यव्रतानि येन विराधितानि, तस्य चारित्रं गतं, परं ज्ञानदर्शने स्थिते, येन निश्चयमृषावादविरमणव्रतं विराधितं तस्य ज्ञानादित्रयमपि गतं । तथाऽऽगमेऽपीत्थमुक्तं—'एकेन साधुना मैथुनविरमणव्रतं भग्नं, एकेन च द्वितीयं, तत्राद्य आलोचनादिना शुध्यति, अपरस्तु स्याद्वादार्थलुंपक आलोचनादिना न शुद्धिमेति' ।

तथा योऽदत्तपरवस्तुधनादिकं प्रत्याख्याति, तस्य तद्व्यवहारतो व्रतं तृतीयं । १ । यो द्रव्यतोऽदत्तं न गृह्णाति, परं अंतःकरणे ४२ भेदपुण्यकर्मवांछादिना धर्मकार्यं करोति, तथा पंचेंद्रियत्रयोविंशतिविषयाष्टकर्मवर्गणादिपरवस्तुग्रहणेच्छातो नियमं करोति तन्निश्चयतोऽदत्तादानविरमणव्रतं । २ ।

श्राद्धानां स्वदारसंतोषः परस्त्रीत्यागः, साधूनां सर्वस्त्रीत्याग इति व्यवहारतश्चतुर्थं व्रतं । १ । विषया-

भिलापममत्वतृष्णात्यागरूपमेव भावतश्चतुर्थव्रतं । २ । बाह्यतः स्त्रीत्यागेऽप्यंतरंगलौल्यं येन न प्रत्याख्यातं, तस्य विषयसंबंधिकर्मबंधो भवत्येवेति ।

श्राद्धानां नवविधपरिग्रहपरिमाणादिकव्रतं, मुनीनां सर्वपरिग्रहत्यागरूपमिति व्यवहारतः पंचमं व्रतं । १ । निश्चयतश्च भावकर्म रागद्वेषाज्ञानं, द्रव्यकर्म अष्टकर्मदेहेंद्रियरूपं तत्परित्यागरूपमेव कर्मादिपरवस्तुमूर्छात्यागेनैवैतद्व्रतं भावतः स्यात् । यतः—'मुच्छा परिग्गहो वुत्तो' इत्यादिवचनात् । २ ।

षड्दिक्परिमाणरूपं व्यवहारतः षष्ठं व्रतं । १ । नारकादिगतिकर्मगुणान् विज्ञाय तेभ्य उदासीनत्वं सिद्धावस्थासूपादेयत्वं तन्निश्चयतः षष्ठं । २ ।

पूर्वोदितभोगोपभोगे वस्तुपरिमाणं तद्व्यवहारतः सप्तमं । १ । तथा व्यवहारनयमतेन कर्मणां कर्त्ता भोक्ता च जीव एवास्ति । निश्चयमाश्रित्य कर्मणां कर्तृत्वं कर्मण्येवास्ति, यतः—मनोवाक्काययोगा एव कर्त्तारः कर्मणां संति, भोक्तृत्वमपि योगेष्वेवास्ति । अज्ञानेन जीवस्योपयोगो मिलति, परमार्थवृत्त्या तु जीवः कर्मपुद्गलेभ्यो भिन्न एव, ज्ञानादिगुणानां कर्त्ता भोक्ता च । भरुचलतुल्याः, 'अनेकजगज्जीवैरनेकशः परिभुज्य परिभुज्योच्छिष्टभोजनमिव भुक्तमुक्ताः पुद्गलाः सन्ति तेषां भोगोपभोगत्वेन ग्रहणं न तव जीवस्य धर्मः' इत्यादि चिंतनं तन्निश्चयतः सप्तमं व्रतं । २ ।

प्रयोजनं विना पापारंभणं, तस्य विरतिस्तदनर्थदंडविरमणव्रतं व्यवहारमाश्रित्य । १ । मिथ्यात्वादि

५७ कर्मवंधहेतुभिः कर्मवंधो भवति, तद्वंधं स्वात्मीयभावेन जानाति, ततो विरमणं तन्निश्चयतोऽनर्थ-
दंडविरमणव्रतं । २ ।

आरंभकार्यं मुक्त्वा यत्सामायिककरणं तद्व्यवहारतः सामायिकं ज्ञेयं । १ । ज्ञानादिमूलसत्ताधर्मैः
सर्वजीवांस्तुल्यान् विज्ञाय सर्वेषु समतापरिणामस्तन्निश्चयतो नवमं व्रतं । २ ।

नियमितक्षेत्रे स्थितिस्तद्व्यवहारतो देशावकाशिकं । १ । यच्च श्रुतज्ञानेन षड्द्रव्याण्युपलक्ष्य पंच-
द्रव्येषु हेयबुद्धिर्ज्ञानमयजीवस्य ध्यानं च तन्निश्चयतो देशावकाशिकं व्रतं । २ ।

अहोरात्रं सावद्यव्यापारं मुक्त्वा स्वाध्यायध्याने प्रवर्त्तनं तद्व्यवहारतः पौषधव्रतं । १ । स्वात्मनो
ज्ञानध्यानादिभिः स्वगुणैः पोषणं पुष्टिकरणं तन्निश्चयतः पौषधव्रतं । २ ।

पौषधपारणेऽथवाऽजस्रं साधुश्रावकाणामतिथिसंविभागं कृत्वा भोजनं तद्व्यवहारतोऽतिथिसंवि-
भागव्रतं ।१। आत्मनः परेषां च ज्ञानादिदानं पठनपाठनश्रवणश्रावणादिकं तन्निश्चयतो द्वादशं व्रतं । २।

इत्थमिमानि व्रतानि निश्चयव्यवहाराभ्यां सहितानि मोक्षदानि पंचमगुणस्थानवर्त्तिश्राद्धानां भवंति,
तथा निश्चयं विना व्यवहारस्तु स्वर्गसौख्यकृदेव न मोक्षदः । यतः—व्यवहारचारित्रं साधुश्राद्धव्रतं
भावव्यानामपि समेति, तेन न निर्जरा स्यात् तस्मान्निश्चयेन सह तत्पालनीयं । यतः—

"निच्छयनयमग्गो मुक्खो, ववहारो पुन्नकारणो वुत्तो ।
पढमो संवररूवो, आसवहेऊ बिउं भणिउं" ॥ १ ॥

निश्चयनयस्तु मोक्षमार्गः ज्ञानसत्तारूपः, व्यवहारस्तु पुण्यहेतुः शुभाशुभकर्माश्रवः स्यात्, अशुभव्य-
वहारात्पापाश्रवश्चेति । अत्राह परः—'ननु व्यवहार आश्रवहेतुरनंतरगाथोक्तः, तर्हि वयं न ग्रही-
ष्यामः'। उच्यते—'भोः शिष्याः! विना व्यवहारं निश्चयज्ञानं न स्यात्, अथवा जिनाज्ञाभंगश्च। यतः—

"जइ जिणमयं पवज्जह तो मा ववहारनिच्छए मुयह। इक्केण विणा तित्थं, छिज्जइ अन्नेण उ तच्चं"॥१॥

व्यवहारत्यजनेन निमित्तकारणं सर्वं निष्फलं स्यात्, तत उपादानकारणस्यापि कथं सिद्धिः स्यात्। अतो द्वावेव प्रमाणं, निश्चयेन सहापरः प्रमाणं। सुवर्णालङ्कारसमो निश्चयः, व्यवहारस्तु उपधानकाल-णादिसमः, अथवा किणजोतिकलाक्षादिद्रव्यतुल्यः। अत्रोपनयस्तु स्वयं कार्यः।

इत्थमेकैकं व्रतं द्वाभ्यां द्वाभ्यां प्रकाराभ्यां ज्ञात्वा श्राद्धैर्व्रतग्रहणे रुचिः कार्येति तत्त्वमागमसारमं-गीकृत्य लिखितमस्ति॥

॥ इत्यब्ददिनपरिमितहितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रंथस्य वृत्तौ द्वादशस्तंभे शताधिकषट्सप्ततितमं व्याख्यानम्॥ १७६॥

---

## ॥ शताधिकसप्तसप्ततितमं व्याख्यानम्॥ १७७॥

अथेमानि व्रतानि बलादपि देयानीत्याह—

प्रसह्येनाप्यसौ धर्मः श्रावकाणां प्रदीयते। यथा पोट्टिलदेवेन, बोधितस्तेतलेः सुतः॥ १॥

स्पष्टः। संबंधस्त्वयं—

त्रिवल्लीपुरे कनकरथो नृपः, तस्य तेतलिसुतः सचिवः। तन्नगरे श्रेष्ठिपुत्र्यां मोहितः, तां पोटिलाख्यां स व्युवाह। अथ राजा राज्यलुब्धो जातं जातं तनूजवं हंति। ततः कमलावती राज्ञी साधाना आप्त-दास्यास्येन सचिवं जगौ—'ममैकं पुत्रं कथंचनापि रक्ष, यथापदि सहायो जायते'। तद्वाक्यं धीसखः प्रतिपेदे। कियति काले गते पोटिलाकमलावत्यौ समं पुत्रीपुत्रौ विधिनियोगतः सुषुवाते। मंत्री आप्तया प्रेष्यया तयोः परावर्त्तं व्यधापयत्। ततो राज्ञा पृष्टाः परिजनाः सुतां जगुः। धीसखः कुमारस्य कनक-ध्वज इति नाम चक्रे। क्रमान्नृपे मृते सचिवेन देव्या च स राज्येऽभिषिक्तः। कृतज्ञत्वाद् राज्यकार्येषु सर्वत्र सचिवमेव न्ययोजयत्। अथ पत्युः केनापि हेतुनाऽनिष्टा पोटिला जज्ञे। सा साध्वीर्न्यो वशी-करणं पप्रच्छ। तान्निर्धर्मदेशनया बोधमापिता। दीक्षार्थिनी स्वपतिमापप्रच्छे। सोऽपि जगाद तां—'यदि बोधं ददासि मामत्रैत्य व्रतेन स्वर्गता चेत्' सा तत्प्रतिपद्य दीक्षामादाय दिवमासदत्। ततो ज्ञानेन ज्ञात्वा स्वप्रतिज्ञां सत्यां कर्त्तुं स सुरः सचिवं प्रेरयामास व्रते। स विषयलोलुपो धर्मद्वयमध्ये एकमपि नेच्छति। 'व्यसनसंपातं विना नायं बोधमवाप्स्यति' इति ध्यात्वा सोऽन्यदा नृपं तस्मै कुपितमदर्शयत्। यदा नृपं नंतुं गतस्तदा नृपस्तं प्रति मुखं न दर्शयामास। स खेदपरो नगरान्निर्गत्य तालपुटं द्वेकमज्ञ-दयत्, तत्पीयूषमभूत्। ततो जलज्वलनप्रवेशो रज्जुग्रहो गिरिपादपशीर्षतः पतनं शस्त्रघातादि सर्वम-रणप्रकारा निरर्थका बभूवुः। गच्छतस्तस्य पृष्ठतो मत्तेभो धावितः, व्याकुलचित्तः सचिवो गर्त्तायामपत-

न्मूर्छां च प्राप । लब्धचैतन्यः प्राह—'हा पोटिले ! क गच्छामि शरणं ?' । ततः कृपया पोटिलसुरः प्रकटीभूयोवाच—'भोः तेतलिसुत ! बोधितोऽपि न बुध्यसे, तेन मया इदं निर्ममे' । मंत्री प्राह—'अज्ञानतो मया न ज्ञातं, अतः परं स्तोककालं श्रावकधर्मं प्रपाल्य श्रमणत्वं चरिष्यामि, परं भूपालं तोषय' । तेन तथा कृतं । तुष्टोऽथ नृपतिस्तत्रैत्य मंत्रिणं क्षमयामास स्वागसं । ततो धीसखः स्वगृहे एत्य दानादिधर्मं कृत्वा द्वादशव्रतानि सम्यक् प्रपाल्यैकदा गुरुं नत्वा प्राग्भवं पप्रच्छ । गुरुराह—'महाविदेहे पुंडरीकिण्यां पुर्यां महापद्मनृपोऽभवत् । तत्र गुरुदेशनया प्रबुद्धः स चरणमग्रहीत् । पूर्वधरो मुनिर्मासानशनतो महाशुक्रे सुरोऽभवत् । ततश्च्युत्वा तेतलिमंत्रिणः पुत्रस्तेतलिसुताख्यस्त्वं जातः' । इति श्रुत्वा जातिस्मृत्या प्राक्पठितपूर्वाणि स्मरन् शुद्धचारित्रमंगीचकार । क्रमेण केवलं प्राप्याव्ययपदं प्राप ।

अनेकयुक्तिभ्य उपासकानां, प्रबोधयंति प्रवरा मुनींद्राः ।
श्लाघ्या जगत्यां ननु पोटिलावत्, तन्वंति ते शं रविकांतिवद्धा ॥ १ ॥

॥ इत्यब्ददिनपरिमितहितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रंथस्य वृत्तौ
द्वादशस्तंभे शताधिकसप्तसप्ततितमं व्याख्यानम् ॥ १७७ ॥

## ॥ शताधिकाष्टसप्ततितमं व्याख्यानम् ॥ १७८ ॥

अथ प्राप्तनृभवानां शिक्षोपदेशमाह—

यथाऽन्यायपुरे रत्नचूडो न मुग्ध ( मूढ ) तां गतः । मोहादिबंधने तद्वद्, धर्मधीर्जिने लुभ्यते ॥ १ ॥

स्पष्टः । भावार्थस्तु ज्ञातेन गम्यः, तच्चेदं—

इह भरतक्षेत्रे ताम्रलिप्त्यां रत्नाकरश्रेष्ठी । तस्य पत्नी सरस्वती । तयोः पुत्रो रत्नचूडो नगरोपवनादिषु स्वैरं विहरति स्म । अन्यदा हट्टमार्गे गच्छता तेनाभिमुखागता सौभाग्यमंजरी वेश्या स्वस्कंधादिना कथंचन दूना, सा तं प्राह- 'यस्त्वं विपुलेऽपि चतुष्पथे स्वाभिमुखमागच्छंतीं मां न पश्यसि, परं तव धनमदः कर्तुं न युज्यते, यतः—

"पित्रोपार्जितवित्तेन, विलासं कुरुते न कः । स श्लाघ्यो यः स्वयं लक्ष्मीमुपार्ज्य विलसत्यहो" ॥ १ ॥

एवमुक्त्वा गणिका स्वस्थानं ययौ । तच्छ्रुत्वा रत्नचूडो मनस्येवमचिंतयत्—'अस्या वचः सत्यं, ननु मया करणीयं' इति स विषादमनसा गेहं प्राप्तः । तथाविधं तं दृष्ट्वा जनकोऽवदत्—'वत्स ! तव किमसंपूर्णं, येन विच्छायमुखो दृश्यसे ? तद् ब्रूहि त्वदीप्सितं हेलया पूरयिष्यामि' । सोऽथाख्यत्—'तात ! अर्थोपार्जनहेतवे स्वदोर्भ्यां स्वबलेन च त्वदनुज्ञया देशांतरे गंतुमिच्छामि' । 'वत्स ! नवनीतस्पर्शस्पर्शेन्द्रियस्त्वं देशांतरे गत्वा किं करिष्यसि ? । यतः—

"इन्द्रियाणि वशे यस्य, स्त्रीभिर्यो न विलुभ्यते। वक्तुं यश्च विजानाति, याति देशांतराणि सः ॥ १ ॥
या मयोपार्जिता लक्ष्मीः सा त्वत्सत्कैव'। एवमुक्तोऽप्यसौ तमाग्रहं न मुमोच। ततः पित्राप्यनुज्ञातः। बहुप्रवहणेषु नानाविधबहुमूल्यक्रयाणकं निक्षिप्य प्रगुणीबभूव। ततस्तस्मै श्रेष्ठी शिक्षां ददौ—'वत्स! त्वयाऽनीतिपुरे न गंतव्यं, तत्रान्यायप्रियो नृपः, अविचारकोऽमात्यः, गृहीतग्राहकः श्रेष्ठी, यमघंटा गणिका, द्यूतकारचौरपारदारिकाद्या अनेकशः संति। अविज्ञातस्वरूपो यस्तत्र याति, तस्य सर्वस्वं तत्रैकगृह्यते, तत्पुरं मुक्त्वाऽन्यत्र यदृच्छया त्वं गच्छेः' इत्यादितद्दत्तां शिक्षां प्रतिपद्य शुभेऽह्नि कृतमंगलोपचारो यानपात्रे समारूढश्चलितः। अनेकग्रामनगरद्वीपेषु पर्यटन् भवितव्यतानियोगेन यत्रानीतिपुरं तत्राजगाम। तन्निवासिनो धूर्तास्तं पोतमायातं दृष्ट्वा हृष्टास्तस्याभिमुखमाजग्मुः। तान् वीक्ष्य शंकितो रत्नचूडो वेलाकूलमुपागतं कंचिन्नरं पृच्छति स्म—'भद्र! अस्य द्वीपस्य किं नाम?'। सोऽवदत्—'निम्नकूटाख्योऽयं द्वीपः, अनीतिपुरमेतत्' इति तेन पुंसा निवेदिते श्रेष्ठिसुतो दध्यौ—'दैवात् पित्रा निषिद्धस्थलेऽहमागतः, नहि सुंदरं संजातं, परं मे वांछितो लाभोऽत्र भविष्यति, यतः—

"प्रशस्तशकुना यत्रानुकूलपवनस्तथा। उत्साहो मनसश्चैतत्, सर्वं लाभस्य सूचकम्" ॥ १ ॥

ततः श्रेष्ठिसुतो यानात्समुत्तीर्य वेलाकूले निवासमकरोत्। नगरतस्तत्र चत्वारो वणिज आययुः, ते स्वागतप्रश्नपूर्वकं तमित्यूचुः—'वयं तावकीनं क्रयाणकं ग्रहीष्यामः, अस्य हि मूल्यं यत्तत् त्वयोदितैर्वस्तुभिर्निजं नगरं गच्छतस्तव तं पूरयिष्यामः'। 'एवमस्तु' इति तेनोक्ते तत्र क्रयाणकं सर्वं विभज्य तैर्भूत्वैः

स्वस्वगृहेषु निन्ये । ततः सपरिकरो वस्त्राद्याडंबरांचितः सोऽनीतिपुरं द्रष्टुं चचाल । अत्रांतरे कश्चित्कारुः स्वर्णरूप्यादिमंडितमुपानद्युगलं तस्योपढौकयामास । तस्मै तांबूलं दापयित्वा श्रेष्ठिपुत्रोऽवदत्—'त्वामहं हर्षयुक्तं करिष्यामि' इत्युक्त्वाऽग्रेऽगमत् । ततः कश्चिदेकाक्षः कितवस्तमित्युवाच—'भोः श्रेष्ठिसुत ! मया सहस्रेण द्रव्येण स्वनेत्रं ग्रहणके त्वत्पितुः पार्श्वे मुक्तं, तत्त्वत्तोऽहं ग्रहीष्यामि, परं तद्धनं त्वं गृहाण' । श्रेष्ठिपुत्रो दध्यौ—'अहो ! अघटमानं वदति, तथाप्युपस्थितं वित्तं स्वायत्तं करोमि, पश्चाद्यथोचितमुत्तरं दास्यामि' एवं विचिंत्य तद्धनं गृहीत्वा तमभाषत—'त्वया ममावासे आगंतव्यं' । ततः पुरत आयांतं श्रेष्ठिनंदनं दृष्ट्वा चत्वारो वंचका नरा एवमन्योऽन्यं जजल्पुः—तत्रैकः स्माह—'समुद्रस्य नीरमानं गंगायाः सिकतामानं ज्ञानिनो जानन्ति पुनः स्त्रियो हृदयं न जानंति केऽपि' । द्वितीयोऽवोचत्—'बहवः स्त्रीहृदयस्य वेत्तारः संति, परं तद्विशारदः कोऽपि नास्ति' । तृतीयः स्माह—'पूर्वाचार्यैर्भाषितं नासत्यं, परं कैश्चित्सर्वज्ञैरपि विज्ञायते' । अथ चतुर्थेन प्रोक्तं—'एष श्रेष्ठिसुतः सर्वमेतद्विजानाति' । ततश्चान्ये ऊचुः—'सुरापगा दूरे वर्त्तते, त्वं रत्नाकरजलस्य मानं श्रेष्ठिसुतपार्श्वे कारय' एवं हठात्तेन प्रोत्साहितः श्रेष्ठिसुतोऽपि तमर्थमंगीकृतवान्, तदा तैरमुना सह कराहतिर्विदधे—'यदि त्वमेवं कर्त्तासि तदा नो लक्ष्मीस्तवायत्ता, अन्यथा वयं चत्वारोऽपि तव श्रियं ग्रहीष्यामः' ओमित्युक्त्वा सोऽपि पुरतश्चचाल । स एवं चिंतयति—'एतेषां कार्याणां निर्वाहः कथं भविष्यति ?, तस्मादनेकनरचित्तरंजनकर्मठाया वारांगनाया गृहे याम्यहं' । तत्र गतस्यास्याभ्युत्थानाभ्यंगोद्वर्त्तनस्नानभोजनादिक्रिया विदधे

तया, ततः संध्यासमये वासगेहे शयनीये मनोहरे तया सह निषसाद । यावत्सा विदुषामुचितां गोष्ठीं प्रकर्त्तुमारेभे, तावत्तेन स्वीया वार्त्ता ख्याता—'अयि ! त्वं स्वपुरचेष्टितं वेत्सि, एतेषां विवादानां ममोत्तरं वद, निर्वाहितायां चिंतायां हे सुभ्रु ! त्वया सहाहं रंगवार्त्तां करिष्यामि' । सा तं प्रत्यूचे—'भोः त्वं शृणु—दैवादिह यः कश्चिदिभ्यः समायाति तस्य सर्वस्वमेतैर्धूर्त्तजनैर्गृह्यते । तत एको ऽभ्यस्यांशो महीपतेर्दीयते, द्वितीयः सचिवस्य, तृतीयः श्रेष्ठिनः, तुर्यांशस्तलारक्षकस्य, पंचमांशः पुरोधसश्च, मन्मातुर्यमघंटायाः षष्ठांशो दीयते । सर्वेऽप्यनाचारप्रियाः, तदग्रे किं क्रियते ? तथापि मन्मातुः समीपे त्वां नेष्यामि । तत्रोपविष्टेन त्वया प्रश्नोत्तरं श्रोतव्यं' इत्याख्याय सा तस्य स्त्रीवेषं पर्यधापयत् । ततोऽक्कायाः समीपमागत्य प्रणम्यासीना । ततः कुट्टिनी जगाद—'वत्से ! कस्येयं सुता ?' । साख्यत्—रूपवतीनाम्नी श्रीदत्तश्रेष्ठिनः पुत्री मम मिलनायागात्' । अत्रांतरेऽक्काया अंतिके यैः रत्नचूडस्य सकलं क्रयाणकं जगृहे, ते वणिजः समायाताः । तैः स्वीकृतवृत्तांते कथिते कुट्टिन्युवाच—'भवतां व्यर्थमनोरथैर्हीनिर्भविष्यति न पुनः कश्चिल्लाभो दृश्यते, तदिष्टवस्तुना कथं यानं पूर्यते ? इच्छा त्वनेकविधा स्यात्, यदि भवन्निरसो मशकास्थिभिर्यानं पूर्णं कारयति, तदा यूयं किं कुरुथ ?' । ते जजल्पुः—'तस्येदृग् धीप्रपंचः कुतो भविष्यति ? बालकत्वात् प्राग्वयस्त्वाच्च' । कुट्टिनी जगाद—'बालोऽपि कश्चित्स्यात्सुधीः कश्चिद् वृद्धोऽपि अपंडितः' इति श्रुत्वा ते स्वौकसि ययुः । अथ विकसन्मुखः कारुकक्कामित्यूचे—'अस्मिन् पुरे कश्चिच्छ्रेष्ठिपुत्रः समागतः, तस्योपानद्युग्मं वर्यं मयोपढौकितं, अमुना 'त्वां हृष्टं करिष्यामि'

इत्युक्तोऽस्मि, ततस्तस्य सर्वस्वे गृहीते मम प्रहृष्टता भाविनी'। अक्काऽवोचत्—'रे कारो! यदाऽसौ ते नरेंद्रस्य तनयोत्पत्तिं निवेद्य हृष्टो न वेति कथयति तदा तव का गतिः?'। सोऽपि श्रुत्वा ययौ। ततः स एकदृग्द्यूतकार एत्यात्मधूर्त्तभावार्थं कुट्टिन्यग्रे न्यवेदयत्। तदा यमघंटा विहस्योचे—'यत्त्वया स्वधनं तस्य दत्तं तत्साधु न कृतं'। सोऽब्रवीत् 'कथं?'। भूयोऽक्काऽन्यधात्—'कस्याप्यन्यस्य देहिनोऽक्षि यदाऽयं तवाग्रे ढौकयिष्यति, तदा भवान् 'मामकीनं नेत्रं नेदं' इति कथयिष्यति, तच्छ्रुत्वा सोऽपि त्वामेवं वदिष्यति—'मत्पितुः पार्श्वे त्वया न्यासीकृतं त्वत्सत्कमेकं नेत्रं, द्वितीयं तव पार्श्वेऽस्ति, इमे उभे अपि तुलायामारोप्येते, तुल्ये जाते त्वया ग्राह्ये नान्यथा' तदा त्वं किं करिष्यसि?'। कितवो जगाद—'तवेदृशं बुद्धिकौशलं, कुतस्तस्य?', ततस्तस्य सर्वस्वं खलु मम करगतं ज्ञेयं' इत्युक्त्वा सोऽपि प्रययौ। ततस्ते वंचका नरा एत्य तस्याः स्वां कथां कथयामासुः। साऽवोचत्—'भवतामपि अस्मिन् प्रपंचे लाभं न कञ्चित् पश्यामि, कुतः? स एवं वदिष्यति—'मया समुद्रनीरस्य मानं सर्वथा कार्यं, युष्माभिर्निम्नगातोयं पृथक्कार्यं' ततस्तद्वचनं कर्तुमशक्ता हीनवादिनो यूयं गृहसर्वस्वहरणं लप्स्यध्वे'। तेऽपि म्लानमुखाः स्वस्थानं ययुः। श्रेष्ठिनंदनस्तयोक्तप्रत्युत्तराञ् श्रुत्वा चित्ते बभार। ततस्तत्स्थानात् समुत्थाय रणघंटया समं तद्गृहमाययौ, तां चानुज्ञाप्य निजाश्रयेऽगात्। ततश्चाक्कोक्तोपायेन सर्वकार्याणि साधयामास, भांडग्राहिवणिजां पार्श्वाच्च, वार्ध्यंबुमानकारिभ्योऽपि बलाच्चतुर्लक्षधनमग्रहीत्। तेन व्यतिकरेणैलापतिरप्यवोचत्—'अहो! अस्य पुंसोऽद्भुतं माहात्म्यं, येनास्मद्धूर्त्तनगरस्यापि वित्तं

[illegible] । विस्मितो नृपतिस्तमाकार्य जगाद—'भो भद्र! तुष्टोऽस्म्यहं, तव किं करोमि समीहितं?' । सोऽपि नृपात्तां गणिकां ययाचे । राज्ञा समादिष्टा सा तस्य गेहिनी जज्ञे । ततः प्राप्तप्रस्तावोऽसौ क्रयाणकेन यानं संपूर्य निजां नगरीमगात् । रत्नचूडः पित्रोश्चरणद्वयं प्राणमत् । ततः पित्रे स्ववृत्तांतं न्यवेदयत्, तच्छ्रुत्वा श्रेष्ठी हृदयेऽधिकं प्रमोदं बभार । ततः सा सौभाग्यमंजरी वेश्या तं द्रष्टुमागता, तेनैवं प्रजल्पिता—'भद्रे! त्वदुपदेशेन देशांतरे गत्वा मयेयं कमलोपार्जिता । भद्रो राज्ञोऽनुज्ञया साप्यस्य गेहिनी जज्ञे । ततोऽन्यान्यपि कलत्राणि परिणीय स द्रव्याधिक्येन त्यागभोगौ चकार । चिरं भोगश्रियं भुक्त्वा निजपुत्रेषु गृहभारमारोप्य सद्गुरोः पार्श्वेऽहिंसामूलं जिनधर्मं श्रुत्वा वैराग्येण प्रवव्रजे, प्रव्रज्यां च पालयित्वा समाधिनांते विपद्य स्वर्गं गतः, क्रमान्महानंदपदं ययौ । अत्रायमुपनयः—'भव्यजीवो वणिक्सुतः, तस्य जनको धर्मदायको गुरुः, साधर्मिका वेश्यावचःसमाः, तेभ्यो जनितोत्साहत्वेन पुण्यलक्ष्म्या उपचयं कर्तुं सोद्यमी भवेत्, गुरुणा मूलद्रव्यं चरणमर्पितं, अनीतिपुरनिषेधश्चानीतिनिषेधः, संयमं यानपात्रं, तेन भवोदधिस्तरणीयः, भवितव्यतानियोगात्प्रमादाच्चानीतिपुरगमनं कुप्रवृत्तिसंचरणं, अन्यायभूपो मोहः, भांडग्राहिवणिक्तुल्याश्चत्वारः कषायाः, विषयतृष्णा च सा वेश्या, जंतोः सुमतिदायिनी पूर्वकृतकर्मपरिणतिः साऽक्का, तत्प्रभावेण देहभृत् सर्वमशुभमुल्लंघ्य धर्ममार्गं जन्मस्थितानिव पुनरानीयते' इत्यादि यथायोग्यं मनीषिभिरुपनयः करणीयः ।

एतत्प्रबंधोपनयं विचार्य, अज्ञानतो जातविकारजावम् ।
आनीयते धर्मनि ( वि ) धौ पुनः स, तेनैव यातीत्यनघं नृजन्म ॥ १ ॥

॥ इत्यब्ददिनपरिमितहितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रंथस्य वृत्तौ
द्वादशस्तंभे शताधिकाष्टसप्ततितमं व्याख्यानम् ॥ १७८ ॥

—→∘←—

## ॥ शताधिकनवसप्ततितमं व्याख्यानम् ॥ १७९ ॥

अथेमान्यल्पकालं धृतान्यपि सौख्यदानीत्याह—

अल्पकालं धृतान्येतद्व्रतानि सौख्यदानि हि । अतः प्रदेशिवद् ग्राह्याण्येतानि तत्त्ववेत्तृभिः ॥ १ ॥

स्पष्टः । संबंधस्त्वयं—

आमलकल्पोद्याने समवसृतं श्रीवीरं नत्वा नवोत्पन्नः स्वर्गादेत्य सूर्याभो व्यजिज्ञपत्—'गौतमादीनां नवनाट्यविधिदर्शनाय ममानुज्ञां ददातु' इति तेन त्रिवारं विज्ञप्तः स्वामी मौनमवलंबयत्, तत्सुरेणा-निषेधयन्ननुमतिपर इत्यबोधि । तत ऐशानीं दिशमाश्रित्य देवो निजभुजद्वयादष्टशतं देवान् देवीश्च विकृत्य द्वात्रिंशद्विधं ज्यं दर्शयित्वा महर्द्धिकः सूर्याभो विद्युदंरु इवोत्पुत्य पुनः स्वर्गं ययौ । अथान्यलोकबोधवि-धित्सुर्गौतमो वीरं पप्रच्छ—'कोऽयं देवः ? इयती श्रीश्च कथं ?' । ज्ञातसुतः प्राह—हे गौतम ! श्वेतम्ब्यां नास्तिकः

प्रदेशी नृपः, सूर्यकांता तद्भार्याऽस्ति, सूर्यकांतो नंदनश्च । तन्नृपस्य चित्रनामामात्यः, सोऽन्यदा राज-
कार्येण जितशत्रुनृपांतिके श्रावस्त्यां ययौ, तत्र केशिनं गणेशं प्राणमत् । स चतुर्ज्ञानिपार्श्वाद् गृहिव्रतानि
प्रपद्य श्वेतम्ब्यां च विहाराय तमभ्यर्थ्य गृहं ययौ । अथ विहरंतः केशिसूरयः क्रमात्तेतम्ब्युद्यानेऽवात्सुः ।
उद्यानपालकात्तदागमनं विज्ञाय मंत्री दध्यौ—'मयि सचिवे सति मत्स्वामी नरकं गंता, तन्नाहं, अतो-
ऽस्य केनचिन्मिषेण गुरोर्गिरं श्रावयामि, नृपप्रसादानामनृणो भवामि च' इति ध्यात्वा वाह्यवाहनदंभेन
चित्रमंत्रिराट् प्रदेशिनं तं प्रदेशं निन्ये । श्रांतस्तरोश्छायाविश्रांतो दूरतस्तद्देशनां श्रुत्वोद्वेगं वहन् मुख-
मर्कटिकां कुर्वन् मंत्रिणं बभाषे—'किमसौ रारटीति आर्त्तवत् ?' । 'राजंस्तदंतिकगमनान्निश्चयो भावी'
इति तेनेत्थं निकटं नीतः । इति देशनां स शुश्राव—
"मूढास्तत्त्वमजानाना, नानायुक्त्यर्थपेशलम् । असद्वासनया जन्म, हारयंति मुधा इहा" ॥ १ ॥
इत्यादि श्रुत्वा मुनीशं प्रति वदति—'भो मुनीश ! परलोकः पापं पुण्यं जीवश्च नास्ति । कथं ? यतो
मदीयः पिता महापापी पापं कृत्वा नरके गतोऽभूत् ( भावी ), तस्य पितुः पुत्रोऽहं वल्लभः, कथमि-
हागत्य न कथयति मम दुःखं ? 'पुत्र ! त्वया पापं न विधेयं' इति हेतोः परलोको न, पापं च न १ । मम
माता दयापरा स्वर्गं गताऽभूत् (भविष्यति) स्वर्गस्य सौख्यं कथमागत्य न कथयति ? 'हे पुत्र पुण्यं विधेयं'
इति परलोको न, पुण्यं च न २ । स्थगितकुंभिकाप्रक्षिप्तचौरो मृतः, विलोकिता कुंभिका, परं छिद्रं
न तर्हि जीवः कथं निःसृतः ३ । शरीरे कृमिजीवा दृष्टाः, परं प्रवेशछिद्रं न, तर्हि प्रवेशको जीवो न

४ । सर्वे जीवास्तुल्या न, केषांचिच्छरो दूरे याति केषांचिदासन्ने पतति, कथं सदृशा एव ? ५ । भो आचार्य ! एकश्चौरो जीवन् मृतश्च तुलारूढः सदृशः, स जीवन् कथं न गुरुः, मृतश्च कथं न लघुः ? इति हेतोर्जीवचिंता वृथा ६ । पुनरपि भो आचार्य ! एकश्चौरः खंडीकृतो विलोकितः, परं कस्मिन्नपि शरीरप्रदेशे जीवो न दृष्टः, इति ७ । भोः ! यथा प्रत्यक्षेण घटादिपदार्था दृश्यंते तथा जीवो न ८ । भोः ! कुंथूनां हस्तिनां च देहे तुल्यो जीवः कथं ? कुंथुशरीरं लघुतरं करिशरीरं च गरीयः ९ । भोः ! कुलक्रमायातं नास्तिकमतं कथं मुच्यते ?' १० इति प्रदेशिनृपप्रश्नाः । अथ गुरुः प्रत्युत्तरं ददाति—'भो राजन् ! त्वदीया प्रिया परनरसंगिनी दृष्टा, स नरस्त्वया धृतो बद्धो मारणाय तलारक्षकाणामर्पितः, सोऽपि कथयति—'भो राजन् ! स्वगृहे स्वपुत्रमिलनाय मुंच' त्वया तद्वचः क्रियते ? । 'हे आचार्य ! सापराधिवचः कथं क्रियते ?' तर्हि परमाधार्मिकैस्तव मिलनाय त्वत्पिता कथं मुच्यते ? १ । संचारके स्थितोंत्यजः सज्जास्थितं पुष्पार्चितं नर्त्तकीमल्लगीतगानकलितं त्वामाकारयति, हे नृप ! त्वयांत्यजसमीपे गम्यते ?' । 'हे मुनीश ! कथं तत्र गम्यते ?' तर्हि सज्जासदृशः स्वर्गलोकः, तत्र स्थिता त्वदीया माता प्रबलसौख्यकलिता कथं संचारकसमे नरलोके तव बोधाय मिलनाय वा समेति ? २ । भूमिगृहे वादितशंखस्य नादो बहिः श्रूयते परं छिद्रं न दृश्यते, तथा कुंभिकाजीवस्वरूपं ३ । लोहगोलकोऽग्नौ मुच्यते तदाग्निमयो भवति परमग्निप्रवेशछिद्रं न दृश्यते, तथा कृमिप्रवेशछिद्रं न ४ । सुकोमलो बालः, कठिनो वृद्धः, ताभ्यां क्रमेण मोचितशर आसन्ने दूरे च याति, तर्हि सुकोमलकठिनदे-

र्द्वयोर्विशेषः ५। वायुपूरितो दृतिर्न गुरुः, वायुरहितश्च न लघुः, तथा तुलारूढश्चौरजीवो देहश्च ६। ततो नृप ! अरणिदारुणि अग्निर्विद्यते परं खंडीकृत्य विलोक्यते तदा न दृश्यते, तथा तनौ जीवोऽस्ति, सर्वज्ञैर्दृश्यते ७। यथा वायुना पत्रं चलति परं प्रत्यक्षेण वायुर्न दृश्यते, तथा जीवप्रदेशयोगेन शरीरचलनं भवति परं प्रत्यक्षेण जीवो न विलोक्यते ८। यथा प्रदीपो महागृहं प्रकटयति, स्थाल्यां मुक्तः स्थाल्युद्योतकः, एवं जीवोऽपि लघुबृहच्छरीरं प्राप्येति ९। हे नृप ! परंपरागताधर्ममत्यजन् पुमान् विपदां पदं स्यात्, लोहभारवाहिवत्। यथा—

'केचिच्चत्वारः सुहृदो लाभार्थिनो देशांतरे गच्छंतः कचिल्लोहाकरं प्राप्य लोहं जगृहुः। ततोऽग्रे चलंतो रूप्याकरं दृष्ट्वा त्रयस्तु लोहं विक्रीय रूप्यं जगृहुः, चतुर्थस्तु कदाग्रहित्वाल्लोहं नामुंचत्। क्रमेणैवमग्रे तारं विक्रीय स्वर्णाकरतः स्वर्णं लात्वा चलंतस्त्रयस्तु रत्नाकराद्रत्नानि कनकं विक्रीय जगृहुः, ते सुखिनो जाताः, चतुर्थस्तु आजन्म दुःखितामवाप। एवं लोहभारवाहकवत् परंपरागतमिथ्यात्वमत्यजन् दुःखी स्यात्। इमान्युत्तराणि अश्वारूढः सन् श्रुत्वा धर्मं प्राप। ततो विनयेन नत्वोवाच—'प्रभो ! प्रत्यूषेऽहं युष्मान्नत्वाऽविनयं क्षामयिष्ये'। ततः प्रभाते कोणिकवन् महामहेन गुरुं ननाम, द्वादशव्रतानि जग्राह। गुरुः प्राह—'हे नृप ! पुष्पितफलितवनारामवत् पूर्वमन्येषां दाता त्वमभूः, अधुना धर्मं प्राप्य तेषामदाता न भाव्यं, शुष्कवनवदरमणीयत्वमनुचितं, अस्माकमंतरायो धर्मापभ्राजना च स्यात्'। नृपः प्राह—'स्वामिन् ! सप्तसहस्रग्रामाणां चतुरो भागान् करिष्येऽहं।

एकेन सैन्यवाहनसंतोषः, द्वितीयेनांतःपुरपोषः, तृतीयेन कोष्ठागारपुष्टिः, चतुर्थेन दानशालादिधर्मकरणं' इत्थं धर्मं स्वीकृत्य गुरुं नत्वा गृहमाजगाम, श्रमणोपासको बभूव। कामभोगेष्वनासक्तं तं विज्ञाय सूर्यकांता भार्या नृपहननोपायं चिंतयंती सूर्यकांतपुत्रमाह—'त्वत्पिता देशराष्ट्रादिचिंतारहितः श्रावकीभूय विचरति, अतस्त्वं शस्त्रमंत्रविषाग्निप्रयोगेण हत्वा राज्यं कुरु, कथितपत्रस्य निष्कासनं न्याय्यं' श्रुत्वेति स मौनं बभार। ततः सा दध्यौ—'नूनमयं पुत्रो मंत्रभेदं करिष्यति' इति ध्यात्वाऽशनेषु छलं लब्ध्वा विषं प्रक्षेप्य भोजनमकारयत्। तेन वेदना प्रादुर्भूता। स्त्रीकृत्यं ज्ञात्वाऽपि न चुकोप। ततः पौषधागारे दर्भसंस्तारके आरुह्य पूर्वाभिमुखः शक्रस्तवमुक्त्वा मनसि स्वधर्माचार्यं स्मृत्वा यावज्जीवं सर्वतः पापस्थानानि व्युत्सृज्य समाधिना कालं प्राप्य प्रथमस्वर्गे सूर्याभविमाने चतुःपल्यायुर्देवोऽभूत्। एकोनचत्वारिंशद्दिनानि यावद् व्रतानि धृत्वा सार्द्धद्वादशलक्षयोजनायामविस्तृते विमाने महर्द्धिको देवो जातः। त्रयोदशषष्ठतपश्चरितानंतरं त्रयोदशे पारणके संस्तारके संस्तारः कृतस्तेन।

स एष मत्वाऽवधिना स्वबोधिं, सूर्याभनामा भुवमभ्युपेतः।
भुक्त्वा ततः पल्यचतुष्कमायु—श्च्युतो विदेहेषु शिवं समेता ॥ १ ॥

॥ इत्यब्ददिनपरिमितहितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रंथस्य वृत्तौ द्वादशस्तंभे शताधिकनवसप्ततितमं व्याख्यानम् ॥ १७९ ॥

## ॥ शताधिकाशीतितमं व्याख्यानम् ॥ १८० ॥

अथोपासकवर्णनमाह—

गृहेऽपि संवसन् कश्चित्, श्रावको निःस्पृहाग्रणीः ।
कूर्मापुत्र इवाप्नोति, केवलज्ञानमुज्ज्वलम् ॥ १ ॥

स्पष्टः । ज्ञातमिदं—

दुर्गमपुरे द्रोणनृपः, तस्य द्रुमादेवी दयिता, तयोर्दुर्लभकुमारसुतोऽभूत् । स राज्ययौवनमदेन बहून-न्यकुमारान् कंदुकमिव व्योम्नि उल्लालयन् सदा रमते । अन्यदा तत्पुरोद्याने केवली समवसृतः । तं प्रति तद्वनयक्षिणी भद्रमुखी प्राग्भवपतिगतिं पप्रच्छ । ज्ञानी प्राह—'त्वत्प्राग्भवस्वामी एतत्पुरनृपस्य सुतो जातोऽस्ति' तच्छ्रुत्वा प्राग्भवरूपेण प्रलोभ्य कुमारं संहृत्य देवी स्वभुवने गता । देव्युक्तप्राग्भवं श्रुत्वा जातिस्मृत्या मिथः प्रेमभरोऽभूत् । देवी स्वशक्त्या तद्देहं सुगंधं स्वभोगयोग्यं चकार । तत्पितरौ तु गुरुज्ञानतस्तच्छुद्धिं लब्ध्वा क्रमेण दीक्षां जगृहतुः । अथ यक्षिणी अवधिना पत्यायुः स्तोकं मत्वा तत्रैव वने केवलिपार्श्वे मुमोच । तत्र—

"जह निंबसमुप्पन्नो, कीडो कडुअंपि मन्नए महुरं ।
तह सिद्धिसुहपरुक्ख, संसारे दुह सुहं विंति" ॥ १ ॥

इत्यादिदेशनां श्रुत्वा सभास्थनिजपित्रोः कंठे विलग्य विलपन् गुरुन्निर्बोधितः—

"जो भविउं मणुअभवं, लहिउं धम्मं पमायमायरई ।
सो लद्धं चिंतामणि-रयणं रयणायरे गमई" ॥ १ ॥

इत्यादिदेशनया देव्या सम्यक्त्वं कुमारेण च चारित्रं प्रतिपन्नं । क्रमेण कुमारस्तत्पितरौ च महाशुक्रस्वर्गं प्रापुः । यक्षिणी तु भ्रमरनृपस्य वेशालिकाख्या भार्या जाता । तत्र दंपती धर्मिष्ठौ शुक्रस्वर्गे जग्मतुः । ततश्च्युत्वा कुमारो राजगृहे महींद्रनृपभार्याकूर्मादेवीकुक्षौ अवतीर्णः, शुभवासरलग्ने प्रसवोऽभूत् । धर्मदेव इति नाम दोहदानुसारेण धृतं । प्राग्भवे बालानां पोट्टलं बद्ध्वा कंदुकं कृत्वाऽरमत, तेन वामनो द्विहस्ततनुरजनि । लोके कूर्मापुत्र इति नाम जातं । तारुण्ये बह्वयस्तरुण्यस्तं समीहंते, परं स्वयं मनसि विरक्तः । एकदा गण्यमानं श्रुतं मुनिमुखाच्छ्रुत्वा जातिस्मरणं लेभे, तेन ध्यानानलेन कर्मेंधनं दग्ध्वा केवलज्ञानं प्राप । 'यदि तावदहं चारित्रं गृह्णामि, तदा शोकेन पित्रोर्मरणं स्यात्' अतस्तयोः प्रतिबोधनकृते अज्ञातवृत्त्या गृहावासेऽस्थात् ।

यतः—

"कुम्मापुत्तो अन्नो, को धन्नो जो समायतायाणं ।
बोधत्थं नाणि ( णी ) वि हु, घरे ठिओ नायवित्ति ( त्ती ) ए" ॥ १ ॥

अत्रांतरे स्वर्गाच्चत्वारोऽपि च्युत्वा वैताढ्ये खेचरा जाताः । भुक्तभोगाश्चारणमुन्यंतिके प्रवव्रजुः, ते

महाविदेहे जिनं नंतुं गताः, देशनां ददतं प्रभुं नत्वा स्थिताः । तत्र चक्रवर्त्ती वैताढ्यादागतान् तान् प्रभुमुखाद्विज्ञाय पप्रच्छ—'स्वामिन् ! उत्कृष्टा विहरंतो जिनाः कतिधा भवंति ?' हे चक्रिन् !

"इह मणुअखित्तमज्झे, महाविदेहा हवंति पंचेव ।
इक्किक्कंमि विदेहे विजया बत्तीस बत्तीसं" ॥ १ ॥
"बत्तीसं पंचगुणिया, विजया सयं हविज्ज सट्ठिजुयं ।
भरहेरवय ( दस ) खेवं, सत्तरिसयं होइ खित्ताणि" ॥ २ ॥

एतेषु १७० क्षेत्रेषु १७० जिना विहरंतो लभ्यंते' । पुनः पप्रच्छ—'भगवन् ! संप्रति भरते चक्री केवली वा कोऽपि विद्यते न वा ?' । प्रभुः प्राह—'चक्रिन् ! भरते कूर्म्मापुत्रो गृहवासे केवली अस्ति, मातापितृबोधनार्थं गृहे एव स्थितोऽस्ति' । ततस्ते चारणाः पप्रच्छुः—'भगवन् ! अस्माकं केवलं कथं भावि ?' जिन उवाच—'युष्माकं कूर्म्मापुत्रसमीपे केवलं भविष्यति' इति श्रुत्वा ते चत्वारोऽपि तत्रागुः, मौनेन तस्थुश्च । तदा तेनोक्ताः—'यूयं श्रीजिनवचनादत्रागताः परं पूर्वभवस्वरूपं युष्माभिरित्थं समनुभूतं' । ते प्राग्भवान् श्रुत्वा जातिस्मृत्या क्षपकश्रेणिं ययुः, केवलं प्राप्य च तत्र जिनांतिके आययुः, केवलित्वाज्जिनमवंदित्वा तस्थुः । तदा इंद्रेण पृष्टः प्रभुः प्राह—'इमे चत्वारः कूर्म्मापुत्रमुखात् स्वानुभूतं भवस्वरूपं श्रुत्वा केवलिनो बभूवुः' । पुनरिंद्रः प्राह—'भगवन् ! कदा स दीक्षां ग्रहीष्यति ?' । प्रभुणोक्तं—'इतः सप्तमदिने भव्येण संयमं ग्रहीष्यति' । ततः कूर्मापुत्रो मातरं पितरं च प्रबोध्य केश-

लोचं चकार । देवैः स्वर्णपद्मं रचितं, धर्मवाण्याऽनेकान् प्रबोध्य शिवं साधयामास । जघन्यतो द्विहस्तदेहो नरः उत्कृष्टतस्तु पंचशतधनुर्मितदेहः सिद्धिं प्राप्नोतीति श्रुतौ ।

स्वर्णरूप्यमणिरत्नसंकुले, नृत्यगीततरुणीसमन्विते ।
यस्य मानसमवाप लुब्धतां, नेदृशोऽपि भुवने हि तं स्तुमः ॥ १ ॥

इत्युपदेशप्रासाद–टीका लक्ष्म्यादिसूरिणा । श्रीमद्विजयसौभाग्य–सूरिशिष्येण संस्तुता ॥ १ ॥
पंचदशभिरश्राभिः, स्तंभो द्वादशमः स्मृतः । अब्दाहर्मितशातेषु, अशीत्यग्रं शतं मतं ॥ २ ॥
प्रेमविजयादिनामा य–स्तस्य हि देशनाकृते । लिखितोऽयं प्रयत्नेना–चंद्रार्कं च चिरं जीयात् ॥ ३ ॥

॥ इत्यब्ददिनपरिमितहितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रंथस्य वृत्तौ द्वादशस्तंभे शताधिकाशीतितमं व्याख्यानम् ॥ १८० ॥

## ॥ समाप्तोऽयं द्वादशः स्तंभः ॥

